

**श्री ५ महाराजाधिराजैः वीरेन्द्रवीरविक्रम शाहदेवैः विश्व-संस्कृतप्रतिष्ठानेन मित्रराष्ट्रभारतदेशस्य दिल्लीनगरे १९८९ ईशवीयवर्षस्य मार्चमासस्य २५ दिवसे संस्कृताध्ययनपद्धति-निर्द्धारणाय समायोजिते विचारगोष्ठी-समुद्घाटन-समारोहे प्रेषितः सन्देशः**

१. संस्कृतस्य अध्ययनाध्यापनादिविषयम् अवलम्ब्य मित्रराष्ट्रे भारतदेशे मार्चमासस्य २५ दिवसे विचारगोष्ठी समायोजिता इति अवगम्य मोदते मदीयं चेतः। संस्कृतस्य पठनपाठनादिविकासः संस्कृतभाषानिबद्धेषु वेदोपनिषद्गीतादि-ग्रन्थेषु निहितानां मानवश्रेयस्कराणाम् आध्यात्मिकभावानां प्रचारे प्रसारे च साहाय्यं विधास्यति इति मन्ये।

२. ऐतिहासिकादपि कालात् संस्कृतभाषया राजकीयव्यवहारेषु प्रजाजनानां सामान्यजीवने च महत्त्वपूर्णं स्थानम् अधिगतम् इति संस्कृतभाषानिबद्धाः प्राचीनाः शिलाभिलेखाः हस्तलिखिताः ग्रन्थाश्च स्पष्टं प्रत्याययन्ति। तथैव तन्त्र-कर्मकाण्ड-साहित्य-दर्शनादि विविधविषयान् अवलम्ब्य संस्कृतभाषानिबद्धाः हस्तलिखित-निबन्धाः नेपालस्य गौरवान्वितायाः प्राज्ञिकपरम्परायाः सजीवं यथा स्यात् तथा सरक्षणे प्रदर्शने च साहाय्यं वितन्वानाः सन्तीति विभाव्यते।

३. भगवतः पशुपतिनाथस्य अनुग्रहेण गोष्ठी लक्ष्यप्राप्तौ पूर्णां सफलतां प्राप्नुयात् इति शुभं प्रार्थये।






शुल्कविवरणम्

आजीवन सदस्यता—

| | |
|---|---|
| शुल्कम् | १५०-०० |
| वार्षिकशुल्कम् | १५-०० |
| प्रत्यङ्कमूल्यम् | ५-०० |

मुद्रणस्थलम्

तारा प्रिंटिंग वर्क्स

कमच्छा, वाराणसी—२२१०००

विश्वसंस्कृतप्रतिष्ठानम् तस्य मुखपत्रम्

# विश्वभाषा

VISHVABHASHA

अन्ताराष्ट्रिया वैमासिकी संस्कृतपत्रिका

तृतीय वर्षस्य प्रथमाङ्कः बुद्ध पूर्णिमाङ्कः

## ❀ वन्दे संस्कृताम् ❀

डॉ० वीरभद्रमिश्रः

लक्ष्मणपुरम्

सहजां सरलां ध्वनि-गुण-भाविताम्
वेदैः पावितां संस्कृताम् ।
वन्दे संस्कृताम् ।

अर्थोदारां रसिककविकासिनीम्
शक्त-सुमधुरपद-गण-शोभिनीम्
रसदां मतिदां संस्कृताम् ।
वन्दे संस्कृताम् ।

विश्वैकत्व-प्रणयन-कारिणीम्
पूत-रुचिमय-हित-रसवाहिनीम्
सुभाविनीं दुरित-विदारिणीम्
स्वभारतीं स्वगरिमदायिनीम्
सुखदां वरदां संस्कृताम् ।
वन्दे संस्कृताम् ।

●

## ★ नियमाः ★

१-विश्वभाषायां सरलाः, सुबोधाः विवादादिरहिताः, मनोरञ्जकाः, ज्ञानवर्धकाः, संस्कृतस्य प्रचारे उपयोगिन्यश्चैव रचनाः प्रकाशतामर्हन्ति ।

२-लेखकैः स्वीयरचनाः पत्रस्यैकस्मिन् भागे स्पष्टतयालिखिताः टंकिता वा पूर्वं कुत्रचिदप्रकाशिता अप्रसारिता एव प्रेषणीयाः । सहैव स्वसंकेतयुक्तं पुटकं (पत्रालयचीटिकायुक्तम्) अपि प्रेषणीयम् । पुटकरहिता रचना अस्वीकृता सती परावर्तिता न भविष्यति ।

३-अत्र प्रकाशितानां सर्वासामपि रचनानां समस्तमप्युत्तरदायित्वं तदीयलेखकानामेव भविष्यति । पत्रिकापरिवारः एतदर्थमुत्तरदायी न भविष्यति ।

●

## स्थायिस्तम्भाः



## अस्मिन् अङ्के

# सम्पादकीयम्

'उत्सवप्रियः मानवः' इति पूर्वोक्तिः प्रायः सर्वेषां श्रवणे, पठने, कथने वा चलति। अयमुत्सवः महोत्सवतामपि धारयति। तथा महोत्सवाः अपि समाराज्यन्ते सर्वत्र।



पं० गुलाम दस्तगीरः

उत्सव-महोत्सवसमाराजनं नाम पाश्चात्यानुकरणमेव इति केचित् मन्यन्ते। तथा तेषां कथनं, मण्डनं चापि प्रकर्षेण चलति। परं वस्तुस्थितिः तथा नास्ति। उत्सवमहोत्सवसमाराजनस्य परम्परा अति प्राचीना तथा उदाहरणानि वैदिककालतः अपि समुपलभ्यन्ते। यज्ञादीनामुत्सव-महोत्सवानामुल्लेखाः अति प्राचीने ऋग्वेद इति ग्रन्थे अपि सविस्तरेण सन्ति। राजाधिराजमहाराज-परम्परा अपि अति प्राचीना। एतेषां शासनकालः अपि प्राचीन एव। एतेषां शासनकालस्य इतिहासे राज्याभिषेकादि महोत्सवाः प्रकर्षेण उपलभ्यन्ते। एतेषां महोत्सवानां वर्णनम् आलङ्कारिकरीत्या अपि कृतं विद्यते। वसन्तादि-उत्सवमहोत्सवानां प्रस्तुतिः अद्यापि महता गौरवेण गीयते। श्रीमद्भागवतपुराणे पर्वत-वन-पशु आदीनामपि उत्सव-महोत्सवाः महता वैभवेन सम्पद्यन्ते स्म इति बहुविधाः उल्लेखाः वर्तन्ते। एवमेव बहूनि उदाहरणानि दातुं शक्यन्ते। एतानि सर्वाणि उदाहरणानि सर्वश्रुतानि अपि सर्वत्र। तथापि पाश्चात्यानुकरणशीलाः पाश्चात्यानुकरणमेव पश्यन्ति। वेदादिग्रन्थाः अति प्राचीनाः, तत्रापि ऋग्वेदः तु अतिप्राचीनः, अखिले विश्वे च सर्वप्रथमः लिखितः ग्रन्थः ऋग्वेदः एव, तथा च ब्राह्मणारण्यकोपनिषदादि-ग्रन्थाः अपि अति प्राचीनाः इत्येतत्सर्वमेव पाश्चात्यविद्वद्भिः अपि सम्मतमस्ति। तथा तेषां पाश्चात्यानां कथनं लेखनञ्चापि चलति, तथा तत्सर्वं प्रकाशतामपि गतं वर्तते। तथापि पाश्चात्यानुकरणशीलाः पाश्चात्यानुकरणमेव सर्वत्र पश्यन्ति इत्येव विचित्रता अथवा विपरीतता अस्मान् दुनोति।

उत्सव-महोत्सवसमाराजनस्य स्वरूपाणि अपि भिन्न-विभिन्नानि। धार्मिक-सांस्कृतिक-शैक्षणिक-सामाजिक-साहित्यिक-राजकीयादिस्वरूपैः उत्सव-महोत्सवाः सम्पद्यन्ते सर्वत्र। संस्था-संघटनानामपि उत्सव-समाराज्यन्ते। एतेषां नामधेयानि अपि विलसन्ति तद्यथा वार्षिक-रौप्य-सुवर्ण-अमृतादि महोत्सवाः।

यथा संस्था-संघटनादीनाम् उत्सवमहोत्सवाः सम्पद्यन्ते तथा व्यक्तिविशेषाणामपि समाराज्यन्त। अत्रापि विशिष्टानि नामधेयानि तद्यथा वर्धापन-जयन्ती-पुण्यतिथि-दिनादि समारोहाः तथा एतस्मिन् वर्षे बहूनां व्यक्तिविशेषाणां जन्मशताब्दी समाराजिता भवति। अत्र एकैका व्यक्तिः नाम एकैका संस्था एव इति दृश्यते। अत्रापि अपवादात्मकाः केचित् व्यक्तिविशेषाः अपि सन्ति तथा संस्था-संघटनाः अपि।

अखिलभारतीयकांग्रेसपक्षः। अस्य पक्षस्य प्रारम्भकाले अपि कठोरवादः, मृदुवादः चेति द्वौ वादौ समारब्धौ। अग्रे च अस्य पक्षस्य सर्वजनप्रियनेता पं० जवाहरलालनेहरूमहोदयः। अयं दिवंगतः। तदा अस्य पक्षस्य अपि विभाजनं समारब्धम्। तथा विभाजनं जातम् एव। तथैव च डॉ० बाबासाहेब आम्बेडकर-

महोदयः। अनेन रिपब्लिकन पार्टी इति पक्षः संस्थापितः। अयं महानिर्वाणपदं गतवान्। ततः अस्य पक्षस्य अपि विभाजनं जातम्। एवमेव अन्यपक्षाणामपि स्थितिः इति कथयितुं शक्यते।

राजकीयपक्षाणां वा सामाजिकसंस्थानां वा विषये एव घट्यते वा घटितम् इत्येव नहि। धर्म-सम्प्रदायानां विषये अपि एवं कथयितुं शक्यते।

जैन-धर्मसम्प्रदायस्य प्रवर्तकाः वा संस्थापकाः वा महावीरवर्धमानमहोदयाः। एतेषां महानिर्वाणपदं गमनान्ते जैनधर्मे दिगम्बरः, श्वेताम्बरः इति पन्थद्वयं समारब्धम्। बौद्धधर्मस्य प्रवर्तकाः वा संस्थापकाः वा सिद्धार्थ-गौतमबुद्धमहोदयाः महानिर्वाणपदं गतवन्तः। ततः बौद्धधर्मे अपि हीनयानः, महायानः चेति पन्थद्वयं सञ्जातम्। येशूख्रिस्तमहोदयैः अपि ख्रिस्तधर्मस्य संस्थापनं कृतम्। एतेषामपि दिवं गमनान्ते कॅथॉलिकः प्रॉटेस्टन्टः चेति द्वौ सम्प्रदायौ समारब्धौ। इस्लामधर्मस्य संस्थापकाः हृ० मोहम्मद पैगम्बरमहोदयाः। एतेषामपि स्वर्गं गमनान्ते सुन्नी, सिया चेति द्वौ सम्प्रदायौ प्रचलितौ जातौ स्तः इति दृश्यते। तथापि पन्थोपपन्थमार्गेण पक्षोपपक्षमार्गेण धर्म-सम्प्रदाय-संस्था-संघटनानां कार्यं चलत्येव।

अस्माकं ज्ञानानुसारेण एकसंघात्मकत्वेन अद्यापि अत्र अस्ति राष्ट्रीय स्वयंसेवकसंघः। अस्य संस्थापकः डॉ० केशवराव हेडगेवारमहोदयः। अस्य अपि एतस्मिन् वर्षे जन्मशताब्दी तथा सर्वत्र समाराजिता अपि भवति। एतस्य महोदयस्य जन्म निर्धनिकपरिवारे। एतस्य बाल्यकाले भारतस्य स्वातन्त्र्यप्राप्तिविषये आन्दोलनं चलति स्म। एतस्मिन् आन्दोलने अयमपि महाभागः सहभागी भवति स्म। म० गान्धीमहोदयस्य सत्याग्रह-बहिष्कारादि-आन्दोलनेषु अस्य अपि सहभागः तथा कारागृहवासः अपि अनेन अनुभूतः। भारतस्य स्वातन्त्र्यप्राप्ति-आन्दोलनप्रसङ्गेषु अपि विशिष्टधर्मजातीयानाम् अनुनयः अधिकतया समारब्धः। स्वधर्म-स्वत्व-स्वाभिमानादीनां शून्यता एव समारब्धा। एतादृश्याम् अवस्थायां भारते भारतीयता एव न तिष्ठति। तदा किमपि चिन्तनीयमेव इति चिन्तनं समारब्धम्। अस्य चिन्तनस्य एव फलं नाम राष्ट्रिय स्वयंसेवकसंघः।

१९२५ इति ख्रिस्ताब्दे राष्ट्रिय स्वयंसेवकसंघस्य स्थापना जाता। २१ जून १९४० तमे दिनाङ्के डॉ० हेगडेवार महोदयस्य स्वर्गवासः अभवत्। ततः गोलवलकरगुरुवर्यः अस्य संघस्य प्रमुखपदे अर्थात् सरसंघचालकपदे आरूढः अभवत्। ततः अधुना मा० बालासाहेबदेवरसमहोदयः एतस्मिन् पदे विलसति। परम् अयं संघः अविभाज्यपदे एकसंघात्मकरीत्या स्थितः। अत्र कारणं किमिति चिन्तनान्ते एवमस्मदीयानां विचारः भवति यत् संघस्य सञ्चालनादिककार्यक्रमाणाम् आदेशादिकानि संस्कृते एव सन्ति। प्रातःस्मरणप्रार्थनादिकं सर्वं संस्कृते एव विलसति। तथा प्रत्यक्षं पठ्यते अपि। संस्कृतयुक्ता संस्कृतिः एव अत्र मूलमन्त्रः। संस्कृत-संस्कृत्योः न प्रदेशवादः वा प्रान्तवादः वा। सीमावादः तु अत्र औषधार्थमपि नास्ति। सीमावादः केवल विशाल भारत विषये एव। अत्र जातीयवादः नास्ति, स्पृश्यास्पृश्यवादः अपि नास्ति। संघस्य अद्यापि एक संघात्मकस्य कारणं संस्कृतमेव अस्ति इति मे मतिः। संस्कृताधारेण एकसंघात्मकता स्थीयते इति संघस उदाहरणदानेनापि स्पष्टं भवति।

अतः भारतस्य भारतीयतासंरक्षणे, भारतस्य एकात्मताभिवर्धने, सर्वधर्ममतसमन्वयात्मकसमभाव संवर्धने, कस्य अपि पक्षस्य, संघस्य कस्याः अपि संस्थायाः संघटनायाः च एकसंघात्मक विवर्धने, चिरस्थायि करणे च संस्कृतस्य एव मूलाधारः आवश्यकः भवति इति सत्यम् इति शम्।

(येषां महनीयानां व्यक्तिविशेषाणां जन्मशताब्दी अस्ति तेषां स्वतन्त्राः लेखाः अन्यत्र एतस्मि अङ्के विलसन्ति।)

—गुलाम दस्तगीर विराजदा

# सत्यवत्युत्पत्तिः

कृपासिन्धु शर्मा, पुराणविभागस्थः

धन्यास्ता मातरो यासां गर्भाद् बहुश्रुता मेधाविनो ब्रह्मवर्चस्विनस्त्रिकालज्ञास्तपस्विनश्च पुत्रा जायन्ते। एतादृशीसु मातृषु उपरिचरवसोः सकाशादद्रिकायां अप्सरायां जाता सत्यवती सर्वाग्रगण्याऽभूत्। या वेदव्याससदृशं पुत्रं जनयित्वा धन्यतां लेभे। अत्र तस्या जन्मवृत्तान्तं यथा महाभारते वर्णितं तदेवानुसृत्य संक्षेपेण किञ्चित् निवेद्यते।

आसीत् पुरा उपरिचरो नाम धार्मिको राजा। स च स्वतपसो महिम्ना चेदिविषयं जनपदमाकाशगं स्फाटिकं विमानं च इन्द्रात् संप्राप्य सर्वत्र रेमे। सर्वोपरि चरणात् तस्योपरिचर इति युक्तं नाम।

कोलाहलगिरितः शुक्तिमत्यां नद्यां जाता गिरिका नाम तस्य पत्न्यासीत्। कस्मिंश्चित्काले ऋतुकालमनुप्राप्ता सा पुंसवने शुचिः सती स्वकामकालं राज्ञे न्यवेदयत्। तदैव पितॄणां नियोगमनतिक्रमणीयं इति निश्चित्य स राजा पितुराज्ञया अतीवरूपसम्पन्नां साक्षादपरां श्रियमिव गिरिकां संस्मरन् मृगयां जगाम। तत्र वने रमणीयं वसन्तकालश्रियमनुप्राप्तं दृष्ट्वा कामसंतप्तस्य राज्ञः गिरिका संस्मरणाद् रेतः प्रचस्कन्द। मदीयमिदं रेतः मोघो न भवेदिति तद्रेतः पुटके संस्थाप्याभिमन्त्र्य च स राजा आरात् तिष्ठन्तं श्येनमाहूय अब्रवीत्—हे सौम्य! मत्प्रियार्थं मदीयमिदं शुक्रं गृहं नीत्वा मत्प्रियायै गिरिकायै प्रयच्छ। यतोहि अद्य तस्या आर्तवं विद्यते। तन्नृपस्य वचनं श्रुत्वा तद्रेतसः पुटकमादाय वेगेनाभिद्रवन्तं तं श्येनं आकाशे दृष्ट्वापरः श्येन आमिषशङ्कयाभ्यद्रवत्। ततस्तयोस्तुण्डयुद्धं प्रकुर्वतोस्तद्रेतः यमुनाम्भसि न्यपतत्। श्येनपादपरिभ्रष्टं तद् वीर्यं काचिन्नद्रिका नामाप्सरा या शापवशान्मत्स्ययोनिमनुप्राप्तासीत् तरसा जग्राह। तेन सा गर्भं च दधार। एकदा मत्स्यजीविनः तां मत्सीं जगृहुः। उज्जह्रुश्च तस्या उदरादेकां स्त्रियमेकं पुमांसं च। एवं मानुषौ जनयित्वा मत्स्यघातिना विशस्ता सा मत्सी स्वमत्स्यरूपं परित्यज्य दिव्यरूपाप्सराकाशे संजाता। मत्स्यजीविनोऽपि मत्सीगर्भाज्जातं तदद्भुतं मिथुनं राज्ञे उपरिचराय न्यवेदयन्। राजाऽपि तत्र जातं पुमांसं जग्राह। स मत्स्यनामा राजा अभूत्।

मत्स्यसगन्धिनी या कन्यासीत् तस्याः पालनार्थं तां दुहितृत्वेन दासाय दत्तवान्। काले प्राप्ते सर्वैः समुदितैः गुणैः सुसंपन्ना रूपवती सत्यवती नाम्नी सा पितरं शुश्रूषन्ती नावं वाहयन्ती यौवनमनुप्राप्ता। एकदा तीर्थयात्राप्रसङ्गेन परिक्रामन्महर्षिः पराशरः चारुहासिनीं रम्भोरुं दिव्यां वासवीं नावं वाहयन्तीं तां कन्यां दृष्ट्वाकामयत्। अभ्यभाषत् च—कल्याणि! मया सह सङ्गमं कुरु। ततः साब्रवीत्—भगवन्! पारावारे स्थिता महर्षयः आवयोः समागमं पश्यन्ति। एवं तयोक्तो भगवान् पराशरः नीहारमसृजत्। येन सर्वादिशः तमोऽभिभूता जाताः। महर्षेरेतादृशं चमत्कारं दृष्ट्वा सा विस्मिता व्रीडिता चाभवत्। तदनन्तरं सत्यवती पुनरुवाच—भगवन्! अहं पितृवशानुगाऽविवाहिता च त्वत्सङ्गमान्मदीयोऽयं कन्याभावो दुष्येत्। दूषिते च कन्याभावे अहं गृहे स्थातुं न शक्नोमि। एवं सञ्चिन्त्य यद् विधेयं तद् विधत्स्व। तच्छ्रुत्वा प्रीतिमानृषिसत्तम उवाच—कल्याणि! मत्प्रियं कृत्वा त्वं कन्यैव भविष्यसीति। अन्यच्च भीरु! स्वमभिकाङ्क्षितं वरं वृणीष्व मत्प्रसादो वृथा न भविष्यति। ऋषिणोक्ता सा उत्तमं स्वगात्रसौगन्ध्यं वृतवती। ततः प्रीता सा स्त्रीभावगुणभूषिता सती अद्भुतकर्मणा ऋषिणा संसर्गं चकार। ऋषेः वरप्रभावात् मत्स्यगन्धस्य विनाशात् सौगन्ध्यातिशयाच्च तस्या नाम गन्धवती जाता। यस्या गन्धं योजनमात्रं व्याप्तमासीत्। तदनन्तरं सैव सत्यवती यमुनाद्वीपे महाभागं पाराशर्यं महर्षिं व्यासं सुषुवे।

स च जातमात्रो मातरमनुज्ञाप्य तपस्येव मनो दधार। द्वीपे न्यस्तत्वात् स बालः द्वैपायनमभिधानमपि लेभे। स एव वेदान् विन्यस्य अष्टादशमहापुराणानि महाभारतं च निर्ममौ। महाभारतस्य युद्धे प्रारब्धे जाते सञ्जयाय स दिव्यदृष्टिं दत्त्वा सर्वमेव युद्धवृत्तं तद् द्वारा धृतराष्ट्रमश्रावयत्। वृत्ते च महाभारते पुत्रशोकेन सन्तप्ताभ्यां गान्धारीधृतराष्ट्राभ्यां दिव्यचक्षुः दत्त्वा गङ्गाप्रवाहे तत्पुत्रान् दर्शयामास।

# भारतवर्षे संस्कृतभाषाया अनिवार्यत्वं किमर्थम् ?

डा० भगीरथप्रसाद त्रिपाठी "वागीश शास्त्री"

निदेशकः, अनुसन्धानसंस्थानम्, सम्पूर्णानन्दसंस्कृतविश्वविद्यालयः, वाराणसी ।

( गताङ्कादनुवर्तते )

भारतवर्षात् प्रयाताया यूरोपीयादिषु प्रसृताया यायावर जिप्सीभाषाया प्रपूरणार्थको दुग्धार्थकश्च "दोश" इति शब्दः "दूस" शब्दस्य समानोदर्यः[1] । युगोस्लावियादेशीयैर्जिप्सीभाषाभाषिभिः स्वभाषयैव संलापो विहितः श्रीजवाहरलालनेहरूमहोदयेन सहेति ब्रानिस्लावनामको यूगोस्लावियादेशीयः संस्कृतच्छात्रो बोधितवानिदं मां मत्तः समधीयानः । एषैव संस्कृत-भाषा यूरोपादौ जिप्सीभाषात्वेन भारतवर्षे च हिन्द्यादिभाषात्वेन विपरिणता जिप्सीभाषा हिन्दी-भाषया प्रकामं सादृश्यं भजत इति हिन्दीभाषाभाषी जिप्सीभाषाभाषी चोभौ मिथो भावविनिमयं कर्तुं प्रभू ।

संस्कृतभाषाया भारतीयभाषासु (मध्यकालिकीषु वर्तमानकालिकीषु) विपरिणतेरस्तीतिहासात्मिका सुदीर्घा शृङ्खला मैक्समूलरमतानुसारेण—"स्व-बहु-सन्तानोत्पादनानन्तरमप्येषा लैटिनभाषावन्नोपरता, तथा चेदानीमपि शिक्षितो ब्राह्मणो हिन्दी-बंगलाप्रभृति, भाषापेक्षया संस्कृतभाषा-लेखने निर्बाधं व्यापारयति स्वकीयां लेखनीम् । संस्कृतभाषाया अद्यापि तादृश एव सम्मानो यादृश एलेग्जेण्ड्रियास्थाने समजनि ग्रीकभाषायाः । संस्कृतभाषाया अद्यापि तादृश्येव प्रतिष्ठा यादृशी मध्ययुगे लैटिनभाषायाः समभवत् ।"

संस्कृतभाषा सर्वतःप्रथमं पालीभाषां समुद-पोषयत् । पालीभाषामयेषु सत्स्वनेकग्रन्थेषु महाराजाशोकशिलालेखा इहोत्तमं निदर्शनम् । उक्त कालात्प्रभृति भारतीया आर्या अनेकोपभाषाभिर्व्यव-हर्तुमारेभिरे । तासां वैदिकसंस्कृतभाषया तादृश एव सम्बन्धो ज्ञेयो यादृशो लैटिनभाषया सह इतालवी-भाषायाः । भारतवर्षस्य विभिन्नेषु प्रदेशेषु विभिन्ना उपभाषा भाष्यन्ते स्म । सम्राडशोक-शिलालेखा बहुषु प्रदेशेषु सन्ति समुत्कीर्णा इति ज्ञायन्ते केचनोप-भाषाः । सिंहलद्वीपीयबौद्धधर्मभाषात्वेन वयमासां स्थानीयोपभाषाणां विकासं समधिगच्छामः ।

एताः स्थानीयोपभाषाः प्राकृतभाषात्वेन संस्कृत-भाषीयनाटकेषु जैनानां धर्मपुस्तकेषु च पुनरुपलभ्यन्ते । एतासु भाषासु कानिचन काव्यान्यपि प्रणीतानि सन्ति । भारतवर्षस्य विभिन्नानां विजेतॄणां भाषा-शब्दाः प्रविष्टा इत्यासु पर्सियन्-अरबिक-मंगोलियन-तुरुष्कादिभाषाणां शब्दा वाक्शैल्यश्चोपलभ्यन्ते इत्यपि पश्यामो वयम् । एतासामुपभाषाणां च विकासरूपतया हिन्दी-(हिन्दुस्तानी)-मराठी-बँगला-प्रभृतयो भाषाः समुद्गताः । अस्मिन् कृत्स्ने विकासकाले न विलोपितमस्तित्वं स्वीयं संस्कृतभाषया । साहित्यिक-भाषात्वेन स्वीयमस्तित्वं रक्षन्त्या तया स्वकीया संततयोऽपि पोषिताः । ऐशवचतुर्थशताब्द्याः प्रभृति त्रयोदशशताब्दीं यावच्चान्द्रादीनां नवनवानां व्याकरणानां रचना सञ्जाता । इङ्गति संस्कृत-भाषोपादेयतामेषा । त्रयोदशशताब्दीकस्य संक्षिप्तसार-व्याकरणस्यान्ते परिशिष्टरूपेण प्राकृतभाषा-व्याकरणमपि संदृब्धम् ।

( क्रमशः )

1. तद्धितान्ताः केचन शब्दाः—डा० भगीरथप्रसाद त्रिपाठी, ५–७ पृ०, (मोतीलाल-बनारसी दास, वाराणसी) ।

**संस्कृतकथा**

# विपादिका

**त्रिपाठी यमुनेशः 'चातकः'**
प्रवक्ता—दर्शनविभागे सां० वे० म० वि०, नरवर, नरोरा/बुलन्दशहर

"त्वया कथं न स्वीकृतो वीरेशः' ? अस्मत्कार्यालयस्यातीवविश्वासभाजनभृत्यस्य सोऽस्ति पुत्रः। भृत्येन भृशं प्रार्थितेन मया त्वद्गार्हस्थ्यकर्मसौविध्यसम्पादनार्थं सोऽत्र प्रेषितः। परं तमस्वीकृत्य जानीहि त्वं तव च कार्यम् !"

"गृहकर्मणि पुरुषः कीदृशो भवेत्"

"पुरुषः ? द्वादशवर्षदेशीयोऽसौ बालकः पुरुषोऽस्ति ! शिक्षितापि त्वं मूर्खतामाचरसि ?"

"परन्तु…………"

"नहि परन्तु, याम्यहम्। अद्य चतुर्वादने सः पुनरागमिष्यति। तदा यादृशी तवेच्छा, क्रियताम्।"

गते सति पत्यौ कार्यालयं 'नीरजा' तस्मिन्नेव सामान्यकक्षे (common room) समुपविष्टा सती किञ्चिद्ध्यानमग्नाभूत्।

आषाढमासस्यासीन्मध्याह्नः। गगने मसृणाः सघनाः पिण्डीभूताञ्जनचूर्णसदृशा मेघा इतस्ततः परिचरन्तो निजेन कादाचित्केन मधुरगम्भीरगर्जनेन हठाच्चेतः समाकृष्य कम्पयन्ति स्म। मध्ये मध्ये मन्दः समीरः शरीरे रोमस्फूर्तिं कर्त्तुम् क्षम आसीत्। नीरजाया निवास उद्यानेन परिवाष्टितो भूत्वा रमणीयतरः प्रतिभाति स्म। समस्ताधुनिकसामग्रीभिः समुल्लसितोऽयं तस्याः सामान्यकक्षोऽद्य यदा बहिरुद्याने मेघं विलोकयन्तः प्रहर्षिता मयूराः केकां कुर्वन्ति तदा मनोऽकस्मादेवोत्फुल्लतामनुभावयति स्म। नारजैकाकिन्यासीत् साम्प्रतम्। तस्याः परिणयस्य गतेष्वपि चतुर्षु वर्षेषु किञ्चिदपि दोहदलक्षणं तया न धृतम्। पतिर्नवीन आसीत् आई० ए० एस्० अधिकारी। जिलाधीशपदे नियुक्तो भूत्वा सः प्रथममिदमेव नगरमागतः। यद्यपि द्वयोर्वयः षड्विंशतिः अष्टाविंशतिश्चासीत् तथापि सर्वकारीयां परिवारकल्याणिकीं समुद्घोषणामनुसरद्भ्यां सर्वविधसुशिक्षिताभ्यां ताभ्यां सन्तानोत्पत्तिः सुखभोगे विघ्नत्वेन स्वीकृत्य न महत्त्वाय ख्यापिता।

सा बहिरुद्यानश्रियं विलोकयन्ती किञ्चित् क्षणानन्तरं जृम्भाजालजाटिल्यमनुभवन्ती निद्रिता जाता। प्रायः एव जनो मानसिक प्रातिकूल्ये निपतितः प्रथमन्तु स्वापमेव नाप्नोति। कदाचिच्चेत्किञ्चिदंशेनैव सुप्तिः सनाथीकरोति तदार्धसुप्तावस्थैव स्वप्नं द्रष्टुं बाधते। स्वप्नोऽपि पुनः कीदृशः ? बुभुक्षितो भोजनमेव पश्यत्येवमेव नीरजापि स्वप्नसंसारं गत्वा खिन्नहृदयत्वात् पूर्णमेव परिणयात् पूर्वकालिकं जीवनं साक्षात् कर्त्तुं प्रारभत।

धन्योऽयमस्माकं ग्रामः। यत्र ब्राह्मणाः, क्षत्रियाः, वैश्याः, शूद्राश्च सर्वे सस्नेहं परस्परं भावयन्तो निवसन्ति। स्वे-स्वे कर्मण्यभिरतः कोऽपि किञ्चिदपि न्यूनाधिकं न वदति। साम्प्रतिकेऽस्मिन् विघटनप्रधानेऽपि काले तत्र कीदृशो मधुरो व्यवहारो यद् वयं स्वकीयवर्णाद्भिन्नवर्णजातानपि जनान् पितामहपितामहीपितृव्यपितृस्वसाभगिनीत्यादिभिरेव सम्बोधनैः सम्बोधयन्तो व्यवहरामः। कस्यापि गृहं गन्तुं नासीत् तथैव कोऽपि प्रतिबन्धो यथा सरो, वापिकां, वाटिकां, विद्यालयं, क्षेत्रं, दोलामुत्सवं मेलापकादिकञ्च। कस्या अपि विवाहसंस्कारे कथं वयं सर्वाः जातिवादं विस्मृत्य

# तपेदिक के विरुद्ध अभियान

1. यदि आपको लगातार दो हफ्तों से भी अधिक समय से खांसी है या थूक में खून आता है, तो हो सकता है, आपको फेफड़ों की तपेदिक हो।

2. अपने नजदीकी प्राथमिक स्वास्थ्य केन्द्र, औषधालय या तपेदिक केन्द्र पर स्वयं की, विशेष कर अपने थूक की, जांच कराएं।




3. तपेदिक का इलाज किया जा सकता है, बशर्ते डाक्टर द्वारा बताई गई दवाइयां नियमित रूप से निर्धारित अवधि तक ली जाएं।

4. बचाव हमेशा इलाज से बेहतर है। इसलिए अपने बच्चे को बी.सी.जी. का टीका लगवाएं।



केन्द्रीय स्वास्थ्य शिक्षा ब्यूरो (स्वास्थ्य सेवा महानिदेशालय)
स्वास्थ्य और परिवार कल्याण मंत्रालय,
कोटला रोड, नई दिल्ली- 110002

davp 88/318

सम्मिलिता भवामः। ममैव परिणये सखीनां कीदृश आसीत् समवायः। इयमपि रामा मदीया यादवजातौ जाता बाल्यसखी! अहो! यस्याः जीवनं सर्वमेव विधिगत्या दूषितम्। अस्याः माता इमां मह्यं समर्प्य दिवंगता। समर्पणस्यापि कथा सुमहद्दुःखदैव।

यदेयं द्वादशतमं वर्षमतीत्य जीवनस्य त्रयोदशतमं वर्षं स्प्रष्टुं गच्छति स्म तदैवास्याः पिता दुग्धं विक्रीयापणादागच्छन् 'मोटर' दुर्घटनया विक्षतः पश्चाच्चिकित्सालयं नीयमानस्तत्रैव, महाप्रयाणं कृतवान्। द्वौ भ्रातरौ तु पितुः प्रागेव शीतलाप्रकोपवशाद् दिवंगतौ। वराकी अस्याः जननी भूत्वानाथा मन्मातुः सान्त्वनावाक्यैः शान्तिमलभत तस्याश्च साहाय्येन जीवनं धारयन्ती जीवति स्म।

अस्याः रामाया मद्वयोऽस्ति यद्यपि वर्षद्वयमधिकं तथापि सहैवावां क्रीडावः स्म। तदाहं दशम्यां कक्षायामासम्। विद्यालयादागत्याहं तया सार्थं खेलन्ती भ्रमन्ती च समयमपि न वेद्मि यत् कथं कुत्र याति। अस्माकं परस्परं प्रीतिं दृष्ट्वैतस्या माता मत्कथनेन स्वकीययादवजातीयां बाल्यविवाहप्रथामत्रोटयत्।

सुस्मृतास्ते दिवसाः। यदोभे मातुर्विपादिकामनुरञ्जनार्थं नखरञ्जिन्याः पत्राणि चिनुवः। तदा तु परस्परं हासपरिहासमित्थमासीदावयोः—

रामा कथयति स्म—"भगिनी,! कीदृशीयं नखरञ्जिनी! यदौषधमपि सौन्दर्यप्रसाधनमपि ग्राम्यमहिलाः पादविपादिकाव्याजेन रागरञ्जिताः भवन्ति।"

अहं तस्याः कथनं श्रुत्वा कथयामि स्म—"रामाः, तव तर्कस्तु समीचीनः। परमस्माकं मात्रा सदृश्यो वृद्धा नार्यस्तु औषधमेव कृत्वा नखरञ्जिनीं गृह्णन्ति।"

"परन्तु या विपादिकाग्रस्ताः न सन्ति ताश्चेद् रञ्जयन्ति तया हस्तादीन्?"

"तत्तु निश्चितमेव सौन्दर्यप्रसाधनम्।"

"वयमपि प्रसाधयामो नखरञ्जिन्या प्रसाधिताः सत्यः?"

"अथ किम्! किं त्वं न जानासि, प्रसाधनं सर्वेषां प्रियम्! स्त्रीणां तु सातिशयम्।"

"मया श्रुतं यदेवं नखरञ्जिन्यादिप्रयोगेन सौभाग्यं वर्धते समुत्कण्ठते च चेतः।"

तदाहं तां चीट्कृत्य (चिकोट काटकर) तूष्णीभावं प्राप्तुं कथयामि स्म। परन्तु सा पुनर्मामवहेल्येमां कज्जलिकां मन्दस्वरेण गायति—

"हमें मेहदी मगा दा मोतीझील से
जा के सायकिल से ना।
ई है सावनी बहार
मत बढ़ावऽ तकरार
काम चली नाहीं कउनो दलील से। जा के सा····
जा के मेहदी लिआवऽ
छोटी ननदी से पिसावऽ
हमरे हथवा में लगादा काटा-कील से। जा के····

एवमावां विविधकार्यं कुर्वः स्म। सा कथयति स्म भगिनि; तव माता तु समृद्धिसम्पन्नास्ति तथापि तस्याः पादयोर्विपादिका विवृता भवति। वयं तु निर्धनाः परन्तु न मातुर्न वा ममैव पादयोर्जायते विपादिकेयम्। कदाचित्तवापि·········इत्युक्त्वार्धमेवोच्चैर्हसति स्म सा।

एवं क्रमशो निजगतिमनुसरता भगवता कालेनोच्चशिक्षार्थं मम मातुलस्य पार्श्वे देहलीनगर्यां गमनं तस्याश्च विवाहादिकं कारितम्।

तावदुच्चैस्तडिन्निपातनकारि घनगर्जनमभूत्। नीरजा प्रबुद्धा जाता। तस्याश्च सम्पूर्ण एव सुमधुरः स्वप्नो विशीर्णतां प्रापत्।

सान्यमनस्कभावेन पर्यङ्के समुपविष्टैवासीत्तावद् बहिर्द्वारि स्थितेन केनचिदावाहनघण्टिका वादिता। सा द्वारमुद्घाट्यापृच्छत्—

"कस्त्वम्? कुत आयातः?"

"साहबेन भवत्याः पार्श्वे गृहकर्मसम्पादनार्थं सम्प्रेषितो वीरेशनामधेयोऽस्मि।"

"कथम्? साहबेन तु चतुर्वादने त्वदागमन-मुक्तम्।"

"आम्, स्वामिनि! परन्त्वद्य कस्यापि लिपिकस्य निधनं जातमतः कार्यालयः सम्पूर्णश्च विभागोऽवकाशीकृतो दुःखितेन साहबेन।"

"साहबः कथं न समागतो गृहम्।"

"सः सर्वैः कर्मचारिभिः सह तस्य मृतस्य लिपिकस्य परिवारजनेभ्यः सान्त्वनां प्रदातुं गतः।"

"उपविश त्वमथवा याहि पश्चादागच्छेः।"

सः नमस्कृतिं नीरजायै समर्प्य प्राचलत्।

बहिर्मन्दं मन्दं प्रवहति स्म समीरः। मेघाच्छन्न-त्वाद्गगनस्य तमोव्याप्तमिवासीद् वातावरणम्।

साचिन्तयद् यद् वृथैव मया बालकः प्रेषितो बहिः। वर्षा चेद् भवेत्! पुनस्तस्याः ध्यानं स्वकीय-पत्युरागमनं प्रति गतमतः स्वल्पाहारादिकं निर्मातुं सा मनः कृत्वा पाकशालां गन्तुं चुम्बति स्म प्रवृत्ति तावदाकाशात् पट् पट् पट् पट् इति शब्दैर्वर्षाबिन्दवः पतितुमारब्धाः।

नीरजा बहिः रज्जौ प्रसारितानि वस्त्राणि समेकीकुर्वती तमेव दृष्टं स्वप्नं विचिन्तयन्ती पुनः सामान्यकक्ष एव समागत्योपविश्य च शोचितु-मारब्धा—

'कीदृशमस्ति रामायाः जीवनम्! अस्या अपि पतिः राजकीयकोषागारे लिपिकपदमधिरूढोऽस्ति। विवाहस्तु मन्मातुः सहयोगेन, तस्याः पतिमर्म मातुलस्य ग्रामवास्तव्य आसीदेतस्मात् सोल्लासं सम्पन्नः। विवाहसमयेऽहं मातुलस्य पार्श्व एव एम्० ए० परीक्षायां संल्लग्ना सम्मिलिता भवितुमशक्तासम्। परन्तु गृहं गते सति मयापि तस्यै उपहारः प्रदत्तस्त-स्मिश्चोपहारे नखरञ्जिन्याः एका कर्गजपोट्टालिका सविशेषं सहासं प्रदत्ता। रामाया जननी अतीव-प्रसन्नासीत्।

परन्तु वर्षचतुष्टय एव सर्वमसमञ्जसं जातम्। सन्तानकामी तस्याः पतिरधिकां प्रतीक्षामकृत्वा तत्रैव कोषागारे लिपिकपदे नियुक्तया कयाचित् सह प्रेम-विवाहसूत्रे समाबद्धो भूत्वेमामत्यजत्।

वृत्तेनानेन रामाया मातरि वज्रमिवापतत्। अन्तर्विपच्यमाना सा मत्परिणयस्य मासद्वयात् पूर्वमेवेमां रमां मह्यं समर्प्य दिवंगता।

अथेदानीमियं वराकी गृहकर्मसम्पादयितृरूपेण मया सहैकवर्षादारभ्य सम्बद्धा। अनेनापि मत्पति-महोदयेन पूर्वं तु तस्याः नियुक्तिर्मत्कथनानुसारं गृह-सेविकापदे कृता। साम्प्रतं न जाने कस्मात्तां प्रति कापि दया न विद्यते स्वामिनो हृदये। यद्यपि ततो निःसृता सती ग्रामं गत्वा जीवनयापनं करिष्यति। परन्तु बालसख्यानया सह सम्बद्धा............।'

आवाहनघण्टिका पुनर्निनादमकरोत्। नीरजा द्वारमुद्घाटितवती।

"कथं त्वया वीरेशोऽयं कस्मान्न निरुद्धः? त्वमीदृश्यस्यकरुणा यद्वर्षायामेवायं प्रेषितः।"

पत्युर्वचनमाकर्ण्य तच्च दूरीभूय पार्श्वस्थितं बालकं विलोक्य-सा किञ्चिदनुक्त्वैव पत्या सह सामान्यकक्षे समागत्योपाविशत्।

"किं निर्णीतं त्वया! गृहकर्मकर्त्तुर्भृत्यपदेऽस्य नियुक्तिः करणीया वा न वा।"

"रामा त्वस्त्येव। पुनः कावश्यकतास्य।" सामान्यरीत्यैवाकथयत् नीरजा मन्दस्वरेण।

"रामायाः को विश्वासः! सा किं करिष्यतीति को जानाति अद्यैकसप्ताहात् सानुपस्थिता वर्तते। मया तु किञ्चिदन्यदपि श्रुत तत्सम्बन्धे।"

"भवानेवमेव शृणोति। वराकी सा पादविपादि-कया पीडिता साम्प्रत चलितुमप्यशक्तास्ति। परन्तु भवान् तामविश्वस्तां कथयति।"

"अद्यावधि पर्यन्तं सा त्वत्कथानुसारमेव त्वद्-ग्रामादानीय मयात्र भृत्यपदे नियुक्ता। कदाचित् प्रागप्यविश्वासपात्रीकृता?"

"इदमेवाहमपि शोचामि यद्भवतो भावपरावृत्तेः को हेतुः?"

"हेतुस्तु स्पष्टमेव ! अस्मात् पूर्वं कदाचिदपि तया किमियान् दीर्घावधिः कार्याद् विरामीकृतः ?"

"परन्त्वयं तु प्रथमावसरो यत् सा विपादिकया पीडिता।"

"किं त्वया दृष्टा तस्या विपादिका।"

"मया प्रथम एव दिवसे दृष्टा। एतानि दिनानि यावत् तु साऽत्रागतैव नहि। परं मया स्मर्यते तद् दृश्यं यदा मम मातानया पीडिता सती दशदिवसान् यावत् किञ्चित् कर्तुमक्षमा भवति स्म।"

"तव माता वृद्धासीदियन्तु युवती। विपादिका त्वत्रानागमनस्य व्याजमात्रम्। एतस्मान्मयायं बालको नियोज्यते।"

"परन्त्वहं पञ्चदशदिनानि यावत् तां प्रतीक्षिष्ये। पुनर्भवान् यथा कथयिष्यति, करिष्यामि।"

"नीरजे, त्वं नार्यसि। शिक्षिता सत्यपि नारीस्वभावेन ग्रस्तासि। रामा तवास्ति विश्वासपात्रम्, बाल्यसखी, त्वदर्थे च न्यासीभूतेति सर्व एव त्वद्भ्रमो वृथा भविष्यति यदा श्रोष्यसि त्वं यत् सा केनचित् 'बस' चालकेन प्रेमपरिणयसूत्रे निबद्धा सती कलिकातानगरं गता। पुनः शीघ्रं कस्यापि भृत्यस्यानुपलब्धेः स्वयमेव बहुकालं यावद्गृहकार्यं करिष्यसि।"

"असत्यमिदम् मत्सख्याः सम्बन्धिलाञ्छनम्। इदं सर्वमनृतवृत्तं विरचितं भवतः कार्यालयीयैश्चतुर्थवर्गीयैः कर्मचारिभिः केवलं स्वकीयकार्यं सम्पादयितुमस्य च बालकस्य नियुक्त्यर्थम्। मत्सखी गङ्गेव पूतचरितास्ति। तया सह एकवर्षात् पूर्वं स्वर्गताया ममापि जनन्याः सुखदुःखस्मृतयः सम्बद्धाः सन्ति। अहं सर्वमेव स्वीयं गृहकार्यं करिष्यामि परं सख्याः स्थाने कस्यापि नियुक्तिं न सहिष्ये। अहो! कीदृङ्निष्ठुरं जगत्! सत्यमेवोक्तम्—'जाके पाँव न फटी बिवाई। सो का जाने पीर पराई!'

नीरजा सर्वमेवैकपदे प्रोच्योद्विग्नाक्रुष्टोष्णपेयादिकं निर्मातुं पाकशालामगच्छत्।

बहिश्च गगनं शनैः शनैर्मेघमुक्तं भवति स्म।

□

---

## श्री अरविन्दप्रशस्तिः

**प्र० डी० उमा देशपांडे,**
पटपत्तनम्

मेधावी ब्रह्मज्ञानी च क्रियावान् स च पण्डितः। माननीयः सदा पूज्यः, अरविन्दो महामनाः ॥१॥
येन दृष्टं परं तत्त्व सन्मयं सप्रकाशकम्। ज्ञानयोगी स्थितप्रज्ञः, अरविन्दः सदात्मकः ॥२॥
आनन्दोऽमृतः शान्तः शीतांशुरिव निर्मलः। अरविन्दसमो योगी न भूतो न भविष्यति ॥३॥
वन्दनीया सदा यस्य श्रीमाता परमेश्वरी। मातृदेवो महायोगी, अरविन्दो जगत्प्रभुः ॥४॥
क्रान्तदर्शी कविश्रेष्ठः सावित्रीमन्त्रगायकः। प्रज्ञा ऋतंभरा यस्य, अरविन्दो महामुनिः ॥५॥
जन्मभूमिसुपुत्रोऽयं भारते भाति भानुमान्। चिरंजीवी कर्मयोगी अरविन्दः सदाश्रयः ॥६॥
वन्दामहे वयं सर्वे, अरविन्दं समातृकम्। अस्माकं तारकं नित्यं कल्याणं सर्वमङ्गलम् ॥७॥

# RASHTRIYA PANCHANG

## for 1911 S. E. (1989-90 A. D)

### Issued by Government of India in 13 languages viz : English, Sanskrit, Hindi, Urdu, Bengali, Oriya, Telugu, Tamil, Malayalam, Kannada, Marathi, Gujarati, and Assamese

The Rashtriya Panchang is based on the National Calendar of India with Saka Era (1911 S. E. starts from 22 March, 1989). The timings of moonset, tithis, nakshatras, yogas and transits of Moon into Nirayana Rashis and Nirayana longitudes of the Sun, the Moon and the planets in this publication have been calculated with a computer and are based on modern scientific principles. The Rashtriya Panchang gives authentic festival dates of all communities of the country. It contains accurate data on daily longitudes of Sun, Moon and Planets and also other important information required by astronomers, panchang makers and general public for their day to day use.

*AVAILABLE FROM :*

* **The Director,**
  Positional Astronomy Centre
  India Meteorological Department,
  P-546, Block 'N' (1st floor),
  New Alipore, Calcutta-700053
  (Telephone : 45-0321).
* **The Controller of Publications,**
  Civil Lines, Delhi-110054.
* **Government of India Kitab Mahal,**
  Baba Kharak Singh Marg,
  New Delhi-110001.
* **Government of India Book Depot,**
  8, K. S. Roy Road,
  Calcutta-700001.
* **Director General of Meteorology,**
  Mausam Bhavan, Lodi Road,
  New Delhi-110003.
  and other agents selling
  Government of India Publications.

Buy Your Copy Today
Price Rs. 5/- Per Copy
Postage 20% of cost extra.
For order worth Rs. 10/- or more no extra payment to be made towards postage.

# भाषाविज्ञानदृष्ट्या अर्थपरिवर्तन-प्रक्रियाया समीक्षणम्

डॉ० मुरारजी त्रिपाठी
सं० सं० वि० वि०, वाराणसी

भाषायामर्थस्य स्थानं महत्वपूर्णमस्ति। भाषा-शरीरे अर्थः आत्मरूपेण विराजते। अर्थविरहितः शब्दः प्रलापश्रेण्यामेव आयाति। महाकविः कालिदासः वाण्या साकमर्थस्य महत्तरं सम्बन्धं द्योतयन् कथयति—"वागर्थाविव संपृक्तौ वागर्थप्रतिपत्तये" इति। तर्हि को नाम अर्थः तस्य किं स्वरूपमित्याकांक्षायां वाक्यपदीयकारः भर्तृहरिः ब्रूते—

यस्मिंस्तूच्चरिते शब्दे यदा योऽर्थः प्रतीयते।
तमाहुरर्थं तस्यैव नान्यदर्थस्य लक्षणम्॥

किन्तु अर्थः शब्दाश्रित एव इति प्रतिपादयन् हरिः कथयति—

षड्जादिभेदः शब्देन व्याख्यातो रूप्यते यतः।
तस्मादर्थविधाः सर्वाः शब्दमात्रासु निश्रिताः॥[1]

तथाऽपरेप्याहुः—

वागेवार्थं पश्यति वाग् ब्रवीति
वागेवार्थं निहितं सन्तनोति।
वाच्येव विश्वं बहुरूपं निबद्धं
तदेतदेकं प्रविभज्योपभुंक्ते इति॥

अनेन प्रतीयते यत् शब्दोच्चारणेन यस्य प्रतीतिः भवति स खलु अर्थपदाभिधेयः इति।

परिवर्तिनि संसारे सर्वत्र परिवर्तनमवलोक्यते। भाषायामपि यथाकाले परिवर्तनं दृग्गोचरी भवति। यद्यपि वैयाकरणानां दृढम्मतमिदमस्ति यत् शब्दास्तु अनादिनिधनाः भवन्ति। किन्तु भाषाविज्ञानदृष्ट्या भाषायाः अध्ययनेन इदं ज्ञातं यत् यथा भाषायाः बाह्यस्वरूपे परिवर्तनं भवति तथैव तस्यार्थेऽपि परिवर्तनं भवति। यथा वैदिककाले संस्कृतभाषायाः यत् स्वरूपमासीत् न खलु तत् स्वरूपं पुराणकाले अवलोक्यते। तत्र खलु महान् भेदः अक्षिलक्ष्यी भवति। तयैव रीत्या शब्दानामर्थेऽपि परिवर्तनं भवति इति तु निश्चप्रचम्। एकस्य शब्दस्य एकस्मिन् काले यः अर्थो भवति परवर्तिकालेऽपि तच्छब्दस्य स एव अर्थः भविष्यति इति न कोऽपि वक्तुं शक्नोति। अर्थपरिवर्तनस्य इयं स्थितिः अर्थविकासोऽपि कथ्यते। अर्थविज्ञानस्य स्वनामधन्यो विद्वान् "ब्रील" महोदयः अर्थविकासस्य तिस्राऽवस्थाः समुपवर्णितवान्।

१. अर्थविस्तार (Expansion of meaning or widening)।

२. अर्थसंकोचः (Contraction of meaning or narrowing)।

३. अर्थादेशः (Transference of meaning)।

**१. अर्थविस्तारः** (Expansion of meaning or widening)—

यदा कोऽपि शब्दः स्वक्षेत्रातिरिक्तं व्यापके अर्थो प्रयुक्तो भवति तदा स अर्थविस्तारेण अवबोध्यते। तद्यथा 'तैल' शब्दः प्राक्काले तिलस्य विकारः तैलम्, आहोस्वित् तिलेषु भवः तैलम् इत्यर्थे प्रयुक्तो भवति स्म। किन्त्विदानीं तु अस्य प्रयोगः व्यापके अर्थो भवति। पृथ्वीगर्भात् निसृतः ज्वलनशीलः द्रवः (किरासिन) अपि मृत्तिकातैलपदेन बोध्यते। एवं रीत्या सादृश्यसाहचर्यसामीप्यादिकारणेन अर्थविस्तारो भवति। अर्थविस्तारस्य उदाहरणरूपेण अधोलिखितशब्दाः निदर्शनरूपेण परिगणिताः सन्ति। तद्यथा—

१. वाक्यपदीयम् / ब्रह्मकाण्ड / का ११९

| शब्दः | मूलार्थः | अर्थविस्तारः |
|---|---|---|
| १. मण्डपः | ओदन निसृतस्य मण्डस्य पानकर्ता | उत्सवेषु परिवेष्टितम् वस्त्रगृहम्, कुटीरं वा |
| २. कुशलः | दर्भानयनकर्ता | दक्षः |
| ३. प्रवीणः | वीणा वादने निपुणः | निपुणः |
| ४. देवानां प्रियः | देवानां प्रेम भाजनं | मूर्खः |

एवं रीत्या 'कुमारी' शब्दः प्राक्काले पंचवर्षीयायाः कन्यायाः कृते प्रयुक्तो भवति स्म। तद्यथा—'वयसि प्रथमे'[1] इति सूत्रस्य टीकायामुट्टङ्कितं विद्यते—

कौमारं पञ्चमाब्दान्तं पौगण्डं दशमावधि।
कैशोरमापञ्चदशाद् यौवनं तु ततः परम्॥

किन्त्विदानीं तु विवाहान्तं स्त्री कुमारीपदेनैवाभिधीयते। सा वृद्धापि भवेत्तदापि तस्याः कृते 'कुमारी' शब्दस्य प्रयोगः प्राचुर्येणेदानीं दृश्यते।

**२. अर्थसंकोचः** (Contraction of meaning, narrowing)—

यदा कोऽपि शब्दः पूर्वं विस्तृतक्षेत्रे प्रयुक्तो भवति स्म किन्तु शनैः शनैः तस्य प्रयोगः संकुचिते अर्थे भवति, एतादृक् शब्दः अर्थसंकोचश्रेण्यामायाति। यथा 'मृग' शब्दः सामान्यपशुजातेः बोधकः आसीत् किन्तु इदानीं हरिणार्थे प्रयुक्तो भवति। गोशब्दः गमनार्थस्यापि बोधकः आसीत् किन्तु इदानीं धेन्वर्थे एव तस्य प्रयोगो भवति। ब्रीलमहोदयस्य मतमस्ति यत् या जातिः यत्परिमाणे सुसंस्कृता भविष्यति तस्याः भाषायां अर्थसंकोचः तादृग् महत्परिमाणे भविष्यति।

अर्थसंकोचस्य उदाहरणानि द्रष्टव्यानि—

| शब्दः | मूलार्थः | अर्थसंकोचः |
|---|---|---|
| भार्या | भरणपोषणार्हा | पत्नी |
| द्विजः | ब्राह्मणः, पक्षी, दन्तः | ब्राह्मणः |
| वेदः | ज्ञानराशिः | ऋग्वेदादिवेदसमूहः |

**३. अर्थादेशः** (Transference of meanings)

कस्यापि शब्दस्य पूर्वनियतार्थस्य स्थाने यदा कोऽपि नवीनः अर्थः समायाति तदा स शब्दः अर्थादेशस्य श्रेण्याम् आयाति। यथा असुरशब्दः प्राक्काले देवतावाची आसीत् किन्तु सम्प्रति स राक्षसार्थबोधकः अस्ति। युवती शब्दः "यौति मिश्रीकरोत्यात्मानं पत्या सह"[2] इत्यर्थस्य बोधकः आसीत्। अनेन सिध्यति यत् प्राक्काले विवाहिता स्त्री एव युवती पदेन संबोध्यते स्म। किन्त्विदानीं काचित् अनूढा तरुणी अपि युवती पदेन संबोध्यते।

यौवनशब्दः पूर्वं "युवतीनां समूहः"[3] इत्यस्य बोधकः आसीत्, किन्त्विदानीं यूनां भावः इत्यर्थे प्रयुक्तो भवति। महिला शब्दः पुरा शिष्टा स्त्री इत्यस्य बोधकः नासीत्। अयं शब्दः विलासिन्या बोधकः आसीत्। भामिनीविलासेऽपि अस्य शब्दस्य प्रयोगः विलासोस्त्री रूपेणैव कृतः विद्यते। यद्यथा—

विरहेण विकलहृदया निर्जलमीनायते महिला।"[4] इति। किन्त्विदानीं हिन्दीभाषायां संस्कृतभाषायां च सर्वत्र महिलाशब्दः "विशिष्टा स्त्री" इत्यर्थस्य बोधकः अस्ति। नेत्रशब्दस्य प्रयोगः प्राक्काले करणे[5] अर्थे आसीत् किन्त्विदानीं न तादृशः प्रयोगो भवति।

दुहितृ शब्दः प्राक्काले दोहन कर्त्र्या बालिकायाः कृते प्रयुक्तो भवति स्म किन्त्विदानीं शब्दोऽयं मूलार्थस्य सर्वथा परित्यागं कृत्वा पुत्री अर्थस्य बोधकः अस्ति। दोहन कर्तृत्वार्थस्तु परित्यक्तोऽस्ति।

एवं रीत्या शब्दानां विश्लेषणेन तथ्यमिदमायाति यत् जगतः परिवर्तनप्रक्रियायाः प्रभावः भाषा क्षेत्रेऽपि अस्त्येव। अर्थपरिवर्तनस्य हेतुविषये भाषावैज्ञानिकैः बहु चिन्तितम्। तेषां सम्यक् विवरणं तु विस्तरभयात् अत्र दातुं नोत्सहे। इति शम्।

---

१. पा० सू० ४।१।२०। २. यौति मिश्रीकरोत्यात्मानं पत्या इति विग्रहे यु धातोर्लति तस्य शत्रादेशे 'उगितश्च इति ङीप्प्रत्यये युवतीशब्दस्य निष्पत्तिर्भवति। ३. इनण्यनपत्ये (पा० सू० ६।४।१६४) पुंवद्भावेनेति प्रत्यय निवृत्तौ नस्तद्धिते इति तिलोपः प्रकृतिभावेन वार्यते। ४. भामिनि विलासः २।६८। ५. दाम्नीशसयुयुजस्तु……(३।२।१८२) इति सूत्रेण करणे अर्थो ष्ट्रन प्रत्ययो भवति येन नेत्रशब्दस्य सिद्धिर्भवति।

## मा भून्निराशं मानसम्

—डा० परमानन्दः शास्त्री
सिद्धार्थ-सदनम्, मन्दिरमार्गः, अलीगढ़म्

मा कवे ! मा भून्निराशं मानसम्,
रेऽपवद सह सागसा न निरागसम् ।

रजः स्तोमो जगति भूयान् परिसृतः,
दिक्समूहः सर्वतस्तमसाऽऽवृतः,
किन्तु दूरे छेत्तुमसिधारोज्ज्वलं
पश्य प्राच्या अधर उदितं साहसम् ।
मा कवे ! मा भून्निराशं मानसम् ।

दृश्यते कल्पद्रुमस्यानर्थता,
बाधते जगतीमलीककदर्थता,
कर्तितुं सत्यस्य हैमीः शृङ्खलाः
खलजने कुरु लेखनीमुखमायसम् ।
मा कवे ! मा भून्निराशं मानसम् ।

उपवने चेदुद्गता स्याद् विषलता,
पालकस्यैवास्ति सैवाऽकुशलता,
कथं सोढुं शक्नुसे सत्यं कथय
पिकपदे संस्थापित शठवायसम् ।
मा कवे ! मा भून्निराशं मानसम् ।

पुष्परोहो यदुत्सङ्गेऽनारतम्,
कण्टकानामत्र तेषां स्वागतम्,
वरं तेषां सुमनानामुन्मूलनं
दधति ये जनमोहजजन विषरसम् ।
मा कवे ! मा भून्निराशं मानसम् ।
रेऽपवद सह सागसा न निरागसम् ।



## आविलम्

डॉ० केशवचन्द्रदासः
दर्शनप्राध्यापकः श्री जगन्नाथ संस्कृत विश्वविद्यालयः
पुरी–७५२००२

पुरातनपत्रेषु
पिशुनिता दुर्बलशब्दावली
नूतनसमयेऽस्मिन्
दुर्बोध्या भवति ।
न स्मृतिरुषस्यति
न वा दृष्टिः स्पष्टयति
परिचितविन्दूनां प्रथमनिबन्धम्
असन्तोषे मनः सीमन्तितम् ।
च्युतिसूचीपत्रे संप्रति
चन्द्रो न तरुणः
अस्तरागः पुनश्च करुणः ।
संध्या बन्ध्यायते—
कुक्कुराणां कलहेषु
क्षुधा वृद्धायते,
सूर्यस्य ग्रीवायां दोलायते
तमसायाः स्थाली
स्रोतस्विनीस्यूते
उत्तर्णो भवति
कल्पेक्लिन्नधूलिः ।
रुजायते अवकाशः—
अहमिकामुष्णयति तृषा
मार्गः प्रलम्बते
दिशा च आविला भवति
तदनु न तृषा ऋजूयति
नाऽहमिका वर्धनं त्यजति
विधिनिषेधयोः तत्त्वविनिमये
शान्तिरुदन्यति
साक्षादभिमुखे
अनहं गहनायते
आनन्दतिलके ।



# आम्रवातादपेयम्

**राजकुमारी कृष्णप्रिया**

**सामग्री** :—वातादमज्जा—१. पृथुचमसमात्रम्। मृद्वीकां (किसमिस) १. पृथुचमसमात्रम्। अपक्वम् अशिथिलञ्च आम्रत्रयम्। जलं १/२ लीटरमात्रम्। लवणं १/४ क्षुद्रचमसतुल्यम्। शर्करा आस्वादनानुसारतः वातादवासितं बिन्दुद्वयं त्रयम् वा।

**विधि** :—वातादमज्जां घटिकात्रयं यावत् जले स्थापयेत्। यदा मज्जा उच्छूना भवति तदा त्वचम् अपसार्य तां मृद्वीका (किशमिस) साकं पेषयेत्। आम्राणि पाचनिकायां (कुकरे) क्षिप्त्वा जलं च मेलयित्वा वारमेकं वारद्वयं वा सीटिकाध्वनिं यावत् पाचयेत्। ततः सम्पुटितां पाचनिकां चुल्लिकाराः अपसार्य शीतलीकर्तुं पृथक् स्थापयेत्। यदा आम्राणि शीतली भवन्ति तदा तेषां त्वचम् अपसार्य गूथं (गूदा) हस्तेन गुटिकातः पृथक् कुर्यात्। तदनन्तरम् एकस्मिन् पात्रे १३ लीटरमात्रं जलम् आदाय तस्मिन् मर्दितं गूथं, शकरां, लवणं पेषितमृद्वीकां (किशमिस) वातादपिष्टं च सम्यक्तया मेलयेत्। अन्ते च वासकं (एसेन्स) क्षेपयेत्। इत्थं प्रस्तुतं शीतपेयं शीतकयन्त्रे (फ्रिजे) शीतलीकरणाय स्थापयेत्। □

---

# संस्कृतनाटकेषु नायिकादर्शनम्

**सौ० कमला अभ्यंकर**

## १. वासवदत्ता

प्रमुखसंस्कृतनाटकेषु दृश्यमानं विविधरङ्गं वैचित्र्ययुतं नायिकादर्शनकरणम् एव अस्याः मालायाः समुद्दिष्टम्।

महाकविः भासः आद्यः संस्कृतनाटककर्ता। अतः तस्य सुविख्यातस्य नाटकस्य स्वप्नवासवदत्तस्य नायिकायाः वासवदत्तायाः व्यक्तिदर्शनं प्रथमं समुचितं भवेत्।

उज्जयिनीनृपस्य महासेन-प्रद्योतस्य कन्या वासवदत्ता। उदयनं जामातरम् अभिलषता महासेनेन वीणाशिक्षाव्यपदेशेन वन्दिने उदयनाय प्रदत्ता सा। स्वामिनिष्ठः यौगन्धरायणः वासवदत्तया सहितं उदयनं महासेनकारावासात् मोचितवान्। कलाप्रियः, निश्चिन्तः उदयनः वासवदत्तायाः प्रेमसागरे निमग्नः अभवत्। परिणामे स्वशत्रोः आरुणितः पराभवं स्वीकृत्य उदयनः प्रजाभिः सह लवाणकग्रामे उषितवान्।

राज्ञः राज्यलाभेन पुनरपि उत्कर्षाय वासवदत्तायाः महान् त्यागः आवश्यकः आसीत् किल। स्वामिनिष्ठे अमात्य-यौगन्धरायणे विश्वस्य सा स्वार्थत्यागाय सिद्धा। लवाणकात् बहिः मृगयार्थं गते राज्ञि उदयने लवाणकदाहस्य तथा तस्मिन् वासवदत्तायौगन्धरायणयोः निधनस्य वार्ता प्रसृता। वासवदत्तायाः अज्ञातवासः प्रारब्धः।

अस्य नाटकस्य आरम्भे एव आवन्तिकावेषधारिणी, प्रोषितभर्तृका वासवदत्ता सामान्य-स्त्रीवेषेण अस्माकं पुरतः आयाति। पद्मावतीसेवककृतां अनभ्यस्ताम् अनुचिताम् उत्सारणाम् अनुभूय सा अपमानिता भवति। सा यौगन्धरायणं पृच्छति, "अहमपि नामोत्सारयितव्या भवामि ?" इति। परिश्रमात् परिभवदुःखं तस्याः कृते महत्। पत्युः उत्कर्षार्थं न केवलम् अज्ञातवासं; न्यासरूपेण पद्मावतीपरिवारे वास्तव्यमपि स्वीकरोति सा। ब्रह्मचारिणः मुखात् राज्ञः मूर्च्छावृत्तं श्रुत्वा सा साभिमानं सगद्गदं वदति, 'जानामि जानाम्यार्यपुत्रस्य मयि सानुक्रोशत्वम्।''

अज्ञातवासम् अनुभवन्ती वासवदत्ता राज्ञः उदयनस्य मगधदेशागमनं, तत्कृतं पद्मावत्याः स्वीकरणं च श्रुत्वा व्याकुला भवति। पद्मावत्याः विवाहसमये सा एकाकिनी प्रमदवनम् आगत्य स्वदुःखं विनोदयितुं यतते। किन्तु अकरुणाः खलु ईश्वराः। यतः वासवदत्ता महाकुलप्रसूता, स्निग्धा, निपुणा इति पद्मावत्यर्थे-स्वसपत्न्यर्थे विवाहमालागुम्फनम् अपि तस्याः कृते अपरिहार्यं भवति। 'आर्यपुत्रोऽपि नाम परकीयः संवृत्तः' इत्येव तस्याः असीमं दुःखम्। किन्तु—

'पद्मावती बहुमता मम यद्यपि रूपशीलमाधुर्यैः।
वासवदत्ताबद्धं न तु तावन्मे मनो हरति॥'

इत्येतान् पत्युः उद्गारान् श्रुत्वा सा वनवासदुःखं विस्मरति। धन्यधन्या सा वदति, "दत्तं वेतनमस्य परिखेदस्य। अहो, अज्ञातवासोऽप्यत्र बहुगुणः सम्पद्यते।" पत्युः मिलनार्थं यद्यपि सा समुत्सुका तथापि अन्तं यावत् यौगन्धरायणस्य सहकार्यं तथा प्रोषितभर्तृका मर्यादायाः पालनं करोति सा। पद्मावतीविषये सा भगिनीप्रेम दर्शयति खलु। पद्मावती शीर्षवेदनया पीडिता इति श्रुत्वा सा अस्वस्था भवति। वासवदत्तायाः पद्मावतीविषये ममत्वं तथा प्रेम राजप्रासादे सर्वपरिचितमेव।

नैकवारं भावविवशत्वात् सा आत्मनः अज्ञातवासं विस्मरति। तेन भावनोत्कटतया अनवधानेन राज्ञः रूपगुणविषयकाः 'नहि नहि दर्शनीय एव' इत्यादयः उद्गाराः तस्याः मुखात् निर्गच्छन्ति। किन्तु अतीव चतुरा, प्रसङ्गावधानयुता खलु सा। अतः प्रत्येकस्मिन् प्रसङ्गे सा अवहिता भवति। विवाहमालागुम्फनप्रसङ्गे 'अविधवाकरणं' नाम वनस्पतिं उभयार्थं विपुलं गुम्फति। किन्तु 'तस्य भार्या उपरता, तन्निष्प्रयोजनं' इति कथयित्वा 'सपत्नीमर्दनं' वनस्पतिं चातुर्येण परिहरति।

रत्नावली-प्रियदर्शिकयोः मध्ये दृश्यमाना समत्सरा-मानिनी वासवदत्ता अत्र न दृश्यते। अत्र तु पत्युः उत्कर्षार्थं त्यागशीला, अपमानम्-अज्ञातवासं च अनुभवन्ती, प्रोषितभर्तृका, धैर्यशीला, भावनोत्कटा, चतुरा, पतिव्रता दृश्यते अस्माभिः।

अखिलेषु षट्सु अपि अङ्केषु वासवदत्तायाः प्रत्यक्षं दर्शनं भवति। तस्याः व्यक्तित्वदर्शनम् एव नाटकस्य उद्दिष्टम् इति प्रतिभाति।

कविकुलगुरुणा अजमुखेन कृतं—
"गृहिणी सचिवः सखी मिथः प्रियशिष्या ललिते कलाविधौ,
इत्येतद् वर्णनं परमार्थेन वासवदत्तावर्णनम् एव भवति।

□

# संस्कृतस्य प्रभावः

—डा० डी० आर० तिमसिना, (नेपाल)

भाषा संस्कृतेर्वाहिका भवतीति सत्यमुक्तम्। संस्कृतं च हिन्दूसंस्कृतेः स्रोतः स्वरूपम्। संस्कृतेनैव वस्तुतो हिन्दूसंस्कृतेर्वास्तविकं स्वरूपं प्रतिभाति प्रकाशते च। संस्कृतं खलु भारतस्य भारती। तथ्यमुद्घोषितं अमरसिंहेन—

"ब्राह्मी तु भारतीभाषा गीर्वाग्वाणी सरस्वती।
व्याहार उक्तिर्लपितं भाषितं वचनं वचः॥"

संस्कृते समुन्नता संस्कृतिः संलग्नास्ति। संस्कृते सन्धितास्ति भारतीयाऽऽर्यमर्यादा। अजराऽमरा सदा जीविता चास्ति संस्कृतं नाम सरस्वती। अजस्रं

प्रवहमानो वर्तते संस्कृतस्य धारायामस्माकं संस्कृतो जीवनप्रवाहः। संस्कृतमस्माकं हिन्दूसंस्कृतेरनुयायिनां कृते सर्वस्वभूतमस्ति। अस्मिन्नेव वचसि हिन्दूपद-वाच्यतामस्माकं जीवनप्रक्रिया प्रचलति मृत्यु-संस्कारश्च सम्पद्यते। उदयाचलादस्ताचलं यावत् किंवा जीवनस्य प्रथमप्रहरतोऽन्तिमप्रहरपर्यन्तम् अथवा गर्भाधानसंस्कारतः श्मशानक्रियापर्यन्त-मस्माकं सर्वविधसंस्कारः संस्कृत एव सन्निहितः सम्बद्धश्च। नामकरणसंस्कारः उपनयविधानं विवाह-पद्धतिस्तथा अन्ये च विविधाः धार्मिकसंस्काराः चिन्तनप्रक्रियाः मृत्युसंस्काराश्च संस्कृते एव निबद्धाः सन्तीति। धार्मिकाः वैदिकाः दार्शनिकाश्च संस्कृत-साहित्यग्रन्थाः अमोघाः निधय इति सर्वैरपि सम्यग् ज्ञायत एव। सहजभावेन सरल प्रयोगादस्य वैशिष्ट्यं प्रकाशमायाति।

देशान्तरमधिगत्यापि हिन्दूसंस्कारे निमग्नो जनः स्वदेशं तीर्थस्वरूपं स्मारं स्मारं राष्ट्रियैकतायाः प्रतीकं मन्त्ररूपं निम्नोद्धृतं संस्कृतश्लोकं समुच्चारयति तथा समर्पयति च स्वात्मानं संस्कृतस्य संस्कारसागरे।

"गंगे च यमुने चैव गोदावरी सरस्वती।
नर्मदे सिन्धु कावेरी जलेस्मिन् सन्निधिं कुरु॥"

संस्कृतभाषायाः आर्यसंस्कृतेः राष्ट्रभक्तेश्च सशक्तः प्रभाव एष सजीवमुदाहरणं चैतदिति शम्। □

---

# हासविलासः

## अथ कुर्सी-माहात्म्यम्

**डॉ० प्रशस्यमित्र शास्त्री**
बी २९, आनन्द नगर (जेलरोड) रायबरेली

येनेह पुरुषेणादौ कुर्सीसंरचना कृता।
धन्यः स पुरुषो लोके कृतिस्तस्य ततोऽधिका॥
कुर्सीनां नास्ति पर्यायो विकल्पोऽपि न विद्यते।
कुर्सी मारयते जीवान् कुर्सी जीवयते तथा॥
कुर्सीम् आत्मबलं विद्धि कुर्सी बाहुबलं तथा।
तद्विना जीवनं शून्यं कुर्सी सर्वाश्रयं ततः॥
भूगोलं साम्प्रतं कुर्सी-इतिहासास्तथैव च!
कुर्सीभूतं भविष्यं च वर्त्तमानं च विद्यते॥
सर्वशक्तिमती कुर्सी सदा सर्वत्र व्यापिका।
कुर्सी सर्वरहस्यं च सर्वाभिव्यक्तिरेव च॥
कुर्सी चात्मा भवेन्मित्र! यश्च तत्र विराजते।
परमात्मा स मन्तव्यो नात्र काचिद् विचारणा॥
नरः कुर्सीसमारूढो गुणवानेव वर्तते।
न्यायाधीशश्च विद्वांश्च स च नेता तथा मतः॥
कुर्सी ज्ञानं च विज्ञानं वरदानं तथैव च।
कुर्सी पूजा तपस्या च भारते च विशेषतः॥
कुर्सी स्वर्णमयी देवी लाटरीधनवृष्टिवत्।
कुर्सी कोमलकान्तेव संस्पर्शे सुखदायिनी॥
कुर्सी रामाय देवाय दैत्याय रावणाय च।
कुर्सी मानवमात्राय कुर्सीदेव्यै नमो नमः॥
या कुर्सी सर्वभूतेषु तृष्णारूपेण संस्थिता।
नमस्तस्यै नमस्तस्यै नमस्तस्यै नमो नमः॥ □

# देवनागरी-विश्वस्य सरलतमा लिपिः

**डा० काशीराज उपाध्यायः,**

भू. पू. उद्योग मन्त्री, नेपालः

अद्य विश्वं मानवमानवयोः देशदेशयोः च मध्ये मिथः सम्बन्धस्थापनाय मिथः बन्धुत्ववर्धनाय विश्वशान्त्यर्थं च संसारस्य सर्वासामपि लिपीनां सर्वासामपि भाषाणां अध्ययनं कृत्वा कस्याश्चित् सर्वमान्यायाः सरलतमायाश्च लिपेः भाषायाश्च अन्वेषणे तत्परं वर्तते। यद्यहं ब्रूयाम् यत् अस्मिन् ब्रह्माण्डे स्थितस्य अस्माकं देशस्य लिपिः अस्माकं देशस्य भाषा च सर्वापेक्षया सरलतरत्वं धत्ते तदा भवद्भिः नूनं वक्ष्यते यत् त्वं आत्मनः एव देशस्य वैशिष्ट्यं ब्रवीषि। तावकमेव सर्वं सुन्दरं किम् ? इत्यादिकम्। नहि मत्कथनमात्रेण संसारः स्वीकरिष्यति। अस्मिन् युगे सर्वोऽपि तार्किकं वैज्ञानिकं च समाधानं कामयते।

अस्तु, किञ्चिदत्र आलोक्यताम्—अस्माकं देवनागरी लिपिः कथं वैज्ञानिकतां पुष्णाति। केवलं सप्ताक्षराणां परिज्ञानेन चतुष्षष्टि (६४) अक्षराणि पुरस्तात् आयास्यन्ति। यथा अस्माकं ऋषिमुनयः गुरुकुले एषां सप्ताक्षराणां अध्ययनद्वारा सर्वेषामपि अक्षराणां बोधं कुर्वन्ति स्म शिष्येषु कारयन्ति स्म च तथैव भवन्तोऽपि स्वीयान् बालकान् शिक्षयन्तु। अहं सर्वदा नेपालस्य विद्यालयेषु इमां पद्धतिमनुसृत्य छात्रान् पाठयामि। बालकानां झटिति परिज्ञानमपि भवति किन्तु तत्रत्याः शिक्षकाः तदर्थं न प्रयतन्ते फलतः मम श्रमः प्रायेण निष्फलतां याति।

इदानीं देवनागरीलिपेः लेखनवैशिष्ट्यस्य प्रतिपादनात् पूर्वं आंग्लभाषायाः २६ अक्षराणां उर्दूभाषायाः २९ अक्षराणां एवं अन्यभाषाणां यथा—चीनी, जापानी, कोरियन इत्यादीनां दशसहस्र-अक्षराणां विषये किंचित् वदामि—

आंग्लभाषायाः पक्षपातिनः आंग्लवर्णमालायां केवलं २६ अक्षराणि पश्यन्ति परन्तु मयातु तत्र १०४ अक्षराणि अवलोक्यन्ते। उर्दू इतोऽपि कठिना भाषाऽस्ति। अत्र कियन्ति अक्षराणि सन्तीति परिगणितुं अहं न प्रभवामि। सहैव अत्र इयमपि विशेषता वर्तते यत् तत्र "सेठजी आज मर गये" "सेठजी अजमेर गये" इत्यनयोः वाक्ययोः भेद एव न दृश्यते।

देवनागरीलिपेः विशेषता इयमस्ति यत् अत्र ६४ अथवा २०० तोऽपि अधिकानि अक्षराणि दृश्यन्ते परन्तु सूक्ष्मेक्षिकया अवलोक्यमाने सति अत्र चत्वारि (४) एव अक्षराणि सन्ति—'हलधर' इति। सर्वैः सरलतया अवगम्यतामतः मया सर्वाण्यपि अक्षराणि ८ वर्णेषु विभक्तानि।

प्रथमतः 'ग' इत्यक्षरं गृह्यताम्। यदि बालकैः अस्य अक्षरस्य समीचीनः अभ्यासः क्रियते तर्हि तैः दश (१०) अक्षराणि सुगमतया ज्ञातुं शक्यन्ते—

ग = म, स, र, ए, ऐ, ण (ण), ख, भ, झ इति।

एवमन्यान्यपि उदाहरणानि—

ट = य, थ, ढ, द, क्ष, ठ इति।

ङ = ड, इ, ई, झ (झ), ह, ज, त्र, ज्ञ इत्यादि।

ध = घ, छ इत्यादि।

क = व, ब, च इत्यादि। एवं रीत्या प, ड, ल इति अक्षरैरपि बहूनि अक्षराणि निःसरन्ति।

ऋषीणां अनेकजीवनस्य श्रमेण एतत् तत्त्वं अस्माकं पुरतः वर्तते। इमानि अक्षराणि अद्यापि तथैव वैज्ञानिकानि सन्ति यथापूर्वम्। एतेषु ज्ञातेषु नहि अन्या वैज्ञानिकलिपिः अन्वेषणीया भवति॥ □

# नूतनशिक्षानीतौ त्रिभाषासूत्रे संस्कृतस्य स्थापनम् आवश्यकम्

—जितेन्द्र कुमार द्विवेदी

सार्वभौम-संस्कृत-प्रचार-संस्थानम्, वाराणसी

केन्द्रीयशिक्षासलाहकारपरिषद् एकपञ्चाशदधिके ऊनविंशे वर्षे स्वीये अष्टादशे अधिवेशने देशे माध्यमिकशिक्षाप्रणाल्याः मूल्याङ्कनं पुनर्गठनं च कर्तुं एकस्य आयोगस्य स्थापनाय बलं दत्तवती आसीत्। तदनुसारं भारतसर्वकारेण द्विपञ्चाशदधिके ऊनविंशे वर्षे सितम्बरमासस्य द्वात्रिंशत्तारिकायं एकः माध्यमिकशिक्षायोगः स्थापितः। यस्य अध्यक्षः तत्कालीनः मद्रासविश्वविद्यालयस्य उपकुलपतिः डा० ए० लक्ष्मणस्वामीमुदालियरः आसीत्। आयोगेऽस्मिन् अन्येऽपि सदस्याः आसन्। तैः स्वकीयं मतं त्रिपञ्चाशदधिके ऊनविंशे वर्षे भारतसर्वकाराय प्रदत्तम्। तेनैव आयोगेन त्रिभाषासूत्रस्यापि निर्माणं कृतम्। त्रिभाषासूत्रस्य एषः अर्थः वर्तते यत् हिन्दीभाषिप्रदेशेषु एका मातृभाषारूपेण राष्ट्रभाषारूपेण वा हिन्दी, एका दाक्षिणात्या भाषा, एका च वैदेशिकी भाषा अर्थात् आंग्लभाषा। अहिन्दीभाषिप्रदेशेषु एका मातृभाषा, एका राष्ट्रभाषा, एका च वैदेशिकी भाषा अर्थात् आंग्लभाषा। पुनः चतुष्षष्ठ्यधिके ऊनविंशे वर्षे भारतसर्वकारस्य शिक्षामन्त्रालयेन शिक्षया सम्बन्धितानां समस्तानाम् अपि विषयाणामुपरि विचारं कर्तुं एकस्य शिक्षायोगस्य गठनं कृतम्। यस्य अध्यक्षः तत्कालीनः संघ-लोकसेवायोगस्य अध्यक्षः डा० दौलतरामकोठारी आसीत्। आयोगेऽस्मिन् अन्येऽपि बहवः भारतीयाः वैदेशिकाश्च शिक्षाविशेषज्ञाः आसन्। अनेन आयोगेन षड्षष्ठ्यधिके ऊनविंशे वर्षे स्वकीयं मन्तव्यं भारतसर्वकाराय प्रदत्तम्। अनेनापि आयोगेन त्रिभाषासूत्रं समर्थितम्। तदनन्तरं मुख्यमन्त्रिणाम् अपि त्रिभाषासूत्रे एकं सम्मेलनम् अभूत्। मुख्यमंत्रिभिः अपि त्रिभाषासूत्रं समर्थितम्। पुनः भारतसर्वकारेण त्रिभाषासूत्र सम्पूर्णं देशे नियोजितम्। परन्तु तस्य सर्वत्र, विशेषतः उत्तरभारते बहुः विरोधः जातः। डा० सम्पूर्णानन्दमहोदयः तत्कालीनं प्रधानमंत्रिणं पं० श्री लालबहादुरशास्त्रिणं संस्कृतरक्षायै भिक्षां याचितवान्।

जनाक्रोशं दृष्ट्वा भारतसर्वकारेण हिन्दीभाषि प्रदेशेषु तृतीयभाषारूपेण संस्कृतमेव स्थापितं। परन्तु पञ्चाशीत्यधिके ऊनविंशे वर्षे भारतसर्वकारेण हिन्दीभाषि प्रदेशतः अपि संस्कृतभाषा निःसारिता। अतः अस्माभिः विचारणीयं यत् किं **नूतनशिक्षानीतौ त्रिभाषासूत्रे संस्कृतस्य स्थापनम् आवश्यकं वर्तते।**

मान्याः संस्कृतं विश्वस्य एका अत्यन्तं प्राचीना, समृद्धा, वैज्ञानिकी, विश्वव्यापिनी, तथा विश्वस्य विद्वद्भिः प्रशंसिता भाषा वर्तते। यस्याः उत्तराधिकारिणः प्रत्येकं भारतीयाः सन्ति। अतः अस्याः अध्ययनेन प्रत्येकं भारतीयेषु आत्मगौरवस्य, स्वाभिमानस्य, महत्वाकांक्षायाः उदयः तथा वैज्ञानिकदृष्टिकोणस्य विकासः भवति।

संस्कृतभाषायाः वैज्ञानिकता, अस्याः साहित्यस्य विशालता, तथा अस्यां प्रतिपादितानाम् उदात्तविचाराणां ज्ञानं प्राप्य स्वराष्ट्रस्य अतीतं प्रति महतः स्वाभिमानस्य भावः जागृतः भवति।

संस्कृतभाषायाः न केवलं भारतस्य प्रान्तीयाः तमिलतेलगुकन्नडमलयालमप्रभृतयः भाषाः उद्भूताः प्रभाविताः वा सन्ति प्रत्युत एशियामहाद्वीपस्य यूरोपमहाद्वीपस्य च भाषास्वपि अनेकाः भाषाः साक्षात्

वा परोक्षरूपेण उद्भूताः प्रभाविताः वा सन्ति। अतः संस्कृतज्ञं जनं प्रति विदेशीजनेष्वपि सद्भावना भवति। महानुभावाः—

संस्कृतं ही परमो निधिर्भारतस्य।

केवलम् एतावदेव न, राष्ट्रीयैकतायाः अखण्डतायाश्च कृतेऽपि संस्कृतस्य महती आवश्यकता वर्तते।

संस्कृतभाषा एव भारतं कश्मिरेभ्यः कन्याकुमारी-पर्यन्तं द्वारिकायाश्च मणिपुरं यावत् ऐक्यस्य सूत्रे आबद्धं कृतवती अस्ति। भारतीयभाषासु पञ्चसप्ततितः अशीतिपर्यन्तं शब्दाः एकसदृशाः सन्ति। एतस्य मूलकारणम् इदं वर्तते यत् अधिकांशभारतीयभाषाः संस्कृतमूलिकाः सन्ति। एतस्मात् एव कारणात् आसु ऐक्यस्य एतावत् व्यापकं निदर्शनं वर्तते। संस्कृतभाषा अस्माकं देशस्य एकतां वर्धितवती अस्ति। त्रिभाषासूत्रे यदा भविष्यति तदा अपरमपि ऐक्यं भविष्यति। अतएव केनापि कविना उक्तं वर्तते—

"यदि संस्कृतं स्यात् त्रिभाषेति सूत्रे
तदाऽखण्डता भारतस्य सुसम्यग्।
अतो चलतः स्थापनियैर्सुविज्ञैः
विना संस्कृतं भारतं सर्वशून्यम्॥"

मान्याः एषः विचारः केवलं भारतीयानामेव न अपि तु वैदेशिकाः अपि स्वीकुर्वन्ति। दिसम्बरमासस्य द्वादशतारिकायां अष्टचत्वारिंशदधिके ऊनविंशे वर्षे "अन्नामलाईविश्वविद्यालयः चिदम्बरम्" नगरे प्रो० डा० लूई रेन्यू महोदयेन उक्तं यत्—

"यदि कापि भाषा भारतस्य एकतां स्थापितवती अस्ति तर्हि संस्कृतभाषा एव।" अतः राष्ट्रीयैकतायाः अखण्डतायाश्च कृते नूतनशिक्षानीतौ त्रिभाषासूत्रे संस्कृतस्य स्थापनम् आवश्यकं वर्तते।

भारतीयसंस्कृतेः विकासाय रक्षणार्थं चापि संस्कृतस्य ज्ञानं महत्वपूर्णं वर्तते। भारतीयजीवन-धारायाः आदिः स्रोतः वैदिकयुगः वर्तते। सहस्रवर्ष प्राचीना अस्माकं संस्कृतिः संस्कृतभाषायाम् एव अद्यावधि सुरक्षिता वर्तते। संस्कृतस्य अध्ययनं विना भारतं भारतस्य सामाजिक्याः संस्कृतेः मर्म बोद्धुं न शक्नोति। येषु पुस्तकेषु भारतीय संस्कृति मूलरूपेण निहिता वर्तते तानि सर्वाणि पुस्तकानि संस्कृतभाषामेव सन्ति। यथा वेदाः, पुराणानि, उपनिषदः, रामायणम्, महाभारतम् गीतादयः।

मातृदेवो भव, पितृदेवो भव, अतिथिदेवो भव, अहिंसा परमो धर्मः इत्यादयः शिक्षाः संस्कृतभाषायामेव लिखिताः सन्ति। इमानि सर्वाणि पुस्तकानि अध्येतुं संस्कृतस्य ज्ञानम् आवश्यकं वर्तते। केचन जनाः एवम् आक्षिपन्ति यत् एतेषां समेषां ग्रन्थानां हिन्दी अनुवादः वर्तते एव, परन्तु संस्कृते तस्य यादृशः स्पष्टः अर्थः वर्तते तादृशः हिन्द्यां भवितुं नार्हति। अतएव केनापि कविना उक्तं वर्तते—

"संस्कृतं विना संस्कृतिर्नास्ति,
संस्कृतं विना भारतीयो न हिन्दुः।
संस्कृतं विना नोभयोरस्ति चिह्नम्
संस्कृतं विना भारतं सर्वशून्यम्॥"

महात्मागान्धिना अपि "गान्धीजी सूक्तियाँ" नामके पुस्तके उक्तं वर्तते—यत् "संस्कृत एक ऐसी भाषा है जिसमें भारतीय संस्कृति का चिरसंचित ज्ञान भरा है।" अतः भारतीय संस्कृतेः रक्षणार्थं विकासाय चापि नूतनशिक्षानीतौ संस्कृतस्य स्थापनम् आवश्यकं वर्तते।

विश्वशान्त्याः कृतेऽपि संस्कृतस्य ज्ञानम् आवश्यकं वर्तते। समाजः विश्वश्च केन प्रकारेण शान्त्या सहिष्णुतया चलतु अस्यापि कल्पना संस्कृतग्रन्थेषु स्पष्टं मिलति। "उदारचरितानां तु वसुधैव कुटुम्बकम्" इत्याद्युक्तयः विश्वबन्धुत्वस्य शिक्षां ददाति। संस्कृतस्य अध्ययनेनैव पञ्चशीलं, विश्वबन्धुत्वं निरस्त्रीकरणम्, इत्यादिषु अत्यधिका सहायता मिलति। अतएव केनापि कविना उक्तम्—

विश्वबन्धुत्वविस्तारकं संस्कृतं,
सर्वभूतैकताकारकं संस्कृतम्।
सर्वतः शान्तिसंस्थापकं संस्कृतं,
पञ्चशीलप्रतिष्ठापकं संस्कृतम्॥

( शेषांशः २५ पृष्ठे )

# मिलनसेतुः

डॉ० भक्तिसुधा मुखोपाध्याया
काशीहिन्दूविश्वविद्यालयीयप्राक्तनोपाचार्या

## प्रथमोऽङ्कः

श्रीकृष्णचरणं प्राप्तुं मानसे वासना यदि।
तद्भक्तिमिलनार्थं हि युज्यते सेतुरूपतः॥

(नान्द्यन्ते व्रतः प्रविशति सूत्रधारः)

सूत्रधारः—श्रृण्वन्तु आर्यमिश्राः। विज्ञापितोऽस्मि यत् परमविदुषो नागरिकश्रेष्ठस्य रमानाथरायमहोदयस्य विद्यानुरागिणो दुहिताजयन्ती हिन्दूविश्वविद्यालयस्य बी० ए० परीक्षायां सर्वाणि तस्याः परीक्षापत्राणि सुष्ठु उत्तरितवती। श्रुत मया पत्रेषु सुसमाप्तेषु हृदः विश्रामसम्भावनायामपि सा अद्यापि अनिर्वृतहृदया न कथमेतत्? आं, ज्ञातम्। तया परीक्षानुरोधेन गुरुजना उपेक्षिताः। एवं महापराधः कृतः। अपराधिजनस्य कुतः सुखम्? अतएव—

परीक्षावारिधेः पारं प्राप्तास्तिबालिकाजया।
न तस्याः हृदये शर्म गुरुशुश्रूषणं विना॥

पश्यामस्तावत् किं तया क्रियतेऽधुना (इति निष्क्रान्तः)

(प्रथमं दृश्यम्)

ततः प्रविशति वाराणस्याः कस्मिन्नपि गृहे जयन्ती जया वा)

जया—(स्वगतं) बी० ए० परीक्षायाः पत्राणि समाप्तानि। अद्य मे हृदयेन व्यपनीतभारेण भवितव्यम्। किन्तु नास्त्येतत् तथाविधम्। पित्रा उक्तं 'श्व एव आवाभ्यां कलिकातानगरी गन्तव्या। न जाने किं पुनरुत्कलयति माम्। सप्ताहकालाधिकं तातस्य श्वसुरदेवस्य समाचारो नायातः। न पुनरवगम्यते तेन आरोग्यं लभ्यते न वा।

(नेपथ्ये) अस्ति ताडितवार्ता।

जया—हम्, ताडितवार्ता वाहकः। एषाहमागच्छामि। (निष्क्रान्ता, ताडितवार्तावाहकात् पत्रमादाय आगच्छति, त्वरितं कोषान्निसार्य पठति च। सहसा उच्चैः आक्रुश्य) हा दिवंगतः तात पादः (उपविशति शोकं नाटयति च)।

(ततः प्रविशति जयन्तीमाता इन्दिरा)

इन्दिरा—जये, कथं निर्विण्णेव दृश्यसे। हस्ते तव ताडितवार्तापत्रम्। कुत एतत् समायातम्?

जया—मातः, श्वसुरौ मे स्वर्गतः। मातः, नाहमजानां स मरणदशापन्नः पुनःपुनः द्रष्टुं याचितापि अहं........(शोकावेगेनावरुद्धकण्ठा तिष्ठति)

इन्दिरा—(मुहूर्तं तूष्णीं स्थित्वा) वत्से, किं वा क्रियतेऽधुना? तस्य अन्तिमकालः समागत इति केनापि नावगतम्। किन्तु 'वृद्धा अनुपेक्षणीया, विशेषतो रुग्णादशायामिति मया बहुश उक्तम्। पुण्यवान् ते श्वसुरः स्वकर्तव्याणि समाप्य अधुना स साधनोचितं धाम गतः इति नास्ति शोकावसरः।

जया—सत्यमेतत्। किन्तु मातरेतदेव मे हृदि शल्यं वर्तते यदसकृत् याचितापि कठोरहृदयाहं न मनागपि तमद्राक्षम्। महान् खलु मेऽपराधभारः।

(ततः प्रविशति रमानाथः)

रमानाथः—कथं युवां परिदुर्मनायिते इव दृश्येथे।

इन्दिरा — पश्येदानीमात्मनोऽविमृश्यकारितायाः फलम्। जामातुस्ते पितृदेवः स्वर्गगतः।

रमानाथः—कथं मृत इति?

इन्दिरा—अथ किम्? किमद्यत्वे मरणं विना स्वर्गं गन्तुं शक्यते? मया त्वमसकृदनुरुद्धोऽपि मद्वाक्ये कर्णं न दत्तवान्। तव हठकारितायाः फलं प्राप्तमेव।

रमानाथः—अहह, किमनेन मदुपालम्भेन ? किं तत्रभवान् मया व्यापादितः ? काले पूर्णे यदि स म्रियतेऽत्र मम को दोष इति बोद्धुं न पार्यते ।

इन्दिरा—का त्वां वदति स त्वया व्यापादित इति । किन्तु त्वयैव स एकापत्यः चरमे समये परमस्नेहभाजनस्य स्नुषायाः मुखदर्शनसुखाद् वञ्चितः । सुव्रतेन तत् पितृव्येन च अन्तिमे एकदिवसकालमात्रं तत्र गमनाय याच्यमानापि जया, त्वया परीक्षाव्यपदेशेन न प्रेषिता, एतेन महाननर्थोजातः ।

रमानाथः—किं मया न प्रतिश्रुतं, परीक्षायां समाप्तायामपरेद्युरेव सा मया सह पोडितं श्वशुरं द्रष्टुं गमिष्यति ? को वेद एतस्मिन्नेवावसरे स परलोकं यास्यतीति ? भाविनीं घटनां को ज्ञातुमर्हति ?

इन्दिरा—अतएव सावधानं न भवितव्यम् । विमृश्यकारितया कर्म कर्तव्यम् । भविष्यद्गर्भनिहितं वस्तु ज्ञातुं न शक्यते किन्तु कल्पनासाहाय्येन अनुमातुं शक्यते । वृद्धे वयसि स्थितस्य गुरुतररोगग्रस्तस्य प्रार्थनापूरयितव्यैव । मासाधिककालं बारम्बारं प्रार्थ्यमानेनापि त्वया उपेक्षिता तस्य प्रार्थना । गच्छेदानीं कन्यासमभिव्याहारेण जामातृगृहम् । जये, अद्यैव त्वया गन्तव्यम् ।

जया—एवमेव । पितः, एहि अन्तःपुरं यावः तत्र गमनाय सामग्र्यादिकं एकत्रीकुर्वः ।

(निष्क्रान्तः सर्वे)

(द्वितीय दृश्यम्)

(ततः प्रविशति रमानाथः स्वगृहे)

रमानाथः—हा धिक् कन्यापितृत्वम् । कन्याहेतोरेव जामातृगृहे एतावानपमानः सोढः । अन्यथा रमानाथशर्माणमवमत्य कः स्थातुमुत्सहेत् ?

(आसन उपविशति)

(ततः प्रविशतिचिन्ताकुला इन्दिरा)

इन्दिरा—न जाने, किं पुरापतितम् ! पतिगृहं गता कन्या पित्रा सह अञ्जसैव प्रत्यावृत्ता । नूनं किंचिदत्याहितमापतितम् ? पृष्टा तु कन्या अधोमुखो तिष्ठति न किंचिदपि वदति । एष आर्यपुत्रो दुर्मनायित एव आसने उपविष्टः । भवत्वेनमुपसर्यामि । (उपसृत्य) आर्यपुत्र किं वृत्तं तत्र ? अन्तः पुरमगत्वा कथमत्र तुष्णीं तिष्ठसि ? एतावन्तं पंन्थानं गत्वा न तत्क्षणादेव प्रत्यावृत्तस्त्वं परां श्रान्तिमापन्नः । कथय किं तत्र दृष्टम् ।

रमानाथः—अप्रियश्रवणेन किम ? तथापि श्रोतुमुत्सुकासि चेच्छृणु । तैस्तव कन्या न स्वीकृता ।

इन्दिरा—किं, किं—न स्वीकृता ?

रमानाथः—अथकिम् । नास्ति पतिगृहेऽस्याः प्रवेशाधिकारः ।

इन्दिरा (मुहूर्तं तुष्णीं स्थित्वा दीर्घं निःश्वस्य)—एवंविधाशंकयैव कम्पितमासोन्मे मनः । किमिदानीं कर्तव्यम् ? ईदृश एव वर्तमानशिक्षायाः प्रभावो यदपराद्धा तव कन्या पत्युः तत्पितृव्यस्य च पादयोः पतित्वा तयोरनुनयेऽसमर्था । त्वमपि कन्यामेवं कर्तुं नादिदेशिथ । महदाश्चर्यमेतत् ।

रमानाथः—किं मत्तस्तयोरनार्ययोरनुनयादेशः ? किं ब्रवीषि ? प्रणतायां जयायां मयि च अभिवादनपरे अशिष्टेन सुव्रतपितृव्येन परिहासतरलस्वरेण 'किमर्थमागमनमि' ति जिज्ञासितम् । अवमानज्वलितचेतसापि मया इयं ते स्नुषा परीक्षासमाप्त्यनन्तरं स्वगृहमागतेत्युक्ते तेनैवं परुषं भाषितं-"यया सीतायाः सावित्र्याश्च आदर्श अवधीरितो, यया मुमूर्षुः श्वशुरोऽवज्ञातः सा नास्माकं गृहवधूः । नास्ति तया सह कोऽपि सम्पर्कोऽस्माकम् । बारं-बारं प्रार्थ्यमानयाप्यनया वृद्धः पीडितः परमस्नेहमय एकापत्यः श्वशुर उपेक्षितः । सकृदपि सा तं द्रष्टुं नागता । ज्ञातव्यमेतदधुना यद् भ्रातुर्मे प्राणतन्तुभिः सह एतस्या अस्मद्गृहेण सम्बन्धोऽपि छिन्नः ।" अतः परमपि तच्छन्दोऽनुवृत्तिः क्रियेत ?

इन्दिरा—ततस्ततः ?

रमानाथः—ततः संयमितक्रोधेन मयोक्तं "दूरस्थजनेन रोगिणः वास्तविकी दशा ज्ञातुं न पार्यते । स मुमूर्षुरित्यस्माभिरज्ञातमेवासीत् ।"

( शेषांशः २५ पृष्ठे )

# वसन्तसमागमनम्

डॉ० नरेन्द्र अवस्थी, सहायक आचार्यः
संस्कृत-विभागः जोधपुरविश्वविद्यालयः, जोधपुरम्

संत्राहि नो मदन ! तारकभीतिभीतान्,
नान्यो विधिस्तु शिवशक्तिसमन्वयस्य ।
श्रुत्वा वचः भयवहं सुरपार्थिवस्य,
नौमीशमीशपतिदृष्टितनुत्यजन्तम् ॥

सखि ! पश्य वसन्तसमागमनम्,
नहि दृष्टमितः परम्, आलि ! कथम् ?

[१] सुमनःस्थितषट्पदश्रेणियुतं,
सकलार्तिहरं राजीवयुतं,
सखि ! पश्य मरुस्थलमार्द्रयुतं,
नहि दृष्टमितः परम्, आलि ! कथम् ?
[ सखि ! पश्य वसन्त० ]

[२] कमनीयकलात्मकता न स्तुता,
कविकण्ठगता न तथा ममता,
सखि ! पश्य वरं राजीवस्मितं
नहि दृष्टमितः परम्, आलि ! कथम् ?
[ सखि ! पश्य वसन्त० ]

[३] नवपल्लविता हि लता ललिता,
ललना नवयौवनदीप्तियुता,
सखि ! पश्य मनोभवमुक्तशरं,
नहि दृष्टमितः परम्, आलि ! अलम् ॥
[ सखि ! पश्य वसन्त० ]

□

---

( २२ पृष्ठस्य शेषांशः )

अतः विश्वशान्त्याः विश्वबन्धुत्वस्य च कृतेऽपि नूतनशिक्षानीतौ संस्कृतस्य स्थापनम् आवश्यकं वर्तते ।

नैतिक शिक्षायाः कृतेऽपि संस्कृतस्य ज्ञानम् आवश्यकं वर्तते । अस्याः एव भाषायाः साहित्यं यथा रामायणं, महाभारतम् इत्यादयः ग्रन्थाः उपदेशद्वारा इतिहासद्वारा च नैतिकतां जीवने श्रेष्ठं स्थानं प्रददति । केवलं सम्पूर्णे महाभारते नैतिकतायाः एव गुणगानं वर्तते । तस्य च सर्वोपरि महत्वं मन्यते । अतएव केनापि कविना उक्तम्—

संस्कृतभाषा ही मानव में पावक भाव जगाती ।
इसके छायास्पर्शमात्र से नैतिकता आ जाती ॥

अतः नैतिकशिक्षायाः कृतेऽपि नूतनशिक्षानीतौ- त्रिभाषासूत्रे संस्कृतस्य स्थापनम् आवश्यकम् वर्तते ।

मान्याः भारतीयजीवनम् अपरिसीमशक्त्या समन्वयकरणस्य श्रेयः संस्कृतभाषायाः तथा अस्याः साहित्यस्यैव अस्ति । या आध्यात्मिकं, नैतिकं, साहित्यिकं, सामाजिकादिसर्वं अनेकैः दृष्टिभिः भारतीयजीवनाय प्रेरणां दत्तवती अस्ति । अतः एतेषां समेषाम् आवश्यकतानाम् पूर्त्तये "नूतनशिक्षानीतौ त्रिभाषासूत्रे संस्कृतस्य स्थापनम् आवश्यकम् वर्तते । किं बहुना—

"भारतस्य प्रतिष्ठे द्वे संस्कृतं संस्कृतिस्तथा" □

( २४ पृष्ठस्य शेषांशः )

तेन उच्चैः स्वरेणोक्तः, स्तब्धो भव । अतः परं संवादेन नास्ति प्रयोजनम् । गन्तुमर्हास्यधुनाकन्या-द्वितीयः ।" न केवलमेतावतैव स सन्तुष्टस्तेन क्रूरेणः मत्समक्षमेव अदूरस्थः स्वभ्रातुष्पुत्र आहूयउक्तः "अद्यप्रभृति तव नास्ति वध्वा सह सम्बन्धः । अपरिचितामेवैनां मन्यस्व ।" तेनापि पापिष्ठेन 'एवमेव भवतु' इत्युक्तम् । पुनरपि वक्तुकामासि तयोरनुनयविषये ?"

इन्दिरा—हा विधातः, एवमेव लिखितमासीद्दुहितुर्मे ललाटे ?

रमानाथः—नार्हास्येवं वक्तुम् । भाग्यवत्येव मे पुत्री यद्दिष्ट्या तादृशैर्नीचजनैः सम्पर्को झटित्येव छिन्नः ।

इन्दिरा—तैः कठोरभाषा व्यवहृताचरितं च कठोरमिति कृत्वा ते नीचजना इति वक्तुं न शक्यते । एतदेव स्मर्तव्यं यद् युष्माभिरेव प्रथममपराद्धम् ।

रमानाथः—शान्तम् । अलंतयोः स्त्रीजात्यवमानिनोः समर्थनेन । शृणु यदुच्यते, अद्यावधि कन्या मे अनूढेति मन्तव्या । स्वल्पकालस्य स्मृतिः प्रोञ्छितव्यैव । नोत्सहे वृथा वाक्व्ययं कर्तुम् । अधुना शयनागारं गच्छामि । (निष्क्रान्तः)

इन्दिरा—(दीर्घं निःश्वस्य) भवितव्यस्य द्वारं कः पिधातुमीष्टे ? यामि कुत्र जयेति प्रेक्षे । (निष्क्रान्ता) □

# हा नैतिकता गता

**प्रो० रामेश्वर शर्मा**

३ विकासनगर भिवानी हरियाणा

कुसुम-हार-सुशोभितकंठकैः, जय जयते मनोहारघोषकैः ।
यदि सदाचरणं न हि जीवने, किमु जयैर्विजयैश्च भविष्यति ? ॥ १ ॥

पणकलोभ-विमोहितमानसाः पदकृते च विनाशित निष्ठता ।
प्रिय सखे ! यदि नैतिकता गता, किमु पदैर्विभवैश्च भविष्यति ? ॥ २ ॥

इतर-दूषणता प्रियता मम, निज विभूषणता बहु रोचते ।
द्वय मदो भवितुं न हि पारयेद्, अयि सखे ! किमिदं सुजनोचितम् ॥ ३ ॥

अपर-दोष-विदूषणमज्जनो, निजमनैतिकमापदमस्तकम् ।
अहह ! पश्यति तन्न कदापि सः, अपरमेव दृशौ ननु पश्यतः ॥ ४ ॥

जगति धूर्तंतया तव जीवनम्, क्षण महो ! प्रभवेज्जन-मोहकम् ।
स्फुटति शीघ्रमिदं जनतामुखैः, चलति चर्चरिका स चराचरे ॥ ५ ॥

यदि दुराचरणं बहुरोचते, कुरुत देव समग्र समीहया ।
तुदति तथ्यमिदं मम मानसम्, जगति दम्भ-कथा कथनं कथम् ॥ ६ ॥

दलित-दुर्गतिरद्य विलोक्यते, तदपि मुञ्चति कोऽपि न शोषणम् ।
विषमता जनजीवनगोचरा, वद सखे ! क च नैतिकता पुनः ॥ ७ ॥

सकललोकनिरन्तरवञ्चकाः, तदपि ते कथयन्ति निजोच्चताम् ।
वयमहो ! प्रभवो जननायकाः, मनुजतापहरा जन-सेवकाः ॥ ८ ॥

कपटवेशसुवेष्टितदेहिनो, विषयलिप्तचलेन्द्रियचञ्चलाः ।
यतिवराअवरा मुनिकमंसु, किमिति तच्चरितं प्रतिभाति ते ? ॥ ९ ॥

गुरुवरा हृदयेन न कुर्वते, पठन-पाठनयोरपि कर्म ये ।
तदपि ते स्पृहयन्ति गरीयसे, श्रमविना न कदापि समादरः ॥ १० ॥

अहरहर्युवशक्तिरनुत्तमा, भवति राष्ट्रकृते दहनात्मिका ।
रुदनमतदमुष्य न साधकम्, गुरुसदाचरणं हि तदुत्तरम् ॥ ११ ॥

निखिलविश्वगुरुप्रभुभारतम्, चरितहीनतया दलितं पुरा ।
सुजनयोजनयाधिगतं फलं, किमु वयं प्रभवेम च खादितुम् ॥ १२ ॥

स्वजनहिंसनमत्र विगर्हितं, घृणितजातिगता रिपु-भावना ।
परकरेषु बिभेदक-खेलनम्-दहति देश ममुञ्च परस्परम् ॥ १३ ॥

अमरवाग् भवतादमरा वरा, जयतु काव्यकला सकला सदा ।
सरस-सभ्य-सभा लभतां यशः, जनवरैः प्रवरा भव भूर्भवेत् ॥ १४ ॥





# म्याऊँ म्याऊँ

प्रो० ई० पी० भरत पिषारटिः केरल

कश्चित् ग्रामः अवर्तत । तत्र एकस्मिन् गृहे कश्चित् बिडालः अवसत् । तस्य पत्नी शलभिका आसीत् । तौ अतितरां स्निग्धौ आस्ताम् । शलभिकां विना बिडालस्य जीवितं दुःसहमासीत् । बिडालं विना शलभिका च जीवितुं न ऐच्छत् । तौ सममेव सिनेमां द्रष्टुं जग्मतुः । किं बहुना' तौ सममेव स्वपितः स्म । सममेव अहसताम् । सममेव अरुदिताम् च ।

काले गते, शलभिका गर्भं दधार । अथ तौ नक्तं प्रतिदिनं विवादमुखरौ । अभूताम् ।

शलभिका वदति स्म । मम गर्भगतायाः प्रजायाः पक्षपुटं शबलं स्यात् । सा आकाशे मया सह डयिष्यते । विडालः वदति स्म । अस्माकं प्रजा नैव पुत्री, किन्तु पुत्रः स्यात् । तस्य ममेव श्मश्रु स्यात् । ममेव लांगूलं च स्यात् । स कोमलः म्याऊँ म्याऊँ रणित्वा मया सह इतस्ततः कूर्दिष्यति ।

एवं तौ प्रतिदिनं मुखरौ भूत्वा यावदर्धरात्रं शय्यायां शयाते तावत् मत्कुणा आगत्य माध्यस्थ्यं कुर्वते ।

अस्तु । बिडालमातुल, शलभिकामातुलानि, युवयोः प्रजा सः वा सा वा अस्तु । तस्या लांगूलमपि स्यात् । पक्ष पुटमपि स्यात् । सा पित्रा सह कूर्दिष्यते । मात्रा सह डयिष्यते च ।

तौ दम्पति तृप्तावास्ताम् । तौ स्वप्रजाया विचित्रं रूपं विक्रमं च सङ्कल्पे दृष्ट्वा सुखं निद्रामभजताम् । एवं तौ दिनानि निन्यतुः ।

एकस्मिन् हेमन्तदिने नक्तं भोजनार्थं तौ रोटीं पाचयितुं निश्चयमकुरुताम् । बिडालः सक्तुशाकादिकमानेतुं "मशकापणं" अगच्छत् । शलभिका तु अङ्गारं ज्वलयितुं खद्योतं आनयत् । प्रथमं एकं खद्योतं, ततः त्रीन्, एवं सा खद्योतशतमानयत् । तान् सर्वानपि पुञ्जीकृत्य सा स्वं पक्षपुटं वितत्य वीजयितुमारभत । अग्निप्रभूतं जज्वाल । अन्ते अग्निज्वालाः तस्याः पक्षपुटमभ्यपतन् । शलभिका तदा पूर्णगर्भा आसीत्, अतः सा झटिति उत्थाय धावितुं नाशकत् । अतः प्रथमं अग्निः तस्याः पक्षपुटमभ्यपतत् । ततः क्षणात् स भस्मीभूता ।

बिडालः शक्तु-शाकादिकं पृष्ठेन समूह्य क्लान्तः क्लिन्नश्च आपणात् प्रतिनिवृत्तः । गृहकपाटं प्राप्य स 'म्याऊँ म्याऊँ' आकारयामास । "शलभिकायाः स्निग्ध-मधुरः शब्दो न श्रूयते । कथं एतत् ? कथमेतत् ? । स पुनरपि आकारयत् । म्याऊँ म्याऊँ म्याऊँ....।" अथापि न श्रूयते । किमेतत् ? कथमेतत् ? स उत्कण्ठाकुलः सञ्जातः । स तथैव भित्तेरुपरि उत्प्लुत्य इतस्ततौ निरैक्षत ।

अविहा ! अविहा ! तत्र सा प्राणप्रिया भस्मीभूता अदृश्यत । बहवः खद्योता इतस्ततः अपसरन्ति च । स उच्चैराक्रोशत् । म्याऊँ म्याऊँ म्याऊँ....।

सर्वेपि सम्बन्धिनः तदभिमुखमभ्यधावन् । मशकाः मत्कुणाः पिपीलिकाः मण्डूकाः कुलीराः । सर्वेऽपि ते बिडालेन सह विलपितुमारभन्त ।

बिडालः विललाप ।

"हन्त ! मम प्राणप्रिया गता । मम प्राणाधिका उपरता । सर्वेभ्योऽप्यधिकं सा मयि स्निह्यति स्म । म्याऊँ म्याऊँ ।

संबन्धिनः सर्वेपि विलेपुः ।

"हन्त मम प्राणप्रिया गता । मम प्राणाधिका उपरता । सर्वेभ्योऽप्यधिकं सा मयि स्निह्यति स्म । म्याऊँ म्याऊँ....।"

# संघसंस्थापकाः डॉ० हेडगेवारमहोदयाः

पं० गुलामदस्तगीरः विराजदारः



भारतदेशः पारतन्त्र्ये आसीत्। स्वातन्त्र्यप्राप्त्यर्थं प्रयत्नाः समारब्धाः। सर्वप्रथमतया काँग्रेसपक्षः संस्थापितः अभवत्। एषः एक एव पक्षः आसीत् अन्यपक्षसंस्थापकाः अपि अस्य पक्षस्य एव सभासदाः आसन्। अग्रे अस्य एकस्य पक्षस्य सभासदेषु मतमतान्तराणि समारब्धानि। कैश्चित् सदस्यैः अस्य पक्षस्य त्यागं कृत्वा अन्ये अपि पक्षाः संस्थापिताः राष्ट्रियस्वयंसेवकसंघः १९२५ तमे ख्रिस्ताब्दे संस्थापितः अभवत्।

राष्ट्रिय स्वयंसेवक संघस्य संस्थापकाः डा० केशव-हेडगेवारमहोदयाः। एते अपि मूलतः काँग्रेसपक्षीयाः एव। काँग्रेस पक्षे विशिष्टजातीयानाम् अनुनयं मर्यादां त्यक्त्वा अपि भवति स्म इति ज्ञात्वा, तथा च एतस्मिन् पक्षे अनुशासनस्य न्यूनता एव सदा अनुभवपथम् आगच्छति स्म इत्यपि अवगम्य काँग्रेसपक्षे एव चारित्र्य सम्पन्नानां, सदाचारिणां अनुशासनबद्धानां, शीलवतां च देशभक्तयुक्तानां संघटनम् आवश्यकम् अस्ति इति विचारेण प्रेरितानां डॉ० हेडगेवारमहोदयानां प्रयत्नाः सभारब्धाः। परम् एतस्मिन् विषये तस्मिन् काँग्रेस-पक्षे एनैः महोदयैः अनास्था एव अनुभूता।

एतेषां महोदयानां स्वातन्त्र्य प्राप्तिः कथं भवेदिदि चिन्तनापेक्षायाः स्वातन्त्र्यं कथं किमर्थं च निर्गतमिति एव चिन्तनमधिकतया चलति स्म। एतेषामेतदेव चिन्तना अधिकाभिवृद्धिपदम् प्राप्तम्। ऐतिहासिकोदाहरणानि दृग्गोचरी भवन्ति स्म। अस्य देशस्य सुदीर्घां उज्ज्वलपरंपरां अभिमानास्पदसंस्कृतिं च विस्मृतवताः अस्मदीयपूर्वजाः। स्वधर्म-स्वत्त्व-स्वाभिमानशून्यता अपि अभिवृद्धिगता। सर्वत्र उदासीनता एव प्रसृता जाता। ततः सम्पूर्णः भारतीयसमाजः स्पृश्यास्पृश्यता-उच्चनीचता-आदिभिन्नभेदाभेदैः ग्रस्तः जातः। पुनश्च समाजस्य बन्धनादिकं परित्यज्य परस्पर-सहकार-सहयोग-सहिष्णुतादिगुणान् च त्यक्त्वा अयं भारतीय-समाजः अधिकाधिकां दुर्गतिमेव गतः। अतः एव पारतन्त्र्यमागतमस्ति। स्वातन्त्र्य प्राप्तेः अनन्तरमपि एवमेव परिस्थितिः स्यात् तदा अपि निरर्थकमेव स्वातन्त्र्यम्। अतः बलसम्पन्नसच्छीला-सदाचारि-प्रशि-

( शेषांशः ४६ पृष्ठे )

# एड्स से बचें

## जीवन साथी के अलावा अन्य किसी के साथ यौन सम्बन्ध जानलेवा हो सकता है।



# सावधान रहें



केन्द्रीय स्वास्थ्य शिक्षा ब्यूरो (स्वास्थ्य सेवा महानिदेशालय)
स्वास्थ्य और परिवार कल्याण मंत्रालय, कोटला रोड,

# ज्ञानशिविरम्

१—१९८० वर्षीयः फिल्मोत्सवः कुत्र आयोजितः ?

(क) नवदिल्ली, (ख) **बैंगलोर,** (ग) मुम्बई, (घ) हैदराबादः

२—लोकसभायाः गोष्ठी एकस्मिन् सत्रे न्यूनातिन्यूनं कति वारं आहूयते ?

(क) **द्विवारम्,** (ख) एकवार, (ग) वारत्रयम्, (घ) चतुर्वारम्

३—भारतीयलोकसेवा कस्य शासनकाले प्रारब्धा ?

(क) **लार्ड डालहाउसी** (Lard Dalhousie) (ख) लार्ड कर्जनः (Lard Curzon)

(ग) विलियम वेंटिकः (William Bentinck) (घ) लार्ड कार्न वालीसः (Lard Corn Wallis)

४—उपनिषदः कस्य विषयस्य प्रतिपादकाः सन्ति ?

(क) धर्मस्य, (ख) योगस्य, (ग) **दर्शनस्य,** (घ) न्यायस्य

५—स्वतन्त्रभारतस्य द्वितीयः राष्ट्रपतिः कः आसीत् ?

(क) वी०वी० गिरिः (ख) **डा०एस० राधाकृष्णन्** (ग) डा० राजेन्द्र प्रसादः (घ) डा० जाकीर हुसैनः

६—१९८० वर्षीया ओलम्पिकस्पर्धा कुत्र आयोजिता जाता ?

(क) दिल्ली, (Delhi) (ख) मोन्ट्रील, (Montral) (ग) मास्को, (Mosco)

(घ) वाशिंग्टन (Weshington)

प्रेयांसो वयस्याः ! स्तम्भेऽस्मिन् उट्टंकिताः सर्वेऽपि प्रश्ना १९८० वर्षीय आई० ए० एस० प्रारम्भिकपरीक्षायां पृष्टाः सन्ति । एष प्रथमः प्रयासः । विश्वभाषा संस्कृतमाध्यमेन कथं आई० ए० एस० सदृश्यः परीक्षाः सफलतया उत्तरणीया इति विषये कमपि पाठ्यक्रमं नियमितरूपेण चालयितुं कामयते । योजनायामस्यां कथमग्रेसरणीयम् ? के वा उपायाः अनुष्ठीयन्ताम् ? किं प्रत्यंकमेव कश्चन पाठ्यक्रमः प्रकाश्यतामाहोस्वित् काचन पत्राचारपाठ्यक्रमात्मिका योजना प्रकल्प्यतामित्येतेषु समेष्वपि विषयेषु भवतां मार्गदर्शनं, सत्परामर्शं सहयोगञ्च प्रार्थयामहे । भवन्तः कथमस्मानुत्साहयन्ति कथमेनां योजनां द्रढयन्ति ? माध्यमेन चानेन कथं सुरभारतीं सेवन्ते इत्यादिकं भवत्प्रेषितैः पत्रैर्ज्ञास्यामः—सम्पादकः । □

# खिद्यते राष्ट्रीयता

—ब्रह्मदेव झा,

कुत्र गच्छतु किं वदतु वा, सर्वतः सम्पीडिता ।
कृश्यती सर्वत्र सततं, खिद्यते राष्ट्रीयता ॥
स्वाधिकारान् वर्धितुं वै, यत्नशीला सर्वदा ।
राष्ट्रभावं विस्मरन्ती, मोदते प्रान्तीयता ॥
अधिकाधिकं प्रतिनिधित्वं, शासनेऽधिगमाय वै ।
कोलाहलं बहुकुर्वती, स्पर्धते जातीयता ॥
गुरुद्वारं मस्जिदं वा, मन्दिरं गिरिजागृहम् ।
"काऽपि प्रविशतु नैव अन्या" कूर्दते धर्मान्धता ॥

यया बहुशः राष्ट्रभक्तिः, यत्र तत्र विखण्डिता ।
एधते भाषारतिः सा, लघुतया संश्लेषिता ॥
व्यक्तिपूजा पूज्यते किल, क्लिश्यते गणतन्त्रिता ।
स्वार्थभावं साधयन्ती, दृश्यते दलवर्तिता ॥
चिन्तयन्तो स्थितिमिमां मे, भवति बुद्धिः विह्वला ।
नैव शरणं कमपि जाने, रोचते नहि वल्गिता ॥
"यदा यदेति" या प्रतिज्ञा, त्वया कस्मिंश्चित् कृता ।
रक्ष्यताम् सपदि प्रभुवर ! शोभते किं विस्मृता ? ॥

□

**पुस्तक समीक्षा**

# पाश्चात्त्यदर्शनम्[1]

समीक्षकः, **पं० जगन्नाथशास्त्रितैलङ्गः**
अध्यापकः योगतन्त्रविभागस्य सं० सं० वि० वि०, वाराणसी

लेखकस्य इयं प्रथमा कृतिः पाश्चात्त्यदर्शनस्य ग्रीकदर्शन-मध्ययुग-आधुनिकयुगानां प्रामाणिकम् ऐतिह्यं दार्शनिक-सिद्धान्तसहितं विवेचयति, यस्य सिद्धान्ताः भारतीय-दर्शनस्य आस्तिक - नास्तिकशाखा-विभक्तस्य विचार-धाराभिः सामञ्जस्यं भजन्ते ।



डॉ० विजयशंकर चौबे

अस्य ग्रन्थस्य प्रथमाध्याये ग्रीकदर्शनविवेचनावसरे तस्य दार्शनिकानां श्रीमतां थेलीज-एनेक्जिमेण्डर – एनेक्जिमेनीज–पाइथागोरस – पार्मेनाइडीज-जेनो-मेलिसस-जेनोफेनीज–हेरेक्लाइटस-एम्पेडोक्लीज-ल्यूसिपस - डिमांक्रिटसश्च - एनेक्जेगोरस–प्रोटागोरस-सुकरात-प्लेटो-आरस्तूनां सिद्धान्तां विवेचनम्, द्वितीयाध्याये मध्ययुगस्य दार्शनिकसमस्यानां प्रतिपादनावसरे श्रीमता सन्तआगस्ताइन-जॉनरकाटसएरिजेना-सन्त एन्सेलम-थामसएक्विनसानां सैद्धान्तिकं विवेचनम् तथा तृतीयाध्याये आधुनिकयुगस्य वैशिष्ट्यानां विवेचनाय श्रीमता रेनेडेकार्त-स्पिकोजा-लाइबनित्स-लॉक-बर्कलेह्यूम-हेगलमहाशयानां दार्शनिकं विवरणं प्रस्तुतं विदुषा ग्रंथकारेण ।

ग्रन्थारम्भे ग्रन्थकारः स्वयं कथयति विश्वस्य प्रायः सर्वेषु देशेषु भारतम्, चीनो ग्रीक-देशश्चैव प्राचीनतमायाः सभ्यतायाः संस्कृतेश्च जनक इति श्रेयः प्राप्तवानस्ति ।'·········भौगोलिकदृष्ट्या इमे देशा एकस्मादन्यतरादेतावन्मात्रं दूरवर्तिन आसन्, यदेतेषु विचाराणामादान-प्रदानमपि न संभवति स्म। अतस्त्रयाणां देशानां विचार-वीजं पृथक्-पृथक् पल्लवितं पुष्पितञ्च भवति स्म। यथा प्राच्यसभ्यतायाः संस्कृतेश्च जनकस्य श्रेयो भारतं प्राप्तवान्, तथैव पाश्चात्त्य-दर्शनस्य धर्मस्य च सूत्रपातस्य श्रेयो ग्रीकः प्राप्तवानस्ति ।'·········प्रारम्भत एव ग्रीकचिन्तनम् उन्मुक्तवातावरणस्य अन्वेषणं करोति स्म इति ।

लेखकेन ग्रीकदर्शनस्य आरम्भः ई० पूर्व षष्ठशताब्द्याम् अवसानञ्च प्रायः तृतीय शताब्द्यां जातम्। इतिहासदृशा ग्रीकदर्शनम् सुकरातपूर्वयुगसुकरातयुग-अरस्तूउत्तर युगेषु विभक्तम् । भारतीयदर्शने यथा वेदानां तथैव पाश्चात्यदर्शने ग्रीकदर्शनस्य महत्त्वं, यस्य ज्ञानं विना पाश्चात्यदर्शनस्य ज्ञानम् असम्भवम्। वस्तुतः ग्रीकदर्शनमेव पाश्चात्यदर्शनं जनयति। दर्शनस्य महत्त्वपूर्णानि अङ्गानि तत्त्वमीमांसा-प्रमाण-मीमांसा-आचारमीमांसा इत्यादि । ग्रीकदर्शने समेषाम् अङ्गानां समावेशः ।

मध्ययुगं हि आस्थाप्रधानं तथा धर्मप्रधानम् यत्र दर्शनसम्प्रदायः धर्मस्य दासः जातः । अस्मिन्नेव युगे

१. 'पाश्चात्त्यदर्शनम्' ले० डॉ० विजयशङ्कर चौबे, प्राध्यापकः, तु० धर्मदर्शनविभागस्य सम्पूर्णानन्द संस्कृत विश्वविद्यालयः, वाराणसी–२ मूल्यम्—रु० २१/–प्रकाशिका—श्रीमती चम्पा चतुर्वेदी, के० २९/३१ गणेशदीक्षित लेन, वाराणसी–२२१०० (उ० प्र०)

इसाईधर्मः प्रादुर्भूतः। ऐतिहासिकदृशा ३९५ ई० तः १४५३ ईस्वीस्यावधिर्मध्ययुगम्। अस्मिन्नेव काले धर्मदर्शनयोः परस्परः घनिष्टः सम्बन्धो जातः। अस्यामेवावधौ यूरोपीयसाम्राज्यराजधान्यां कुस्तुनतुनियापुर्य्यां वर्बराणां तुर्काणामधिकारोऽभूत। अतः ग्रीकदार्शनिकाः यूरोपादिषु देशेषु गत्वा स्वसभ्यतायाः संस्कृतेश्च प्रचारम् कुर्वन्। अस्मिन्नेव युगे ईश्वरीय (Christ) शक्तेः प्रज्ञायाश्च परस्परं सम्बन्धः स्थापितः। ख्रिस्तदर्शनदृशा ईसामसीह एव मनुष्यस्य सर्वप्रथमं रूपम्। इदं हि शास्त्रीययुग (Scholastic Age) रूपेणापि विख्यातम्। यत्र धर्मशास्त्राणां दार्शनिकी व्याख्या जाता। वस्तुतः धर्मशास्त्रस्य अन्धविश्वासा अत्र तर्काणामाधारेण समर्थिताः। अतः इदमन्धकारयुगमपि मन्यते। वस्तुतः इसाईधर्मस्य दुराग्रहणपूर्णानां मतानां व्याख्यानमस्मिन् युगे जातम्।

पाश्चात्यदर्शनस्य आधुनिकयुगं १४५३ ई० तः प्रारभते, यत्र यूरोपीयसाम्राज्य राजधान्याः पतनं तूर्काणामधिकारश्च जातः। अतः सहस्रशः यवनानी दार्शनिकाः इटलीदेशं गत्वा समस्त यूरोपमण्डले स्वपाण्डित्यं संप्रसारितवन्तः। १५१८ ई० वर्षे इसाईमतस्य कैथोलिकशाखां प्रति जनता अश्रद्दधाति स्म प्रोटेस्टैण्टमतं प्रति च प्रभाविताः। इतः पूर्वं पोप एव ईश्वरप्रतिनिधिः भूत्वा जनतां प्रशास्ति स्म। अस्मिन्नेव युगे बहु अन्वेषणं जातम्, यत्र कोपरनिकसो नाम खगोलवेत्ता समुल्लेखनीयः। एतादृशानां ग्रंथकाराणां गवेषणाभिः जनाः धर्मग्रंथान् प्रति विश्वासं भजन्ते स्म। अस्मिन् युगे मुद्रणयंत्राणामाविष्कारेणाऽपि ज्ञानस्य विस्तारः दिनानुदिनं जातः। पञ्चदशशताब्दितः सप्तदशशताब्दिपर्यन्तम् आधुनिकयुगं सांस्कृतिकपुनर्जागरणयुगमपि कथ्यते, यत्र यूरोपीय सांस्कृतिक जीवने सामूहिकक्रान्तिरभूत्। मध्ययुगीनः समाजः जर्जरितः, तदानीं तत्समाजद्वारा नवमूल्यानामङ्गीकारेण अयं प्रबुद्धकालः (Age of Enlightenment) अपि उच्यते।

चर्चस्य अवनतिः, वैज्ञानिकी उन्नति, रूढिवादस्यान्तः मौलिकचिन्तनस्य प्रभुत्वञ्च अस्य युगस्य विशेषताः। आधुनिकयुगस्य चिन्तनविद्या तिस्रः बुद्धिवादः अनुभववादः समीक्षावादश्च। बुद्धिवादस्य प्रवर्तकः डेकार्तः, अनुभववादस्य प्रवर्तकः लॉकः, समीक्षावादस्य च कान्टः आसन्। एवम् अध्यायत्रये विभक्तं ग्रीकदर्शन-मध्ययुग-आधुनिकयुगानां समस्तं विवेचनं करोति।

पाश्चात्यदर्शनं हि भारतीयदर्शनेन प्रभावितम्। उदाहरणार्थम्—थेलीजस्य सिद्धान्तः मनुस्मृतिप्रोक्तां जलीयसृष्टिम्। एनेक्जिमेण्डरसिद्धान्तः न्यायवैशेषिकस्य निर्विकल्पकं ज्ञानं, पातञ्जलयोगदर्शनस्य च निर्गुणब्रह्मसाक्षात्कारम्, एनेक्जिमेनीजस्य वायुसिद्धान्तः भारतीयदर्शनस्य पञ्चप्राणवायुसिद्धान्तं, पार्मेनाइडीजस्य सत्सिद्धान्तः सच्चिदानन्दपरमात्मनः सत्तत्त्वं, हेराक्लीटससिद्धान्तः बौद्धदर्शनसम्मतं क्षणिकवादम्, एनेक्जेगोरसस्य दर्शनं प्रत्यभिज्ञादर्शनस्य चितिस्वरूपम्, प्रोटागोरससिद्धान्तः चार्वाकसम्मतं शरीरात्मवादम्। सुकरातदर्शनस्य प्रत्ययगम्यं ज्ञानं प्लेटोमहोदयस्य च विज्ञानं वेदान्तिनां निर्गुणसगुणपरमात्मसिद्धान्तसदृशम्, अरस्तूमहोदयस्य च कारणतासिद्धान्तः न्यायदर्शनस्य प्रमाणत्रैविध्यं स्मारयति।

एवमेव मध्ययुगस्य सिद्धान्ताः भारतीयपौराणिकदर्शनधाराभिः सह सादृश्यं भजन्ते, यतः उभयत्र स्वर्गनरकादिकल्पना उपासना पद्धतयश्च विलसन्ति। देकार्तस्य द्वैतवादः जैनानां जीवाजीववादमुपस्थापयति। एवम् स्पिनोजालाइबनित्स-बर्कले-कान्ट-हेगलप्रभृतिदार्शनिकानां विचारधाराः भारतीयवेदान्तदर्शनस्य अद्वैतः विशिष्टाद्वैतः, बौद्धवसुबन्धुसिद्धान्तः, श्रीमद्भगवद्गीताप्रभृतिपौरस्त्यदर्शनैः सह सामरस्यं भजन्ते।

इदं हि पुस्तकम् आचार्यजगन्नाथोपाध्यायग्रन्थमालायाः प्रथमपुष्परूपेण प्रकाशितम्, डॉ० राधेश्यामधरद्विवेदिमहोदयेभ्यः समर्पितम्। प्रथमाकृतिरियं पाठकैः अभिनन्दनीया, येन युवालेखकोऽयं पुनः नवनवोन्मेषशालिग्रन्थान्तराणि स्रष्टुमुत्सहेत। ▫

# संस्कृतसेवार्थं पात्रप्रक्षालनेऽपि श्रेयः

—देवदत्तः

संस्कृतं सर्वासां भाषाणां जीवातुभूतमस्ति। अस्य प्रचारः प्रसारश्च विश्वस्मिन्नपेक्षितः। एतस्य सेवार्थं



यदि कुत्रचित् पात्रप्रक्षालनमपि कर्तव्यं भवेत् तदपि श्रेयस्करमेवेति एकस्मिन् पत्रकारसम्मेलने व्याहरता विश्वसंस्कृतप्रतिष्ठानस्य महामन्त्रिणा श्री देवदत्त महोदयेनोक्तम्। सः अग्रे कथितवान् यत्—किमधिकं—विदेशेष्वपि नैका एतादृश्यः पाठशालाः सन्ति यत्र संस्कृतमाध्यमेन अध्ययनमध्यापनं च प्रवर्तते। गणकयन्त्रे (कम्प्यूटर) अपि संस्कृतस्योपयोगिता इदानीं प्रकाशपथमुपगताऽस्ति। एतादृशं खलु संस्कृतं सर्वेऽपि आबालवृद्धाः पठन्तु इति धिया विश्वसंस्कृतप्रतिष्ठानेन मार्चमासस्य २५-२६ दिनाङ्कयोः नवदिल्यां (Constitution Club) इत्यत्र एकं द्विदिवसीयं संस्कृतसम्मेलनं समायोजितम्। यत्र पूर्वकक्षातः (प्राइमरी) दशमकक्षापर्यन्तस्य सचित्रसंस्कृतपाठ्यक्रमस्य प्रदर्शनं तत्र विचारणं च सम्पन्नम्।

संस्कृतस्याभ्युन्नतिं विश्वसन् सः अन्ते अवादीत् यत्—मम दृढः विश्वासोऽस्ति यत् "संस्कृतं भारतस्य राष्ट्रभाषा भविष्यति" इति श्रीमातुः शुभाशिषः अचिरेणैव सफलीभविष्यन्तीति॥ □

---

# संस्कृता-वन्दना

**आचार्यः—बाबूराम अवस्थी**

मो०—वाजपेयी कालोनी लखीमपुर खीरो (उ० प्र०)

('वन्दे मातरम्' इत्यस्य लये)

वन्दे संस्कृताम्।
सरलां सुखदां नवरसरञ्जितां शुद्धसाक्षरां संस्तुताम्॥
दिव्यालोकां समुदयशालिनीं
साधु सहृदयकविवरसेविताम्।
सुधामयीं शुभगतिदायिनीं विमलां वरदां वासिताम्॥
विद्योद्दीप्तामनुपमवैभवां
प्रेमपूरितसुरनरवन्दिताम्।
गरीयसीं गुरुजनशेमुषीं धनदां बलदां दीपिताम्॥
शब्दार्थश्रीसुविहितसाहितीं
ज्ञानगौरवगुणगणशोभिताम्।
यशस्करीं सुरतरुमञ्जरीं ललितां मधुरां मानिताम्॥
पुण्यप्राप्यामभिनवभारतीं
भव्यभावभरभूतिभूषिताम्।
सनातनीं श्रुतिपथपालिनीं परमां प्रवरां पूजिताम्॥
वन्दे संस्कृताम्॥

□

बोधकथा

## जीवनपरिवर्तनम्

लेः—जगन्नाथः

अथ कदाचिद् आंग्लशासनकाले 'वारेन्-हेष्टिंग्स' नामकः भारतवर्षस्य उपराजः बभूव। गङ्गागोविन्द-सिंहः तस्य प्रधानः सहकारी आसीत्। गङ्गागोविन्द-सिंहस्य अत्याचाराः इतिहासप्रसिद्धाः। सः उत्कलानां (ओडिशा-प्रान्तस्य) प्रमुखः अधिकारी (दिवान) अवर्तत, भोगविलासमयं च जीवनम् अनयत्।

एकदा सायङ्काले सः स्वकीय कृषिकार्यं निरीक्ष्य गृहं प्रत्यागच्छति स्म। मार्गे एकां कन्यां स्वपितरं प्रति एवं वदन्तीम् अशृणोत्—"तातः रात्रिः जाता, किन्तु अधुना अपि दीपः न प्रज्वालितः एषा अहं दीपं ज्वालयेयम्।" कन्यायाः तेषां सहजशब्दानां वैभव-विलासग्रन्थे युवक-कृष्णचन्द्रे महान् प्रभावः अभवत्। तस्य हृदये अपूर्वः भावः जागरितः। सः अचिन्तयत्—"इयं बाला किमपि उत्तमं वचनम् अवदत्। मम अपि यौवनं व्यतियाति। जीवनसंध्या समीपमायाति। परन्तु मया अद्यापि स्वहृदये ज्ञानदीपः न प्रज्वालितः। मया अपि अतिभीषणः भवसागरः सन्तरणीयः, किन्तु मया इदानीं यावत् का अपि सज्जा न कृता।"

जातमात्रे अस्मिन् विचारे सः संसारं परित्यज्य वृन्दावनम् अव्रजत्। तत्र सः लालाबाबुः इति नाम्ना प्रथितः अभवत्। ततः असौ तत्र रूप्यकलक्षैः एकं मन्दिरं निर्मापयांबभूव। स्वां सम्पूर्णसम्पदं च परोपकारे न्ययोजयत्। स्वयं च भिक्षाम् अटित्वा जीवन-निर्वाहं कर्तुम् आरभत। एका साधारणघटना तस्य जीवनयात्रायाः मार्गं सर्वथा परिवर्तयामास॥

सारः—

सद्गिरः सरलाः सत्याः सहजं समुदीरिताः।
हृद्गता द्रावयन्त्येव दुरितं हि दुरात्मनाम्॥ १॥
शुद्धा हृत्स्थोऽन्तरात्मा चेद् बाह्यावरणसंवृतः।
स्वल्पेनापि निमित्तेन सद्योऽसौ सम्प्रबुद्ध्यते॥ २॥
जीवन परिवर्तेत शब्देनैकेन हृत्स्पृशा।
चर्च्यमानो बहिर्दीपो हृद्दीपज्वालनक्षमः॥ ३॥



## "वरदानम्"

एकस्मिन् ग्रामे कश्चित् निर्धनः कृषकः निज-पत्न्या सह वसति स्म। तस्य सन्तानः न आसीत्, तस्य माता च अन्धा।

सः शिवस्य महान् भक्तः अभूत्। ग्रामस्य समीपस्थे घने जंगले शिवस्य एकम् मन्दिरम् अभवत्। आतपः स्यात् छाया वा प्रभञ्जनः स्यात् चक्रवातः वा, यत् किमपि स्यात् सः मन्दिरे नियमपूर्वकं शिवाय जलम् अर्पयति स्म।

एकदा भगवान् शिवः तस्य परमभक्तिं दृष्ट्वा अत्यन्तं प्रसन्नः। तद् महाशिवरात्रिदिनम् आसीत्। यदा सः शिवाय जलम् ददाति स्म तदा एव भगवान् तस्मै दर्शनं अददात्, अकथयत् च—"अहं त्वयि प्रसन्नः। त्वं कम् अपि एकम् वरं याचितुं अर्हसि।" कृषकः विचार्य अवदत्—

"भगवन्, अहं श्वः वरं याचिष्यामि।"

सायं सः तं सर्वं वृत्तान्तं स्वपत्न्यै निवेद्य अवदत्—"किं याचेयम्' इति विचारयितुम् असमर्थः। मातुः नेत्रे प्रार्थयेयम्, स्वस्मै सन्तानं धनं वा याचेयम्"।

तस्य पत्नी अति चतुरा आसीत्। किञ्चित् चिन्तयित्वा सा अकथयत्—"भगवन्तं इमं वरं याच। मम माता निजपौत्रं स्वर्णपात्रे रजत-चमसेन दुग्धं पिबन्तं पश्यतु।

कृषकः इमम् एव वरम् प्रार्थयत्। अचिरेण एव तस्य मातुः नेत्रे स्वस्थे जाते। तस्य दरिद्रता च दूरी-भूता। अथ एकदा तस्य चन्द्रसदृशः एकः पुत्रः अपि उत्पन्नः। तस्य माता सत्यम् एव स्वपौत्रं स्वर्णपात्रे रौप्यचमसेन दुग्धं पिबन्तं पश्यति स्म।

सारः—

प्रीत्या देवाय दातव्यं पत्रं पुष्पं फलं जलम्।
सत्ययाऽनन्यया भक्त्या प्रीतः स्यात् भगवान् सुखम्॥१॥
प्रसन्नः किं न भक्ताय प्रयच्छेद् भक्तभावनः।
धनं सौख्यं च सन्तानं शान्तिं मुक्तिं च शाश्वतीम्॥२॥



# ज्योतिषशास्त्रस्य महत्त्वम्

**उमाशंकर त्रिपाठी**
ज्योतिष-प्रध्यापकः—श्री रामानुज संस्कृत महाविद्यालयः
मिश्रपोखरा, वाराणसी

ज्योतिषां ग्रहनक्षत्राणां गतिमधिकृत्य कृतं शास्त्रं ज्योतिषशास्त्रम् उच्यते। ज्योतिषशास्त्रं वेदाङ्गं यथोक्तम्—

"शिक्षा कल्पो व्याकरणं निरूक्तं ज्योतिषां गतिः।
छन्दसां लक्षणं चैव षडंगो वेद उच्यते॥"

वेदा हि यज्ञार्थमभिप्रवृत्ताः कालानुपूर्वा विहिताश्च यज्ञाः। तस्मादिदं कालविधानशास्त्रं यो ज्योतिषं वेद स वेद यज्ञान्। तत्र ब्रह्माण्डान्तरवर्तिनो ये चराचर जीवा वर्तन्ते तेषु पञ्चमहाभूतानि त्रयो गुणाः सप्तधातवश्च विद्यन्ते ते ग्रहनक्षत्रज्योतिः प्रभावादेव जायन्ते।

अस्मिन् भूमण्डले क्वचित् शरीरे मांसप्राचुर्यं, क्वचित् अस्थिबाहुल्यं, कश्चिद्दीर्घः, कश्चित् पङ्गुः, कश्चिदन्धः, काणो, बधिरः इत्यादि ग्रहयोगबलात् भवतीति जातके। प्रत्यक्षं अनेकानि योगानि दृश्यन्ते स्पष्टरूपेण। तत्र येषां-येषां यादृक् प्राक्तनकर्म तदनुसारमेव जन्म गृह्णन्तिः इह कर्मवशेन शुभाऽशुभं तस्य कर्मणः प्राप्तिः। यथा वाराहमिहिरेणोक्तं—

"यदुपचितं अन्य जन्मनि-
शुभाऽशुभं तस्य कर्मणः प्राप्तिम्।
व्यञ्जयति शास्त्रमेतत् तमसि
द्रव्याणि दीप इव॥"

अस्य शास्त्रस्य स्कन्धत्रयं विद्यते—'सिद्धान्त-संहिता-होरा चेति स्कन्धत्रयं मतम्।'

स्पष्टतया बृहत्संहितायां वाराहमिहिरेण प्रतिपादितम्—

ज्योतिःशास्त्रम् अनन्तभेद-
विहितम् स्कन्धत्रयाधिष्ठितम्।
ततः कात्स्र्न्योपनयस्य नाम-
मुनिभिः सं कीर्त्यते संहिता॥

सिद्धान्त - संहिता - होरा-
रूप - स्कन्ध - त्रयात्मकम्।
वेदस्य निर्मलं चक्षु-
र्ज्योतिः शास्त्रम् अकल्पयत्॥

इयमेव सा भारतभूमिः, इयमेव सा ज्योतिषविद्या, यत्रैतद् विद्योपासका त्रिकालज्ञा भवन्ति स्म। दैवज्ञा वस्तुतो दैवज्ञा भवन्ति स्म। सर्वैव ज्योतिर्विदः स्वगृहे स्वयमेव ग्रहादीनां वेधोपकरणीभूतविविधयन्त्रादीनां निर्माणं कुर्वन्ति स्म।

इदं शास्त्रं हि कल्पतरुरिव यावत् सेवनीयम् तावदेवफलमेति अस्मिन् शास्त्रे महीयानेकोऽयं गुणः नान्यस्मिन् शास्त्रे अल्पयोग्यता कः किमप्यात्मप्रयोजनं कर्त्तुं पारयेत।

कल्पद्रुमाऽनुकल्पेऽस्मिन् शास्त्रे शाखाऽनुकल्पं संहिता, तन्त्रं, होरेति स्कंधत्रयं फलपत्रानुकल्पं विविधविषयजालसंकुलमाभाषते।

सिद्धान्तपक्षे सूर्यसिद्धान्तः सिद्धान्तशिरोमणिः सिद्धान्ततत्त्वविवेकश्चेति सिद्धान्तग्रन्थत्रयस्य, ग्रहलाघवाभिधस्यैकस्य करणग्रन्थस्य, लीलावती, बीजगणितेति गणितग्रन्थद्वयस्य, सरलचापीय त्रिकोणमितीय गणितस्य चाद्यत्वे प्रचारो वर्तते। प्रतिभाज्ञानं, खगोल विज्ञानं, ग्रहणशृङ्गोन्नतिः ग्रहयुतिः ग्रहोदयास्त-वक्रत्व-मार्गत्व, पञ्चाङ्गनिर्माणप्रपञ्चग्रहस्पष्टीकरण-यंत्राणि साधनानि वर्तन्ते।

संहिता पक्षे संहिताग्रंथेषु केवलं तावदेकस्यैव वाराहमिहिरकृतस्य बृहत्संहिताभिधस्येदानीन्तने लोके उपलब्धिः प्रचारश्च। संहितास्कंधे ग्रहसंचारवशेन जगतां शुभाऽशुभं, शस्यमहर्घ-समर्घ-वृष्टि-

विचारो, भूकम्पः उल्काकरकापातौ धूमकेतूदयः परिवेषनिहारप्रभृतिविचारः।

होरास्कन्धे जन्मकुण्डलीफलविचारात्मकं जातकशास्त्रं संस्कारादि मुहूर्त्त ग्रन्थाः भूमिशोधनार्थं वास्तुविद्या, तात्कालिकफलज्ञानाय वर्षपत्रसाधक ताजिकग्रन्था। शरीरलक्षणात् शुभाऽशुभफलद्योतकाः सामुद्रिक ग्रन्थाः। होरा स्कन्धे पौरुषग्रन्थेषु सर्वप्रथमं बृहज्जातकस्याऽभिर्भावः। इतः परम् कियन्तो जातक-विषये ग्रन्थाः कियद्भ्यो ग्रन्थेभ्य प्रार्कणिकवाक्यानि संकलय्य तत्तदाऽभिर्भावकैराविष्कृताः। यथा च–श्रीपति-पद्धतिः, सारावली, सर्वार्थचिन्तामणिः, जातकादेशः, होरारत्नम्, मानसागरी, जातकाभरणम्, जातक-तत्त्वम्, जातकपारिजातः, फलदीपिका इत्यादयोऽनेके ग्रन्थाः। विविधविषयविभूषिताः समुपलभ्यन्ते। जातकशास्त्रद्वारा तनुः, धनं, सहजः सुहृत् सुतः रिपुः जाया, मृत्युः धर्म, कर्म, आयः व्ययश्चेतिद्वादश भावाः भवन्ति, तत्र मेषादि राशिषु यो राशिर्जन्मनि लग्नत आरभ्यते ते भावा इति गण्यन्ते। तत्र यस्य भावस्यपतिग्रहः स्वभवने, स्वोच्चे, केन्द्रे, स्ववर्गे तिष्ठति तथा रविसानिध्यादस्तंगतो न भवति ततः फलं शुभं भवति वैपरीत्ये अशुभम्।

वैदिकसंहिता ग्रन्थादारभ्यः आधुनिक काव्यादि ग्रन्थेष्वपि ज्योतिषविषये वर्णनम् दृश्यते। अस्मात् कारणात् स्वतः प्रमाणितं ज्योतिषग्रन्थंः रचनाः दृष्ट्वा भारतवर्षे अस्या अविच्छिन्न प्रचारः सिद्धं भवति। धर्मार्थकाममोक्षाणां चतुःपुरुषार्थाम् उपादेयत्वेन वर्णनात् ज्योतिषशास्त्रस्य अध्ययनाध्यापनस्य आवश्यकता सिद्धैव—

अन्यान्यप्रत्यक्षशास्त्राणि विवादस्तत्र केवलम्।
प्रत्यक्षं ज्यौतिषं शास्त्रं चन्द्रार्कौ यत्र साक्षिणौ।
यथा शिखा मयूराणां नांगानां मणयो यथा।
तद् वद् वेदाङ्गशास्त्राणां ज्योतिः मूर्धन्यवस्थितम्॥

---

## काशिका विजयते

लसति सखि। काशी-कल्पलता।
ब्रह्ममूलवरमोक्षफलाढ्या सुकृतसुपुष्पयुता।
विश्वनाथकल्पद्रुमाश्रिता धर्मधराङ्कगता॥ लसति०
कीर्तिसुगन्धा विधिमकरन्दा गुणगणसंवलिता।
नित्यनवा सुखदा सनातनी मृत्युञ्जयदयिता॥ लसति०
दिव्यरूपगङ्गाजल सिक्ता भवविभूतिभरिता।
देववृन्दनरनागवन्दिता कविकोविदसुमता॥ लसति०
वेदमन्त्रशास्त्रध्वनिसुन्दरहरहरहररवसहिता।
लोकलोकपरलोकसाधिका भावुकभक्तिज़िता॥ लसति०
भुक्तिमुक्तिकामैश्च परिवृता वरदाने निरता।
यच्छायामाश्रित्य मोदते भयरहिता जनता॥ लसति
सत्यमेकता विश्वबन्धुता समरसता शुचिता।
यत्र सदा नृत्यति समानता मानवता सुरता॥ लसति
विद्वत्ता प्रियता प्रवीणता पावनता वितता।
सम्पन्नता शीलता मुदुता शीतलता निहिता॥ लसति
अन्नपूर्णामातृगृहीता जनगणमनसि धृता।
वीरभद्रभैरवसुरक्षिता गङ्गाधरविभुता॥ लसति

# महाकविः पुण्य-श्लोक श्री जयशंकरप्रसाद

**डॉ० राजेन्द्रनारायण शर्मा**

अस्ति आर्यावर्ते भरतखण्डे, भारतवर्षस्य उत्तरे दिग्विभागे, योगेश्वरस्य आत्मविभूतियोगे 'स्रोतसामस्मि जाह्नवी' इति महावाक्येन विभूषिता, उत्तरवाहिनी पुण्यतोया सुरसरित् (त्रिभुवनतारिणी) गंगा। तस्याः पश्चिमे भागे भुक्तिमुक्तिप्रदायिनी भगवतः शंकरस्य त्रिशूलाग्रे प्रतिष्ठिता वाराणसी नाम महानगरी यस्यान्तर्गृहे गोवर्धनपीठे भक्तशिरोमणीनां श्रीदेवीप्रसादमहाभागानां तपः प्रभावात् तस्य धर्मपत्न्याः कुक्षितः शतवर्षपूर्वम् श्रीजयशंकर प्रसादो नाम पुत्रो जन्म लेभे। अस्य आभिजात्य-प्रतिभा-पुत्रस्य ख्यातिः यशोज्योतिः उदयाद्रिशिखरे उदितसहस्ररश्मिबालसूर्यस्य तप्तकाञ्चनमरीचिरिव प्रकाशते दिग्दिगन्तरेषु।

अद्य अस्य मौलिकप्रतिभावतः सरस्वती-पुत्रस्य सम्पूर्णे भारते देशे जन्मशताब्दीमहोत्सवः संपाद्यमानो वर्तते। समस्तविश्वभाषापरिवारः एतस्मिन् अवसरे प्रहर्षपुलकोद्गमचारुमनसा, भावपूरितेन प्रणतिपुरस्सरेण च हृदयेन एतादृशानां महापुरुषाणां चरणेषु स्वश्रद्धाकुसुमानि समर्पयति।

समस्तसम्प्रदायातीतनकुलमाहेश्वरकुलाभिसंभूतः विदितशिवनिजात्मतादात्म्यः अशेषसंकल्पविकल्पमुक्तः उत्तरमनीषी महाकविः श्रीजयशंकरप्रसादो विजयतेतराम्।

अस्य महापुरुषस्य नाम परिचयं नापेक्षते। को भारतोयवपुर्धरः ईदृशानाम् पुण्यश्लोकमहामनसां नामकीर्तनमात्रेण ससंभ्रममात्मगौरवं नानुभवति?

पुरा कवीनां गणनाप्रसंङ्गे
कनिष्ठिकाधिष्ठितकालिदासः।
अद्यापि तत्तुल्यकवेरभावात्
अनामिका सार्थवती बभूव।

अस्मिन् श्लोके अनामिका इति निगदिता अंगुलिः साहित्यकारस्य श्रीजयशंकरप्रसादस्य प्रादुर्भावात् सनामिका संजाता इति।

श्रीजयशंकरप्रसादः नतु केवलं महाकविः महाकाव्यस्य प्रणेता नतु उद्बोधनकथाकारः नतु प्रथमो मौलिकनाटककारः अपितु सः अगेयस्य महागायकः अनाट्यस्य महान् नटः आसीत्। मुमूर्षितमहाजात्याभिमानस्य उद्बोधनकर्ता क्रान्तिमहातूर्यः सः केनोपमीयते? सतु साक्षात् "गगनम् गगनाकारम् सागरः सागरोपमः।" साक्षात् अनन्वयालंकारस्य निदर्शनभूतः आसीत्।

अपि श्रुतौ—"न तस्य प्रतिभा अस्ति—
यस्य नाम महद्यशः॥"

साहित्यव्योम्नि व्यासबाल्मीकिकालिदासभवभूतितुलसीप्रभृतयः बहवः क्रान्तदर्शिनः कवयः बभूवुः, सन्ति, भविष्यन्ति च युगे युगे। किन्तु श्रीजयशङ्करप्रसादः शङ्करस्य प्रसाद इव अविरलप्रसादः, एकएवाद्वितीयश्च। न तु इतरजनसाधारणः। स तु महामानवः आसीत्। अध्यात्मज्ञाननित्यत्व, तेजः क्षमाधृतिशौचाद्रोहादिभिः उपादानैः निर्मिता आसीत् अस्य देवोपमचैत्यचेतना। सा तु श्रीअरविन्दवाङ्मये अतिमानसेति अभिहिता। एतावानस्य महिमा अतोज्यायांश्च पूरुषः।"

सर्वतोमुखप्रतिभासम्पन्नः प्रसादस्तु असीममानवतायाः कविः आसीत् न तु कस्यचित् ससीमसम्प्रदायस्य। अस्य महाकवेः पारसमणि-लेखन्याः संस्पर्शेण वाङ्मयस्य सर्वाणि मृण्मयांगानि तप्तकार्तस्वरभास्वरतां प्राप्नुवन्।

विंशेवर्षशतके गीतागायकः कृष्णोऽभविष्यच्चेत् श्रीजयशङ्करप्रसादं महाकविं दृष्ट्वा नूनमसौ अकथयिष्यत्-कवीनां जयशङ्कर इति श्रीमद्भवद्गीतासूपनिषत्सु विभूतियोगे दशमेऽध्याये किमपि परिवर्त्य।






शिक्षा एवं संस्कृति राज्य मंत्री
मानव संसाधन विकास मंत्रालय
भारत सरकार
नई दिल्ली–११०००१
MINISTER OF STATE FOR EDUCATION & CULTURE
MINISTRY OF HUMAN RESOURCE DEVELOPMENT
GOVERNMENT OF INDIA
NEW DELHI-110001

## सन्देशः

संस्कृतं हि नाम दैवी वाक्। इदं हि न केवलं भाषामात्रमपि तु भारतीयसंस्कृतेः स्रोतः, प्राणभूतं भारतीयभाषाणाम्, मूलमाध्यात्मिकतत्त्वज्ञानस्य, सुप्रतिष्ठितं च विश्वस्य विशिष्टेषु विद्यास्थानेषु। अयमस्ति प्रसन्नताया विषयो यद् विश्वसंस्कृतप्रतिष्ठानमस्या अमरभाषायाः प्रचाराय प्रसाराय च संमाननीयश्रीविभूतिनारायणसिंहशर्मदेवानामाध्यक्ष्ये सततं प्रयतमानं वर्तते। प्रतिष्ठानेन च एका विशिष्टा संगोष्ठी प्रत्यक्षपद्धत्या संस्कृतपाठनविधिमुपलक्ष्य नवदिल्ल्यां समायोजिता। वस्तुतः संप्रति नवीनतमानां प्रयोगाणां साहाय्येन अस्या भाषायाः शिक्षणं विश्वस्य महते कल्याणाय समपेक्ष्यते। एतद्दृष्ट्या समायोजितेयं संगोष्ठी नितरां महत्त्वपूर्णा। अहमस्याः कार्यक्रमाणां साफल्याय शुभकामनाः संप्रेषयामि।

ललितेश्वरप्रसादः शाही

काशीराज श्री विभूति नारायण सिंह शर्मदेवाः,
अध्यक्षः विश्व-संस्कृत-प्रतिष्ठानम्,
रामनगर दुर्गः, वाराणसी-221008



## द्विदिवसीयसंस्कृतसम्मेलनस्य (दिल्ली) अवसरे विश्वसंस्कृतप्रतिष्ठानस्याध्यक्षैः ५ श्री डॉ० विभूतिनारायणसिंहमहोदयैः कृतस्य समापनभाषणस्य सारांशः

मान्याः ! विश्वस्य तेभ्यस्तेभ्यः कोणेभ्यः समागत्य समायोजनमेतदलङ्कुर्वाणाः संस्कृतानुरागिणः ! सर्वप्रथमं विश्वसंस्कृतप्रतिष्ठानस्याध्यक्षपदेन अस्मिन् द्विदिवसीयसंस्कृतसम्मेलने समवेत्य अस्य परमं साफल्यं सम्पादितवतां समेषामप्यत्र भवतां साधुवादं व्याहरामि । अथवा इदं भवदीयमेव सम्मेलनं भवद्भिः साफल्यपदवीं नीतमिति भूरिशः शुभकामनाः प्रकाशयामि ।

संस्कृतस्य तदादृतायाः संस्कृतेश्च अभ्युत्थानाय विश्वस्य कोणे कोणे प्रसाराय प्रचाराय च सततं जागरूकतया प्रयतमानमिदं विश्वसंस्कृतप्रतिष्ठानम् विगतभ्यो नैकेभ्योऽपि वर्षेभ्यः प्रयोगरूपेण सरलसंस्कृत-शिक्षापद्धतिमन्वेषयितु तत्र तत्र दशादिनात्मकसंस्कृतप्रशिक्षणशिविराणि समायोजत् शिक्षणपद्धतेः किमपि निष्कृष्टमेव स्वरूपमध्यगच्छत् तदेव च स्वरूपं अस्यां सभायां परीक्षणाय प्रस्तुतं विगतदिनादनुशील्यमानं सम्माजनता प्रापदेवात मे विश्वासः । अस्य स्वरूपस्य आविष्करणाय अस्यां सभायां मूर्तरूपेण उपस्थापनाय च विगतभ्यो नैकेभ्योऽपि मासेभ्यः सश्रमं प्रयतमानः प्रसिद्धः संस्कृतसेवकः लक्ष्मणपुरवास्तव्यः श्रीवीरभद्रमिश्रः वस्तुतः समेषामप्यस्माकं प्रशंसाभाजनं वर्तते । यद्यप्यत्र भवेयुर्बह्व्योऽपि त्रुट्यः त्रुटीनां मानवस्वभावसिद्धत्वा-त्तथापि श्री मिश्रमहोदयानामेष श्लाघ्यतमः प्रयासः सर्वेषामपि संस्कृतानुरागिणां श्रद्धायाः स्थानं भवति । वस्तुतो नैष प्रयासोऽन्तिमो मन्यताम्, प्रथमोऽयं प्रयोगः, भवतां परामर्शम् अपेक्षामहे, सम्मतिं कामयामहे । अत्र किं वा परिवर्तनीयं किं परिवर्द्धनीयं, किं त्याज्यं किं ग्राह्यमित्यत्र भवन्त एव प्रमाणम् । अस्माकं मानकसंस्कृतपाठ्य-ग्रन्थविषये लिपिविषयकः कश्चन कोलाहलः सभायां समुपस्थितः । परन्तु विषयऽस्मिन् भवन्तो विश्वस्ता भवन्तु । विश्वसंस्कृतप्रतिष्ठानेन चिरन्तनकालादुपासिता देवनागरीलिपिरेव समादरिष्यते । मानकसंस्कृतपाठ्यग्रन्थे या हि नूतनः प्रयोगः दृष्टिगोचरीकृतः स तु श्रीमिश्रमहोदयानां व्यक्तिगतो विषयः तत्र प्रतिष्ठानम् विशेषेण बद्धादरं नास्ति ।

अस्माकं शिविरे संस्कृताध्येतॄणां त्रयो वर्गाः सन्ति । प्रथमस्तावदशिक्षितानां बालानाम् वर्गः । संस्कृतमाध्यमेन बालाः यथा विविधाः शिक्षाः गृह्णीयुस्तथा अस्माभिः प्रयासा विधेयः । द्वितीयस्तु अल्प-शिक्षितानाम् । संस्कृतसम्भाषणे लेखने च किञ्चिन्नैपुण्य दधानाः संस्कृतवाङ्मयस्य तास्ताः शाखाः तानि तानि च सूक्ष्माणि तत्त्वानि अवगच्छन्तु यदर्थं वस्तुतः संस्कृतमावश्यकम् । तृतीयो हि वर्गः संस्कृतव्यासङ्गोन्मुखा-

पिनाम क्षेत्रान्तरे लब्धप्रतिष्ठानां शिक्षितानाम् । अस्मिन् संगणकयुगे (Cmputer age) आनिधुका वैज्ञानिकाः संस्कृतवाङ्मयस्थानि गूढानि तत्त्वानि अन्वेषयितुं तन्माध्यमेन च नवनवान् आविष्कारान् विधातुं प्रयतमाना दृश्यन्ते । परन्तु संस्कृतज्ञानाभावेन ते नितान्तं साफल्यं न भजन्ते । यद्यप्यस्ति प्रायः सर्वेषामपि विशिष्टसंस्कृत-ग्रन्थानां प्रायः सर्वासु प्रसिद्धासु भाषासु अनुवादः सुलभः तथापि अनुवादमात्रेण कृतकृत्यता न भवति। अनुवादेन नहि मूलभूतं तत्त्वं परिचयपदं गच्छति। स तु केवलं प्रवृत्तिमूलकः रुचिमूलको वा भवति। शब्दशक्तेः साक्षात्काराय शब्दसाक्षात्कार आवश्यकः । तस्मात् मूलभूतभाषाध्ययनेनैव तत्रत्यतत्त्वानि समुचितं ज्ञातुं शक्यन्ते इत्यत्र वयमिव तेऽपि बद्धादरा एव। चन्द्रविषये एतावता कालेन वह्वन्निष्यापि संस्कृतसाहित्ये तस्य किं स्वरूपं किं वा स्थानमित्यपि जिज्ञासवस्तिष्ठन्ति ते। तेषां कृतेऽपि सुलभतया संस्कृताध्ययनं यथा सम्पादितं स्यात्तथाप्यस्माभिः प्रयतनीयम् ।

केचित्तु मां पृच्छन्ति—संस्कृतं तु त्रिभाषासूत्रतः निष्कासितम् आधुनिकेन सर्वकारेण । तद्यदि संस्कृतं पाठ्यक्रमे एव न तिष्ठेत् तदा भवत्प्रतिष्ठानेन कस्य कृते महताऽऽडम्बरेण एष नूतनः पाठ्यक्रमः निर्मीयते । उचित-स्तेषामाक्षेपः । परन्तु अहं विश्वासेन वच्मि यत् संस्कृतम् अचिरेणैव पाठ्यक्रमे आगमिष्यति । अतिनिकटस्य भविष्यतः स्वागतार्थं तोरणमिदं प्रतिष्ठानेन प्रकल्पितम् । तस्य पुनरागमनानन्तरमेष प्रश्नः उत्थितो न भवेत्—किमधुना पाठनीयमिति । वयमद्यत एव तदर्थं सज्जास्तिष्ठामः । यद्वा संस्कृतं पाठ्यक्रमे भवतु मा वा भवतु संस्कृताध्ययनं तु कदापि रुद्धं न भविष्यति । यद्यस्ति संस्कृते वस्तुतः किमपि तत्त्वं तदा तत् पाठ्यक्रमे तिष्ठतु नवा तिष्ठतु तस्याध्ययने सर्वोऽपि जनः प्रवर्तिष्यत एव । उदाहरणार्थं यदि अद्य चिकित्साविज्ञानादिकं पाठ्य-क्रमतः निःसार्यते तदापि तस्य न किमपि हास्यते । तदुपयोगितां जानानाः अनुभवन्तो वा तदुन्मुखा भविष्यन्त्येव ।

वस्तुतः पर्यालोच्यमाने सर्वकारापेक्षया अधिकं दोषभाजो वयमेवात्र । उपवीतसूत्रमस्माभिरेव त्रोटितम्, शिखाऽस्माभिरेव च्छिन्ना । नहि कापि सार्वकारीया प्रेरणासीदत्र । एवमेव संस्कृतस्य अवनत्यै वयमेव कारणम् । अस्माकमनिष्ठेव भीरुताऽपि मूलमत्र । कुतो वा वयमेवं न प्रतिजानीमः यत्—यः संस्कृतं विरुणद्धि यो वा संस्कृतं न समर्थयते तस्य पक्षे वयं मतदानं न करिष्यामः, कदापि न करिष्यामः, तं स्ववर्गाद् बहिः करिष्यामः नहि स्वेन साकं कमपि तस्य व्यवहारमनुमंस्यामहे इति ।

एष परिवर्तनधर्मः संसारः । कदाचिदभ्युत्थानं कदाचित्पतनमवश्यम्भाव्येव । तदर्थं नहि निराशा भवन्तु । सारस्वतमिदं ज्योतिः अचिरेणैव पुनरुज्ज्वलितं भविष्यत्येव । प्रतीक्षन्ताम् प्रयतन्ताम् सुरभारती-मुपासन्तां च ।

प्रतिष्ठानेन कृतोऽयं नवीनपाठ्यक्रमनिर्माणप्रयासः यथा पूर्णतां सफलतां च प्रतिपद्यतां तथा भवन्तः समेऽपि विदुत्तमाः सश्रद्धं संयतन्तामिति सादरं विज्ञापयामि । अन्ते पुनरपि समेभ्योऽपि भवद्भ्यः नैकशः साधुवादान् वितीर्य सम्मेलनस्यास्य पूर्णतामुद्घोषयन् विरमामि ।



# देहली-विद्वत्-सम्मेलन-विवरणम्

चौ० श्रीनारायणसिंहः

२५ मार्च १९८९ दिवसे १० वादनकाले देहल्यां कन्स्टीट्यूशनक्लबे विश्वसस्कृत-प्रतिष्ठानेन समायोजितं संस्कृतविदुषां संस्कृतानुरागिणां च सम्मेलनं समारब्धम्। महामन्त्रिणः श्रीदेवदत्तस्य प्रस्तावानुसारेण प्रतिष्ठानस्य उपाध्यक्षः नेपाल राजगुरु श्री ६ पं० अम्बिका प्रसाद अधिकारी महोदयः गोष्ठ्याः प्रथमसत्रस्य आध्यक्ष्यं कृतवान्। सर्वप्रथमम् अध्यक्षानुमत्या महामन्त्री महोदयः प्रकृतस्य आयोजनस्य प्रयोजनं निर्दिश्य समागतानां प्रतिनिधीनाम् स्वागतं कृतवान्। तदनन्तरम् अध्यक्षस्य अनुमतिं प्राप्य रुडकीविश्वविद्यालयस्य प्राचार्यः श्रीनरिन्दरपुरी महोदयः वैदिकगणितविषयकं कौतूहलोत्पादकं वैदुष्यपूर्णं च भाषणं कृतवान्।

पुरीमहोदयस्य भाषणानन्तरं लक्ष्मणपुरीयः श्रीवीरभद्रमिश्रः सम्मेलने विचारार्थं प्रस्तावितानां मानकसंस्कृतपाठ्यग्रन्थानां विषये परिचयात्मकम् अभिभाषणं कृतवान्। प्रसङ्गतः मिश्रमहोदयैः भारतीयानां बालकानां कृते बाल्यादेव प्रत्यक्षविधिना संस्कृतशिक्षणस्य आवश्यकता प्रतिपादिता। शिशुकक्षातः आरभ्य दशमवर्गपर्यन्तं कथं संस्कृतशिक्षणं कर्त्तव्यम् इति विषयम् अधिकृत्य स्वाभिमतं विस्तरेण प्रकाशितवन्तः श्रीमिश्रमहोदयाः।

तदनु च एजूकेशन-संस्कृत-बोर्ड-देहली इति नामिकायाः संस्थायाः सस्कृताध्यापकः अन्ये च कतिचन वक्तारः केन्द्रियविद्यालयेषु त्रिभाषासूत्रानुसारेण प्रस्तावित पाठ्यक्रमाद् संस्कृतभाषायाः निष्कासनं प्रति गाढं स्वान्तिकं क्षोभं प्रकटितवन्तः। एतस्मिन्नेव क्रमे काशीस्थः श्रीसार्वभौमसंस्कृतपाठशालासंचालकः श्रीवासुदेवद्विवेदीमहोदयः विद्यमानेषु संस्कृतविद्यालयेषु संस्कृतशिक्षणस्य शोचनीयतां प्रकाश्य भारतीयैः स्वकीये दैनन्दिनजीवने संस्कृतभाषायाः व्यवहारः प्राचुर्येण करणीय इति विषयकं विचारं वैशद्येन निरूपितवान्। तदनन्तरं संस्कृतवाङ्मयकोषकारः महाराष्ट्रियः श्रीवेणवणकरमहोदयः स्वाभिमतं प्रकाश्य संस्कृतवाङ्मयविषयकान् द्वादश प्रश्नान् तत्र समवेतानां पुरतः उपस्थापितवान्। तदुपरान्तं नैपालदेशीयविश्वविद्यालयस्य उपकुलपतिः स्वकीयम् उद्बोधकम् अभिभाषणं कृतवान्। स कथितवान् यत् नैपालदेशे नैपालदेशीयभाषायाः परिष्कारार्थं तत्र संस्कृतभाषायाः अध्ययनम् अनिवार्यरूपेण क्रियते। तेन अभिहितं यत् मूर्धाभिषिक्तशासकशासिते हिन्दुराष्ट्रे नैपाले स्वभावत एव संस्कृतवाणी समादृता वर्तते।

तदनु, प्रथमसत्रस्य अवसानं जातम्।

मध्याह्ने अल्पाहारग्रहणानन्तरं सम्मेलनस्य द्वितीयं सत्रं प्रारभत। अस्मिन् सत्रे काश्मीरनरेशः श्रीकर्णसिंहः, काशिराजः श्रीविभूतिनारायणसिंहः नैपालदेशीयः राजगुरुः, त्रिपुराराज्यस्य राजकुमारश्च उपस्थिताः आसन्। अस्मिन् सत्रे महाराजकर्णसिंह मुख्यातिथिपदमलंकृतवान्। काशिराजश्च सम्मेलनस्य अध्यक्षताम् अकरोत्। महामन्त्रिणा देवदत्तेन उपाध्यक्षेण श्रीगुलामदस्तगीरविराजदारेण च मुख्यातिथये, विशिष्टातिथिभ्यः सम्मेलनाध्यक्षाय च माल्यार्पणं कृतम्। तदनन्तरं मंगलाचरणम् अनु गोष्ठ्याः कार्यकलापः यथाविधि अग्रतः प्रासरत्।

प्रथमं महामन्त्रिणा स्वकीये भाषणे विशिष्टातिथिनां स्वागतम् कृतम्। तदनु उपाध्यक्षः प्रकृतस्य

सम्मेलनायोजनस्य प्रयोजनं विस्तरेण निरूपितवान् । तदनन्तरं नैपालदेशीयः राजगुरुः सम्मेलनकृते प्रेषितं नैपालनरेशस्य सन्देशं पठितवान् स्वकीयं भाषणे स संस्कृतभाषाविषयकम् अभिमतमपि गाम्भीर्येण प्राकाशयत् । तेन सुस्पष्टम् अभिहितं यत् संस्कृतभाषा नैपालदेशीयसंस्कृतेः तद्देशीयभाषायाश्च प्राणस्थानीया । तदनन्तरं सम्मेलनस्य मुख्यातिथिपदं



डॉ० कर्णसिंहः

अलंकुर्वाण काश्मीरनरेशः श्रीकर्णसिंहः विश्वसंस्कृतप्रतिष्ठानेन निर्मापितान् मानकसंस्कृतपाठ्यग्रन्थान् उन्मोचितवान् । तदनन्तरं स संस्कृतभाषायाः महत्वम् वैशद्येन प्रत्यपादयत् । तथाच संस्कृतप्रचारप्रसारविषये प्रतिष्ठानेन क्रियमाणस्य उद्योगस्य प्रशंसामपि चकार ।

ततः क्रमशः सम्पूर्णानन्दसंस्कृतविश्वविद्यालयस्य उपकुलपतिः श्रीवेंकटाचलः तथा कतिपयान्यप्रदेशीयाः प्रतिनिधयः सम्प्रति त्रिभाषासूत्रानुसारेण प्रस्तावितात् पाठ्यक्रमात् संस्कृतस्य बहिष्करणम् अधिकृत्य रोषपूर्णं भाषणं कृतवन्तः । सायंकाले षट्वादनसमये द्वितीय सत्रावसानं जातम् ।

२६ मार्च १९८९ दिवसे अष्टवादनसमये सम्मेलनस्य तृतीयं सत्रम् आरब्धम् । समागतं प्रतिनिधिमण्डलं दशसमूहेषु विभज्य प्रत्येकम समूहाय एकैकं मानकपाठ्यपुस्तकनिचयम् अवलोकनोत्तरं तद्विषये समीक्षात्मकविचारप्रकाशनार्थं वितरितम् । द्वादशवादनकालं यावत् प्रतिनिधयः समूहशः मानकग्रन्थानां विषये विचारं कृतवन्तः । ततः एकहोरापर्यन्तं स्वल्पाहारक्रमः प्राचलत् । पुनश्च द्विवादनसमये सम्मेलनस्य चतुर्थं सत्रं प्रारम्भत । निवहप्रमुखाः प्रस्तावितग्रन्थानां विषये समीक्षात्मकान् सामूहिकाः विचारान् प्रकाशितवन्तः । क्रमोऽयं ५ वादनकालं यावत् प्राचलत् ।

ततः प्रतिष्ठानस्य अध्यक्षः काशिनरेशः श्रीविभूतिनारायणसिंहः प्रतिनिधीन् प्रति आभारज्ञापनपूर्वकं अध्यक्षीयम् अभिभाषणं कृतवान् । समारोपात्मके स्वकीये भाषणे तेन कथितं यत् संस्कृतभाषा तु अमरवाणीति कथ्यते । स्वगुणैरेव इयं भाषा अद्यापि जगति स्वमहत्त्वम् उद्घोषयति । अनेकेषु यूरोपीयदेशेषु इदानीं छात्राणां कृते बाल्यादेव संस्कृतशिक्षणस्य व्यवस्था क्रियते । भारतेऽपि नूनम् अचिरमेव तादृशी व्यवस्था प्रचलिष्यति । संस्कृतविरोधिनां शिक्षाव्यवस्थापकानां प्रयासोपरि अवश्यमेव तुषारपातो भविष्यतीति । अध्यक्षीयभाषणानन्तरं षड्वादनसमये सत्रावसानं सम्मेलनस्य समारोपश्च बभूव । सम्मेलनस्यास्य साफल्याय अनेकविशिष्टपुरुषाणां सन्देशाः प्राप्ताः—श्री श्री जगद्गुरु शंकराचार्यमहासंस्थानम्, दक्षिणाम्नाय श्रीशारदापीठम्, शृंगेरी-शंकराचार्याः, श्रीकाञ्चीकाम-कोटिपीठाधिपति-जगद्गुरुशंकराचार्याः, नाइदरलैंडराजदूतः, इटलीराजदूतः, पाकिस्तानराजदूतः, जलसंसाधनमन्त्रिणो (भारतम्) श्रीमती कृष्णासाही, शिक्षा संस्कृतिराज्यमन्त्री (भारतम्) ललितेश्वर प्रसाद शाही इत्यादीनां विशिष्टपुरुषाणां शुभाशंसाः समधिगता इति ।

□

# संस्कृत-साधकः—कपिलदेवशर्म्मा

**श्रीचुन–चुन–मिश्रः** एम० ए० (संस्कृतम्)
पटना विश्वविद्यालयः

महामहोपाध्याया आचार्य-कपिलदेवशर्माणः अद्यतनस्य संस्कृत-वातावरणस्य प्रधानभूताः नायका आसन्। न केवलं बिहारप्रदेशस्य अपितु अखिल-भारतस्य विद्वन्मण्डले तेषां गणना अस्ति।

आचार्य-शर्मणः जन्म १८-१२-१८९९ तमे दिनाङ्के बिहारप्रदेशस्य छपरानगरे अभवत्। सः बाल्यकालादेव प्रतिभासम्पन्न आसीत्। १९२० तमे वर्षे तेन 'काव्यविशारद' इति उपाधिः लब्धः। तदा स अखिले प्रदेशे उत्कृष्टतमम् अङ्कं लब्धवान्। तस्मिन् समये अद्यतनाः बिहार-बङ्गोर्डासाप्रदेशाः सम्मिलिता एव आसन्।

तस्य गुरोः नाम 'श्रीभरतमिश्र' इति आसीत्। स श्रीभरतमिश्रमहोदयः भारतस्य प्रथमराष्ट्रपतेः डा० राजेन्द्रप्रसादस्यापि अध्यापक आसीत्। अध्यापकस्य प्रभावः तेषामुपरि भूरिश आसीत्।

आचार्य-शर्मणः जन्म तदाऽभवत् यदा भारतदेशः परतन्त्र आसीत्। भारतदेशं आङ्लीयेभ्यः मुक्तं कर्तुं सः कृतसङ्कल्प आसीत्। सः नैकवारं कारागृहस्य कष्टम् अनुभूतवान्। सः काँग्रेसदलस्य सदस्यः बहुकालं यावत् आसीत्। पूर्वं तु सः गान्धिना सह देशस्य स्वतंत्रतायै कार्यं कृतवान्, अनन्तरं सुभाषचन्द्रप्रभृतिभिः समं प्रभावितो भूत्वा "आङ्लीयेभ्यः देशः बलात् गृहीतव्य" इत्यस्य समर्थक आसीत्।

सः तिलक-सावरकर-सुभाष-भगत-आजाद-प्रभृतीनां देशोद्धारकाणां प्रशंसक आसीत्। येषां नामानि सः प्रतिदिनं प्रातःकाले स्मरति स्म। तेन निजभूमौ उद्घाटितस्य विद्यालयस्य नाम अस्ति "चन्द्रशेखर-आजाद-संस्कृत-विद्यालयः"। विद्यालयस्य द्वारं "भगतसिंह" इति अभिधानकमस्ति।

आचार्य-शर्मा देशहितचिन्तकेषु उत्तम आसीत्। सः सर्वदा देशदशां दृष्ट्वा चिन्तितः तिष्ठति स्म। स प्रतिमासं देशस्य कृते वित्तकोषे किञ्चित् धनं ददाति स्म। तस्य मतम् आसीत् यत् मरणानन्तरं कस्यापि गतप्राणस्य शरीरस्य उपयोगः भवेत् न तु दुरुपयोगः। मरणानन्तरं शवस्य न तु दहनक्रिया भूयात् न तु भुवि प्रस्थापनम्। एतन्मतं न केवलं सिद्धान्तरूपेण अस्ति व्यवहारेऽपि तेन प्रदर्शितम्। यदा तस्य अग्रजस्य मृत्युरभवत् तदा सः तच्छवं चिकित्सालये प्रशिक्षण-प्राप्तुकामेभ्यः चिकित्सकेभ्यः प्रदत्तवान्। सः देशस्य कृते किमपि कर्तुं प्रस्तुत आसीत्।

बहुभाषाविद् भूत्वा अपि आचार्य-शर्मा संस्कृत-भाषायाः समर्थक आसीत्। तस्य विश्वास आसीत् यत् यः संस्कृतं जानाति सः कामपि भाषाम् अल्प-समये एव वक्तुं पारयति। सः देशस्य सर्वासां भाषाणां तथा च जर्मन्-फ्रेंच-फारसी-आदीनां भाषाणां पण्डित आसीत्। संस्कृतभाषायाः प्रचारं सः जीवन-पर्यन्तं निःशुल्कं कृतवान्। राष्ट्रभाषा-निर्धारण-समये तस्य मतमासीत् यत् "संस्कृतभाषा एव राष्ट्रभाषा भवेत्"। अनुमीयते यत् अधुना संस्कृतभाषाया उपेक्षां दृष्ट्वा एव नवशिक्षानीतौ सः स्वदेहं परित्यक्तवान्।

संस्कृतसम्भाषणार्थं सारल्यमवलम्ब्य तस्य कथनम् आसीत्—"इंग्लिशं मिलित्वा-मिलित्वा संस्कृतं वद।" एतदर्थं तेन नैकानि पुस्तकानि विरचितानि। २४ दिवसेषु तेन सह सम्पर्कं कृत्वा कोऽपि संस्कृतं वक्तुं पारयति स्म। यः तेन सह अहर्निशं तिष्ठति स्म सः होरायामपि सम्यक् संस्कृतं भाषते स्म।

तस्य आशुबोध-व्याकरणम्, पद्यमय-सन्धिः, देवनागरवर्णमाला, आदीनि पुस्तकानि महत्त्वपूर्णानि सन्ति। सरल संस्कृतस्य कृते 'आशुबोध-व्याकरणम्' अत्यावश्यकम्।

निरन्तरं संस्कृतोद्धर्त्ता आचार्य-शर्मा ३०-४-१९८९ दिनाङ्के स्वशरीरं परित्यक्तवान्। □

# श्रीमदाद्यशङ्कराचार्यः

पं० राममूर्तित्रिपाठी

विदितमेव समेषां तत्रभवतां श्रीमदाद्यशङ्कराचार्यस्य माहात्म्यम्। आभाणकः खलु श्रूयते—'अनायका विनश्यन्ति नश्यन्ति बहुनायकाः' इति। यत्र परिवारे, समाजे, राष्ट्रे वा बहवो नायकाः विविधविधविचारचातुरीचणाः परस्परं विमताः भवन्ति—स परिवारः समाजः राष्ट्रो वा विनाशमाशु च यान्ति। यतो हि तेषामुन्नयनं नयनापेक्षि। नयनं नायकश्चेति अनर्थान्तरम्। यथा बहुनायकास्ते विनाशमुगच्छन्ति एवमेवानायका अपि। तस्मात् तत्र एकेनैव सुविज्ञेन नायकेन भवितव्यम्। यथा नयनं जनं मार्गं निर्दिशति गन्तव्यं यावद् गमनाय—एवमेव नायकोऽपि तत्र नयनेषु नायकेषु वा परस्परमनैक्ये सति गन्तृणां का दशा भवेत्? एवमेव नयनाभावे नायकाभावेऽपि। श्रीमदाद्यशङ्कराचार्याणां समये अस्माकं भारतदेशः नैकविधाचारविचारप्रस्थापकपरमाचार्यैरुपप्लवीकृतः। आम्नायस्य व्याख्याऽपि तत्कृता सर्वथाऽन्यथा। मीमांसकधुरीणाः कुमारिलप्रभृतयोऽपि श्रुतेस्तात्पर्यं कर्मण्येव योजितवन्तः। उक्तं हि महार्यैः जैमिनिमहोदयैः 'आम्नायस्य क्रियार्थत्वादानर्थक्यमतदर्थानाम्। यदि वैदिकमतानुयायिनामेषादशा का कथा त्वन्येषान्तद्विरोधिनाम्। महोग्राः कापालिका इतस्ततः धर्मध्वंसधुरीणाः दृश्यन्ते स्म। एवंविधे काले भारतराष्ट्रोद्धरणदत्तचेतस्काः श्रीमदाचार्यपादाः शास्त्रार्थमाश्रित्य श्रुतिसम्मतविचारसरणिः पुनः सुदृढं प्रतिष्ठापिता। धर्मशासनार्थं च तत्र-तत्र पीठे आचार्यानभिसिसेच। यः राष्ट्रः परस्परविरोध-गर्भविचारसरणिरूपामाचारसरणिं स्वीकरोति, स संशयमारुह्य किमपि कर्तुं नार्हति इति मनसिकृत्य श्रुतिसम्मतमेकवादमुपस्थाप्य राष्ट्रस्य बहुनायकत्वमनायकत्वञ्च समुच्छेदितम्। तर्हि श्रुतिमनुरुध्य 'आत्मा वा अरे द्रष्टव्यः" इति विधिविहितं पक्षमङ्गीकृत्य श्रवणाङ्गतया मनननिदिध्यासनयोः निदिध्यासनं वाऽङ्गीकृत्य श्रवणमननयोरङ्गतया निषेवणं विहितम्। अत्र पक्षे ऋते ज्ञानान्नमुक्तिः—कर्मोपासने च चित्तशोधनाय साफल्यमर्हतः। एवन्तेराचार्यैः राष्ट्रस्य हितं सम्पादितम्॥ □

---

( २८ पृष्ठस्य शेषांशः )

क्षित-सुसंस्कारितयुवकानां संघटनं प्रबलं स्यात् तदा एव स्वातन्त्र्यप्राप्तिरपि, प्राप्तस्वातन्त्र्यस्य संरक्षणं संवर्धनं च सम्यक्तया भवेत्। तदा एव स्वराज्यं सुराज्यं भवेत् इत्येव विचारधारा डॉ० हेडगेवारमहोदयानाम्।

डॉ० हेडगेवारमहोदयानां व्यक्तित्वमपि दिव्यं भव्यं, निर्मलं, विशुद्धं चासीत्। अनेन प्रायः सर्वे एव आकर्षिताः भवन्ति स्म। वादविवादपटवः अपि एते स्वस्य शुद्धाचरणेनैव स्वविचारपटुतां प्रदर्शितवन्तः। परस्परं स्नेहसम्बन्धं संस्थाप्य तस्याभिवर्धनं कथं भवेदित्येव स्वाचरणेन एते निर्दिष्टवन्तः। स्वावलम्बनस्य अपि शिक्षण स्वाचरणेन अपि एतैः दीयते स्म।

राष्ट्रीयस्वयंसेवकसंघस्य संस्थापनायाः प्रारम्भकाले गणवेषादिविषये विचारविमर्शः समारब्धः। ततः गणवेषादिः सुनिश्चितः जातः। एवमेव गणवेषं धृत्वा विद्यालय-कार्यालयादिषु उपस्थितिः भवतु इत्यपि विचारः कैश्चित् मण्डितः। अयं विचारः न व्यावहारिकः। वयं व्यावहारिकाः तथापि भवामः। विज्ञानम् अनुसृत्य याः सुखसुविधाः तासामपि स्वीकारः अस्माभिः कर्तव्यः। वयं परम्परावादिनः तथापि वैज्ञानिकसुविधानाम् अङ्गीकारः करणीयः अस्माभिः। तदा एव योग्यं भवेत्। अन्यथा महती हानिः एव भवेत्। प्राचीनपरम्परां संरक्ष्य अपि आधुनिकतायाः स्वागतं भवेदेव। तदा एव संघः समभिवर्धेत।

एवमेव पुनरपि सविस्तरं लेखनं शक्यम्, परं विस्तरभयादत्रैव विरम्यते इति शम्। □

( गतांकादनुवर्तते )

# शुकनासोपदेशः

चौ० श्रीनारायणसिंहः

अतः कल्याणस्य अभिलाषी भवान् प्रथमं लक्ष्मी-विपणे विचारयतु। निश्चयेन लक्ष्मीः सुभटानां खड्ग-समूहस्वरूपे कमलवने विहरणशीला भ्रमरीसदृशी। अस्यां स्वभावतः रागः, वक्रता, चञ्चलता, मोहशक्तिः, मदः, नैष्ठुर्यञ्च इत्येतानि उपलभ्यन्ते। विज्ञायते यत् लक्ष्मीः पूर्वोक्तगुणान् क्रमशः पारिजातपल्लवेभ्यः इन्दुखण्डात् उच्चैश्रवसः कालकूटात् मदिरायाः कौस्तुभमणेश्च गृहीतवती। यतः ते सर्वे क्षीरसागरे सहैवावस्थानं कुर्वन्ति स्म। अतः प्रतीयते यत् क्षीर-सागरकन्यका तैश्चिरपरिचितैः गुणैः सहैव क्षीरसमुद्रात् प्रादुर्भूता अस्ति।

अस्मिन् जगति एतादृशी अन्या काचित् अनार्या न वर्तते या चिरपरिचिता अपि अपरिचिता इव आचरति। इयं लब्धादिदुःखेन परिपाल्यते। गुण-स्वरूपरज्जुभिः दृढतया बन्धनेन स्थिरीकृता अपि अकस्मात् अदृश्या भवति। अत्यन्ताभिमानिनां युद्ध-कुशलानां अनेकवीराणां सततोत्थापितखड्गस्वरूपे पिञ्जरे निरुद्धापि लक्ष्मीः यथाकालं प्रपलायते। निरन्तरप्रवहणशीलेन मदजलेन श्यामीकृतगण्डस्थलं येषां तादृशैः गजैः परिवारिता अपि इयं अचिरमेव तिरोहिता भवति। अस्याः स्वभाव एव यत् एषां परिचयं कुलीनतां सुस्वरूपतां वंशानुक्रमतां सच्चरित्रतां व्यवहारकुशलतां श्रुतं धर्मं त्यागशीलतां विशेषज्ञताम् आचारं सत्यव्रततां सौभाग्यचिह्नानि च समुपेक्ष्य अचिरमेव अदृश्या भवति। प्रतीयते यत् लक्ष्मीः सागरमन्थनसमये मन्थनदण्डस्थाने प्रयुक्तस्य मन्थराचलस्य परिवर्तनावातेन समुत्पन्ने जलावर्ते घूर्णनानुभवजनितात् संस्कारवशाद् अद्यापि इतस्ततः भ्रान्तैव तिष्ठति। अपि च, प्रतिभातीदं यत् कमलपते-र्विचरणसमये कमलनाभिस्थितैः कण्टकैः विद्धचरणा तया लक्ष्मी कुत्रापि भयरहितं पदस्थापनं न करोति। विज्ञायते यत् महाराजानां राजभवनेषु सहर्षं प्रस्थापितापि राजलक्ष्मीः मदस्राविणां मत्त-गजानां गण्डस्थलात् प्रवहमानं मदं पीत्वा सततं परिस्खलति। सूच्यते यत् पारुष्यशिक्षणार्थमेव इयं असिधारासु निपासं करोति। (क्रमशः)

## भारत-शासनस्य वृत्तपत्र-विषयक-नियमम् अनुसृत्य फेब्रुआरी मासोत्तरं प्रथमाङ्के प्रकाशनीयं विश्वभाषा-स्वामित्वादि-विषयकं निवेदनम्

( तुरीयं परिपत्रकम्, अष्टमः नियमः )


(१) प्रकाशन-स्थलम् : विश्व-संस्कृत-प्रतिष्ठानम्, रामनगर दुर्गः, वाराणसी–२२१००८

(२) प्रकाशन-समयः : त्रैमासिकः–१५ अगस्त, दीपावलिः, २६ जनवरी, बुद्धपूर्णिमा।

(३) मुद्रक–नाम : देवदत्तः
मुद्रक–राष्ट्रियता : भारतीया
मुद्रक–निवासः : विश्व-संस्कृत-प्रतिष्ठानम्, रामनगर दुर्गः, वाराणसी–२२१००८

(४) प्रकाशक–नाम : देवदत्तः
प्रकाशक–राष्ट्रियता : भारतीया
प्रकाशक–निवासः : विश्व-संस्कृत-प्रतिष्ठानम्, रामनगर दुर्गः, वाराणसी–२२१००८

(५) संपादक–नाम : पण्डितः गुलाम दस्तगीर अब्बास अली विराजदारः
संपादक–राष्ट्रियता : भारतीया
संपादक–निवासः : हजरत जंगली पीर दरगाह, बरळी, बंबई–४०००२८

(६) पत्र–स्वामी : विश्व-संस्कृत-प्रतिष्ठानम्, रामनगर दुर्गः, वाराणसी–२२१००८

अहं देवदत्तः सविश्वासं प्रकटीकरोमि यद् उपरितनं विश्वभाषास्वामित्वादिविषयकं निवेदनं सत्यं विद्यते इति।

दिनाङ्कः बुद्धपूर्णिमा वि० सं० २०४६

प्रकाशकः देवदत्तः

# विद्यालयेषु संस्कृतं पूर्ववत् पाठयिष्यते

—पी० शिवशंकरः

केन्द्रीयमानवसंसाधन विकासमन्त्री पी० शिवशंकरः उक्तवान् यत् संस्कृताध्ययनं विद्यालयेषु यथावत् प्रवर्तिष्यते। श्री शिवशंकरः अग्रे उक्तवान् यत् विगतसितम्बरमासे केन्द्रीयशिक्षाबोर्डद्वारा विद्यालयेभ्यः अयं निर्देशो दत्तः आसीत् यत् हिन्दीविषयस्यैकभागरूपेण संस्कृतं पाठयिष्यते इति। अनेन जनानां मनसि एषा धारणा उदिता यत् सर्वकारेण संस्कृतस्य उपेक्षा क्रियते। परन्तु वास्तविकता तथा नास्ति इति।

## त्रिभाषायोजना स्थगिता

माध्यमिकशिक्षाबोर्ड द्वारा १ अप्रैल १९८९ तः प्रवर्तयिष्यमाणायाः त्रिभाषायोजनायाः विरुद्धम् उच्चतमन्यायालयेन स्थगनादेशः प्रसारितः।

उक्तत्रिभाषायोजनाया अनुसारं पाठ्यक्रमे संस्कृतस्य पृथक् अस्तित्वं समाप्तं कृतमासीत्। स्थगनादेशानुसारं न्यायालयेन माध्यमिकशिक्षाबोर्डीय सम्बद्धविद्यालयेषु संस्कृतं पूर्ववत्पाठयितुं निर्देशः दत्तोऽस्ति।

बोर्डस्य नवशिक्षानीतेः विरुद्धं याचिकाप्रस्तोतॄणां पक्षतः डॉ० लक्ष्मीमल सिंघवी तथा डॉ० वाई० एस० चितळे वरिष्ठधिवक्तृरूपेण उपस्थितौ। प्रसिद्धाधिवक्त्रा श्रीमुकुलमुद्गलेन याचिका संख्या २९९ वर्ष १९८९ इत्यस्य योजना कृता। अयं विवादः न्यायमूर्ति वैंकटरमैया तथा न्यायमूर्ति ओझा इत्यनयोः न्यायालये प्रस्तुतः आसीत्।

## संस्कृतविद्वान् राष्ट्रपतिपुरस्कारेण सम्मानितः

प्रसिद्धः संस्कृतविद्वान् श्रीमहेन्द्रनाथशास्त्री संस्कृतभाषायाः कृते तस्य योगदानार्थं राष्ट्रपतिसम्मानाय निर्वाचितः। श्रीशास्त्रिमहोदयस्य नैकासु कृतिषु संस्कृत-असमीशब्दकोषः प्रमुखः अस्ति। अयं राष्ट्रपतिपुरस्कारः सितम्बरमासस्य ५ तमे दिनांके शिक्षकदिवसस्यावसरे श्रीशास्त्रिमहोदयैः प्राप्स्यते।

## संस्कृतस्य रक्षार्थं महावीरदलस्य गठनम्

अखिलभारतीयसंस्कृतमहासम्मेलनेन सर्वकारस्य संस्कृतविरोधिन्याः नीतेः विरुद्धं संघर्षार्थं महावीरदलस्य गठनस्य उद्घोषणा कृता।

अस्य दलस्य विषये ज्ञापयन् महासम्मेलनस्य अध्यक्षः श्री विमलभारद्वाजः अकथयत् यत् इदं दलं सर्वकारस्य संस्कृतविरोधिन्याः प्रवृत्तेः साक्षात् विरोधे सज्जं भविष्यति। श्रीभारद्वाजः एकस्मिन् पत्रकारसम्मेलने भाषमाण आसीत्।

## श्रीजाखडस्य संस्कृतच्छात्राणां कृते आश्वासनम्

लोकसभाध्यक्षः श्रीबलरामजाखडः संस्कृतच्छात्रेभ्यः आश्वासनं दत्तवान् यत् सर्वकारः संस्कृतस्य विद्यालयेषु सम्मानयुक्तं स्थानं प्रदातुं शीघ्रमेव निर्णेष्यति।

## संस्कृतस्योपेक्षया क्षोभः

कांग्रेस ( ई ) सांसदः डॉ० गौरीशंकरराजहंसः लोकसभायां क्षोभं प्रकटितवान् यत् नवशिक्षानीतौ संस्कृतस्य समुचितं स्थानं नास्ति। श्रीराजहंसमहोदयः विशेषोल्लेखस्यान्तर्गतं स्वविचारान् प्रकटयन्नासीत्।



केनचित् कालेन देवाजीवाः प्रत्यागताः ।

जय भगवन्! जय भगवन्!

स्वामिचरणाः मूर्तिः प्राप्ता मन्दिरे च सा प्रतिष्ठापिता ।

जय शंकर जय शंकर

ततः श्रीशंकराः पर्वतीय-आदिवासिनः प्रति गत्वा तेषां सुधारणार्थं मार्गम् संसूचितवन्तः ।




बहवः जनाः तेषां भक्ताः अभवन् । तैः च सह बद्रीनाथं गताः ।





बद्रीनाथमन्दिरे अपि मूर्तिः नासीत् ।




श्रीशंकराचार्यैः मूर्तिः अन्विष्टा अस्याः प्रतिष्ठापना च विधिवत् कृता।



केरलतः केचिद् ब्राह्मणाः समाहूताः ।




श्रीशंकराचार्याः पुनः पश्चिमदिशि हिमालयमार्गे केदारनाथं अमरनाथं च गताः ।



ततः ते उत्तरदिशि गंगोत्रीं तथा उत्तरकाशीं च गताः। तत्र एकः सत्पुरुषः तेषां समीपे आगतः।




सप्तदिनपर्यन्तं तैः तत्र तासां शंकानां विचारविमर्शः कृतः अन्ते च -




तदा श्रीशंकराचार्याः षोडशवर्षीयाः ।

श्रीशंकराः स्वशिष्यैः सह बद्रीनाथं प्रत्यागताः कतिपयसमये तत्रैव न्यवसन्।



एकदा श्रीशंकरैः सनन्दनः आहूतः। तदा सः गंगापारे आसीत्।

सनन्दन!

अधुनैव आयामि गुरुदेव।

सनन्दनः निर्भयेन नद्योपरि प्राचलत्। तदा सहसैव तस्य पादाधः कमलानि उद्भूतानि। सः च पारम् आगतः।

आश्चर्यम् अस्ति।

चमत्कारः!

चरणयोः कमलानि अतः अयं पद्मपादः अस्ति।



श्रीशंकराचार्योपरि [illegible] आसीत्।


श्रीशंकराचार्यैः बद्रीनाथे ज्योतिर्मठस्य स्थापना कृता। तत्र च तोटकाचार्यः व्यासपदे स्थापितः।
उत्तरभागे अयं ज्योतिर्मठः तव निरीक्षणे संसारकल्याणं साध्नोतु।


श्रीशंकराचार्याः काशीं प्रत्यागताः प्रयागे। तत्र कर्मकाण्डे प्रख्यात भट्टस्य दर्शनं जातम्।
वेदानां परमपूजक प्रणमामि।
मम सौभाग्येनैव भवतां दर्शनलाभः। मम शिष्यः मण्डनमिश्रः अपि द्रष्टव्यः।


रिलभट्टः अधिकः वयोवृद्धः अस्य च अन्तःकालः अपि समीपस्थः।
स्वयमेव अहं मण्डनमिश्रसमीपं गच्छामि।


श्रीशंकराचार्याः महिष्मतीं गताः यत्र मण्डनमिश्रः निवसति स्म। तान् दृष्ट्वा मण्डनः कोपाविष्टः।
अशुभः! अशुभः!
संन्यासिन्, किमर्थं अत्र आगतः? भवता कर्मकाण्डं न मन्यते।
अशुभः! अशुभः!

परन्तु श्रीशंकराचार्यः शान्ताः।

आदरणीयः गुरुः कुमारिलभट्टः मां प्रेषितवान्। तस्य इच्छानुसारं भवद्भिः सह मया अनन्त-सत्यविषये शास्त्रार्थः कर्तव्यः।

ततः ते मण्डनपत्नीं सरस्वतीम् अवदन्।

सर्व-ज्ञानि-मातः सरस्वति, मम प्रणामः स्वीकर्तव्यः।

गुरुदेव-इच्छानुसारं त्वरितः शास्त्रार्थः प्रारब्धव्यः अस्माभिः।

यः स्वमतं सिद्धं ... न शक...ति सः अन्यस... मतं स्वीकरिष्यति। निर्णयं सरस्वती दास्यति।

परन्तु सरस्वती अवदत् --

संसारस्य गृहस्थजीवनस्य च स्वल्पः अपि अनुभवः नास्ति इति अयं संन्यासी अपूर्णज्ञानी एव।

मातः भवत्याः निर्णयः मया स्वीकृतः। मया सांसारिकज्ञानम् अपि प्राप्तव्यम्। एतदर्थं मह्यं समयः दातव्यः।


श्रीशंकराचार्य-शिष्याः चकिताः जाताः। तान् त्यक्त्वा ते पर्वतानाम् एकान्तवासं गताः। तत्र पद्मपादेन सहः तैः चर्चा कृता।
गुरुदेवाः, मातुः सरस्वत्याः विचारः कथं सदोषः न हि? ज्ञानार्जने संसार-गृहस्थ-जीवनस्य का आवश्यकता? एतौ तु ज्ञानमार्गे प्रतिबन्धौ।
न हि पद्मपाद, आध्यात्मिक-सिद्धिः जीवन-कर्मभूमौ एव प्राप्तव्या।


सावधानेन श्रोतव्यम्-अहं योगक्रियाभिः समाधिमग्नः भवामि।


श्रीशंकराचार्याः योगासने निमग्नाः
मम आत्मा अन्यशरीरे प्रविशति। आत्मनः प्रत्यागमनपर्यन्तं मम शरीररक्षा कर्तव्या।


श्रीशंकराचार्याणाम् आत्मा वंगदेशस्य कस्मिन्नपि नगरे प्राप्तः।
* अद्य बंगाल इति कथ्यते।

तत्र वंगदेशस्य राजा मृत्युशय्यायाम् आसीत्। अस्य शरीरे श्रीशंकरात्मा प्रविष्टः। नृपेण पुनर्जीवनं प्राप्तम्।




राजा उत्थितः सौधे च आगतः। श्रीशंकराचार्याः च जीवनसुख-दुःखानि अनुभवन्ति।

नृपस्य कर्तव्यानां चिन्तानां च अनुभवाः श्रीशंकरैः गृहीताः। दुर्गन्यव
राज्यसुरक्षा, अपराधिनां दण्डदानादि - राजकार्येषु ते व्यग्राः।

राजसभायाम् उपविश्य जीवनस्य सुख-ऐश्वर्यणाम् अपि अनुभवाः तैः गृही





रामनगरदुर्गः,
वाराणसी, शिवरात्रिः

अयि सुरभारतीस्नेहिनः !

विलसन्तुतरां नः प्रणतयः ।

नाविदिता हीयमाना दशा गीर्वाणवाण्याः कस्यापि सहृदयस्य। ईदृशीयं दैन्यावस्था कस्य सुरभारतीपुत्रस्य मनसि क्लेशं न जनयति ? नैष प्रश्नः केवलं भाषायाः अपितु समग्रस्य वैदिकस्य, आध्यात्मिकस्य वाङ्मयस्य भौतिकस्य विज्ञानस्य च रक्षायाः। संस्कृतस्य ह्रासः विश्वस्य दैवसम्पद्ह्रासः। वयं मन्यामहे यत् संस्कृतस्योत्थानं विश्वस्य सर्वाङ्गीणम् उत्थानमेवेति। किन्तु इदानीं विद्यालयेषु शालासु च कापि उत्साहदायिनी स्थितिर्न दृश्यते। सर्वत्र नैराश्यमेव लभामहे।

परन्तु अस्मिन् अन्धतमसे नवोदयसूचिता प्रकाशरेखाऽपि वर्तते। विगतकतिपयवर्षेभ्यः संस्कृतस्नेहपूरितान्तःकरणैः संस्कृतानुरागिभिः स्वकीयैरखण्डप्रयासैः "विश्वसंस्कृतप्रतिष्ठानस्य" माध्यमेन संस्कृतसंवर्धनाय कार्यं सञ्चाल्यते यत्फलस्वरूपेण सर्वत्र भूमण्डले संस्कृतहितसाधकानाम् ऐक्यं पश्यामः।

देवभाषाप्रसारस्य कार्यं यत् पुरतोऽस्ति नः ।
न केवलं तदस्माकं कर्तव्यं धर्म एव वा ।।
यत्सत्यं तत्तु पूर्वेषामृषीणामृणशोधनम् ।
महाफलं महत्पुण्यमिति मे निश्चितं मतम् ।।

तथापि इत्थं प्रतिभाति यत् कार्यमिदं नाल्पेन कालेन पूर्णतामेष्यति अपितु दीर्घकालिकीं योजनामपेक्षत इति। वयं संस्कृतवाणीं व्यावहारिकीं कर्तुं यत्नशीलाः। एतदर्थं प्रतिष्ठानम् कोटिमुद्रामितम् अक्षयनिधिं निर्मातुकामम्। अनेन कोषेण प्रतिष्ठानं पूर्णकालिककार्यकर्तॄणां सुदृढां सङ्घटनां रचयिष्यति तेभ्यः कार्यकर्तृभ्यश्च संस्कृतसेवार्थं मानधनं देयं भविष्यति, न तु वेतनम्।

पुनश्च अस्य धनस्य उपयोगः पौरोहित्यवर्गसञ्चालनार्थं सरलसंस्कृतशिक्षणवर्गसञ्चालनार्थं च करणीय आस्ते।

उपर्युक्तोद्देश्यं सफलं कर्तुं नेपाल-महाराजाधिराज-पञ्चश्री-वीरेन्द्रवीरविक्रमशाहदेवैः लक्षमिता मुद्राः प्रतिष्ठानाय प्रदत्ताः। एवमेव सर्वैः संस्कृतसेवकैः अस्य अक्षयकोषस्य संवर्धने सहयोगः कर्तव्यः।

एतत् कार्यं सफलयितुं भगवान् श्रीविश्वेश्वरः अस्माकं शक्तिं प्रयच्छतु इति तच्चरणारविन्दयोः प्रार्थये। इति।

विभूति नारायण सिंह:

विभूतिनारायणसिंहः शर्मदेवः
काशीनरेशः

---

**धनप्रेषणस्थलम्:—**
**विश्वसंस्कृतप्रतिष्ठानम् व बनारस स्टेट बैंक लि० वाराणसी**
**दानं S. 80G. आयकर-विधानद्वारा करमुक्तिं लभते।**



तृतीयवर्षस्य द्वितीयाङ्कः स्वातन्त्र्यदिवसाङ्कः १५ अगस्त १९८९

# विश्वभाषा

## VISHVABHAS 'A

अन्ताराष्ट्रिया त्रैमासिकी संस्कृत-पत्रिका International Sans ·· ·uarterly

रामनगरदुर्गः,
वाराणसी, शिवरात्रिः



अयि सुरभारतीस्नेहिनः !

विलसन्तुतरां न प्रणतयः ।

नाविदिता हीयमाना दशा गीर्वाणवाणयाः कस्यापि सहृदयस्य । ईदृशीय दैन्यावस्था कस्य सुरभारतीपुत्रस्य मनसि क्लेशं न जनयति ? नैष प्रश्नः केवलं भाषायाः अपितु समग्रस्य वैदिकस्य, आध्यात्मिकस्य वाङ्मयस्य भौतिकस्य विज्ञानस्य च रक्षायाः । संस्कृतस्य ह्रासे विश्वस्य दैवसम्पद्ह्रासः । वयं मन्यामहे यत् संस्कृतस्योत्थानं विश्वस्य सर्वाङ्गीणम् उत्थानमेवेति । किन्तु इदानीं विद्यालयेषु शालासु च कापि उत्साहदायिनी स्थितिर्न दृश्यते । सर्वत्र नैराश्यमेव लभामहे ।

परन्तु अस्मिन् अन्धतमसे नवोदयसूचिता प्रकाशरेखाऽपि वर्तते । विगतकतिपयवर्षेभ्यः संस्कृतस्नेहपूरितान्तःकरणैः संस्कृतानुरागिभिः स्वकीयैरखण्डप्रयासैः "विश्वसंस्कृतप्रतिष्ठानस्य" माध्यमेन संस्कृतसंवर्धनाय कार्यं सञ्चाल्यते यत्फलस्वरूपेण सर्वत्र भूमण्डले संस्कृतहितसाधकानाम् ऐक्यं पश्यामः ।

देवभाषाप्रसारस्य कार्यं यत् पुरतोऽस्ति नः ।
न केवलं तदस्माकं कर्तव्यं धर्म एव वा ॥
यत्सत्यं तत्तु पूर्वेषामृषीणामृणशोधनम् ।
महाफलं महत्पुण्यमिति मे निश्चितं मतम् ॥

तथापि इत्थं प्रतिभाति यत् कार्यमिदं नाल्पेन कालेन पूर्णतामेष्यति अपितु दीर्घकालिकीं योजनामपेक्षत इति । वयं संस्कृतवाणीं व्यावहारिकीं कर्तुं यत्नशीलाः । एतदर्थं प्रतिष्ठानम् कोटिमुद्राभितम् अक्षयनिधिं निर्मातुकामम् । अनेन कोषेण प्रतिष्ठानं पूर्णकालिककार्यकर्तॄणां सुदृढां सङ्घटनां रचयिष्यति तेभ्यः कार्यकर्तृभ्यश्च संस्कृतसेवायै मानधनं देयं भविष्यति, न तु वेतनम् ।

पुनश्च अस्य धनस्य उपयोगः पौरोहित्यवर्गसञ्चालनार्थं सरलसंस्कृतशिक्षणवर्गसञ्चालनार्थे च करणीय आस्ते ।

उपर्युक्तोद्देश्यं सफलं कर्तुं नेपाल-महाराजाधिराज-पञ्चमी-वीरेन्द्रवीरविक्रमशाहदेवैः लक्षमिता मुद्राः प्रतिष्ठानाय प्रदत्ताः । एवमेव सर्वैः संस्कृतसेवकैः अस्य अक्षयकोषस्य संवर्धने सहयोगः कर्तव्यः ।

एतत् कार्यं सफलयितुं भगवान् श्रीविश्वेश्वरः अस्माकं शक्तिं प्रयच्छतु इति तच्चरणारविन्दयोः प्रार्थये । इति ।

*विभूतिनारायण सिंहः*

विभूति नारायण सिंहः

विभूतिनारायणसिंहः शर्मदेवः
काशीनरेशः

धनप्रेषणस्थलम्:-
विश्वसंस्कृतप्रतिष्ठानम् द बनारस स्टेट बैंक लि. वाराणसी
दानं S. 80G. आयकर-विधानद्वारा करमुक्तिं लभते ।






शुल्कविवरणम्

| | |
|---|---|
| आजीवन सदस्यता— शुल्कम् | १५०-०० |
| वार्षिकशुल्कम् | १५-०० |
| प्रत्यङ्कमूल्यम् | ५-०० |

मुद्रणस्थलम्

तारा प्रिंटिंग वर्क्स

कमच्छा, वाराणसी–२२१०१०

विश्वसंस्कृतप्रतिष्ठानम् तस्य मुखपत्रम्

# विश्वभाषा

VISHVABHASHA

अन्ताराष्ट्रिया त्रैमासिकी संस्कृतपत्रिका

तृतीयवर्षसहितायां स्वातन्त्र्यदिवसाङ्कः

## वर्धतां भारतभूशोभा

डॉ० परमानन्द शास्त्री
सिद्धार्थसदनम्, मन्दिरमार्गः अलीगढ़म्

आलोक्यतां वाटिका एषा ।
पुष्पगन्धवैविध्य सुवेषा ॥

कर्णिकारमल्लिका यूथिकाः,
क्वचिद् बकुलबन्धूकवीथिकाः ।
सेवन्तिका-शिरीष-पाटलाः,
शोभन्ते एकत्र निर्मलाः ॥

पृथक् पृथक् रूपं मधु गन्धः,
पृथक् पृथक् वर्णानां बन्धः ।
सङ्गत्योपवनं कलयन्ति,
क्वापि नैव कलहं कुर्वन्ति ॥

साहचर्येण सदा विकसन्ति,
उल्लसन्ति विहरन्ति हसन्ति ।
भूयो हृद्यं मधु वर्षन्ति,
आमोदं मोदं यच्छन्ति ॥

एवमेव वयमपि विकसेमः,
मधुमोदं नितरां वर्षेमः ।
भारतमिदं वाटिका भव्या,
पुष्पाण्यस्य वयं वास्तव्याः ॥

तिष्ठेमः सततं निर्लोभाः ।
वर्धतां च भारतभू-शोभा ॥

●

## ★ नियमाः ★

१—विश्वभाषायां सरलाः, सुबोधाः विवादादिरहिताः, मनोरञ्जकाः, ज्ञानवर्धकाः, संस्कृतस्य प्रचारे उपयोगिन्यश्चैव रचनाः प्रकाशतामर्हन्ति ।

२—लेखकैः स्वीयरचनाः पत्रस्यैकस्मिन् भागे स्पष्टतयालिखिताः टङ्किता वा पूर्वं कुत्रचिदप्रकाशिता अप्रसारिता एव प्रेषणीयाः । सहैव स्वसंकेतयुक्तं पुटकं (पत्रालयचीटिकायुक्तम्) अपि प्रेषणीयन् । पुटकरहिता रचना अस्वीकृता सती परावर्तिता न भविष्यति ।

३—अत्र प्रकाशितानां सर्वासामपि रचनानां समस्तमप्युत्तरदायित्वं तदीयलेखकानामेव भविष्यति । पत्रिकापरिवारः एतदर्थमुत्तरदायी न भविष्यति ।

●

## स्थायिस्तम्भाः



## अस्मिन् अङ्के



उप-राष्ट्रपति, भारत
नई दिल्ली
VICE-PRESIDENT
INDIA
NEW DELHI
जुलाई २०, १९८९

## संदेशः

महतो हर्षप्रकर्षस्यायं विषयो यत् काशीस्थेन विश्वसंस्कृतप्रतिष्ठानेनास्मिन् वर्षे "विश्वभाषा" नामिकायाः पत्रिकायाः स्वतन्त्रतादिवसविशेषांकः प्रकाशयिष्यत इति । संस्कृत-भाषायाः साहित्यं राष्ट्रियभावनायाः विशिष्टं स्रोतो वर्तते । एतस्याः साहित्येन भारतराष्ट्रस्य स्वातन्त्र्यसंग्रामसेनानिनां सम्यक्तया पथप्रदर्शनं विहितम् । येषां महापुरुषाणां त्यागतपोमयजीव-नेनेदं राष्ट्रं स्वातन्त्र्यसुखमलभत, तेषां स्मरणं पुण्यतमं कर्म विद्यते ।

संस्कृतं हि विश्वस्य प्राचीनतमा समृद्धतमा च भाषा वर्तते, तथा च विश्वसाहित्यं संस्कृतसाहित्येनानुप्राणितमस्ति । इयं हि भाषा संगणकयन्त्रस्य कृते सर्वाधिकसमुपयोगिनीति वैदेशिकैरपि विद्वद्भिरङ्गीक्रियते ।

"उदारचरितानां तु वसुधैव कुटुम्बकम्" इत्यादिभिः सूक्तिभिः एतन्माध्यमेन प्रतिष्ठापितं विश्वबन्धुत्वं जगतः प्रेरणास्पदम् । "जननीजन्मभूमिश्च स्वर्गादपि गरीयसी" इत्यादि-भिरादर्शवाक्यैः संवर्णितो जन्मभूमेर्महिमा स्वतन्त्रतासंग्रामस्य मूलमन्त्रमिव राजते ।

तस्मिन्नेव प्रसङ्गे विश्वसंस्कृतप्रतिष्ठानेन संस्कृतभाषायाः समीचीनप्रचार-प्रसार दृष्ट्वा विधीयमानं विश्वभाषापत्रिकायाः प्रकाशनं सर्वथा लोकानां कृते मार्गदर्शकं भविष्यतीति शब्दैरस्य प्रकाशनस्य साफल्यं कामये ।

**डॉ० शंकर दयाल शर्मा**

# सम्पादकीयम्

अद्य भारतस्य स्वातन्त्र्यदिनम्। एतत् स्वातन्त्र्यं १५ ऑगस्त १९४७ तमे दिनाङ्के एव प्राप्तम्। एतस्य संस्मरणं प्रतिवर्षं चलति। एतदर्थं सभासमारम्भाः भवन्ति। ध्वजवन्दनं भवति। मानवन्दना, सञ्चलनं, सत्कृदर्थं योग्यानां सत्कारः इत्यादयः कार्यक्रमाः संपाद्यन्ते। महता उत्साहेन अयम् उत्सवः समाराज्यते।

स्वातन्त्र्यप्राप्ति-आन्दोलनसमये यैः स्त्रीपुरुषजनैः प्राणाः त्यक्ताः, सर्वस्वादिकं च समर्पितं तेषां संस्मरणमपि साध्यते। गतस्वातन्त्र्यदिनतः अद्यतनीय स्वातन्त्र्यदिनपर्यन्तं किं किं कार्यं कृतं, किं किं कार्यम् अवशिष्टम्, अग्रे च किं किं कार्यकरणीयम् इति सञ्चिन्तनमपि चलति। गतवर्षीय-सफलता-असफलताविषये विचारविमर्शः क्रियते। सफलतासफलतानां कारणाकारणमीमांसामथनेन सम्यक्तया उद्बोधनम् अपि साध्यते। पुनरपि कार्यसफलताविषये आशा धार्यते। आशाविषये भर्तृहरेः सुभाषितसंग्रहे विशिष्टः उल्लेख वर्तते—

**आशा नाम मनुष्याणां काचिदाश्चर्यशृङ्खला।**
**यया बद्धाः प्रधावन्ति मुक्तास्तिष्ठन्ति पङ्गुवत्** ॥भर्तृ सं० ४०५।



पं० गुलाम दस्तगीरः

शृङ्खला प्रायः बन्धनार्थमेव उपयुज्यते। बन्धनेन वेगः नियन्त्र्यते। कस्य अपि पङ्गुवदेव स्थितिः भवति शृङ्खलाबन्धनेन। परन्तु आशा नाम काचिदाश्चर्यशृङ्खला। अनया बद्धाः अतिवेगेन धावन्ति। अनया ये बद्धाः न भवन्ति ते सर्वे पङ्गुवदेव तिष्ठन्ति। किमपि न कुर्वन्ति। किमपि कर्तुं नैव इच्छन्ति। परम् आशायाः अपि अतिरेकः न स्यात्। 'अति सर्वत्र वर्जयेत्' इति सूक्तिः अपि अस्ति। एतस्याः सूक्तेः समर्थनार्थम् अन्यानि उदाहरणानि अपि शार्ङ्गधरेण दत्तानि सन्ति। तद् यथा—

**अतिदानात् बलिर्बद्धः ह्यतिमानात्सुयोधनः।**
**विनष्टो रावणो लौल्यात् अति सर्वत्र वर्जयेत्** ॥ शा० प० नी० २६।

अतः कस्मिन्नपि विषये अतिरेकः कदापि नैव करणीयः।

एतदेव धोरणमनुसृत्य भारतेन विविधक्षेत्रेषु प्रायः सर्वेषु एव क्षेत्रेषु काचित् प्रगतिः साधिता अस्ति इति दृश्यते। काचिच्च सुधारणा अपि अनुभवपथम् आयाति। बहुत्र खानपान-वेषभूषा-निवासस्थान-प्रवासादिविषये आवश्यकतानुसारं सुविधा साधिता वर्तते। स्वच्छतापालनादिविषये अपि अवधनं दीयते। स्वास्थ्यकेन्द्राणि, विश्रामगृहाणि चापि बहूनि दृग्गोचरी भवन्ति। एतेषाम् उपयोगः उपभोगः च जनैः गृह्येते। प्रवासविषये विविधप्रकारकवाहनानां व्यवस्था सर्वेषाम् अनुभवपथम् आयाति। कदाचित् एषा व्यवस्था अपर्याप्ता अपि भवति। एवं विविधाः सुविधाः साध्याः जाताः एतासाम् च सहायता अस्य संसारस्य व्यवहारेषु व्यव-

सायेषु च सततं भवति। उत्पादनसंवृद्धिः सततम् अतिवेगेन पुनरपि नितरां वर्धमाना दृश्यते। प्रवासविषये अपि कालातिपातः विनष्टः जातः वर्तते। प्रायः संपूर्णं विश्वमेव सन्निकटे आगतं विद्यते। किमपि नातिदूरमित्येव स्थितिः संपन्ना। सुखसौविध्यानां विपुलता एव सर्वत्र अनुभवपथम् आयाति।

तथापि अत्र सर्वे सुखिनः एव सन्ति इति कथनं केनापि न मन्यते। अर्थात् अत्र दुःखिताः अपि सन्ति। भर्तृहरिणा अस्य संसारस्य सुखदुःखानां संमिश्रं चित्रमेव एकस्मिन् श्लोके चित्रितं विद्यते। तद् यथा—

**क्वचिद्विद्वद्गोष्ठी क्वचिदपि च सुरामत्तकलहः।**
**क्वचिद्वीणावादः क्वचिदपि च हाहेति रुदितम्॥**
**क्वचिद्रम्या रामा क्वचिदपि च जराजर्जरतनुः।**
**न जाने संसारः किममृतमयः किं विषमयः॥** भर्तृ० ३०५१

एतस्मिन् श्लोके यानि उदाहरणानि उद्धृतानि वर्तन्ते तानि प्रतीकरूपाणि एव मन्तव्यानि। तथा अन्ये अपि प्रसङ्गा वा घटनाः वा उदाहरणानि वा अन्तर्भूतानि सन्ति इति मन्तव्यम्। क्वचिद् विद्वज्जनानां चर्चा चलति विचारविमर्शः भवति, विचाराणाम् आदानं प्रदानं चापि घट्येते। किं योग्यं वा अयोग्यं वा किं करणीयं वा न वा करणीयम् इति निष्कर्षः अपि साध्यते। क्वचित् च मद्यपानं मनसोक्तं चलति, सुरापानेन मत्ताः भवन्ति, ततः कलहाः च। मद्यपानेन बुद्धिः अपि भ्रष्टा भवति, अर्थनाशः भवति, अनर्थाः च समुद्भवन्ति। कुटुम्बम् उध्वस्तं भवति, वंशः अपि नाशतां गच्छति। तथापि मद्यपानं चलत्येव। मद्यपानं नाम केचित् प्रतिष्ठामेव मन्यन्ते। कुत्रचित् वीणादिवाद्यवादनं भवति, सुमधुरस्वरेण संगीतमपि गीयते, मनोरञ्जनात्मकाः कार्यक्रमाः भवन्ति, भावभक्तिपरगीतानि, ध्यानधारणादिकमपि प्रवर्तते। अन्यत्र हा हा इति रोदनं चलति, दुःखदाः घटनाः अपि दृश्यन्ते। केषाञ्चन नीद्रापीडा, काञ्चन बुभुक्षा पीडयति। क्वचित् रम्याणि मनोहराणि च सौन्दर्यस्थलानि वर्तन्ते। एतेषु केचित् रममाणाः अपि दृश्यन्ते। कुत्रचित् कुरूपस्थलानि अपि विद्यन्ते। केषाञ्चन तनुः जरया जर्जरा, रोगपीडिता, विविधबाधाभिः च पीडिता दृश्यते। केषाञ्चन शरीरं स्थूलं, केषाञ्चन च कृशम्। केचन शरीरेण सुदृढाः, अदृढाः च कुत्रचित् केचित् धनाढ्याः केचित् च धनहीनाः। भोजनान्ते केषाञ्चन उदरपीडा वा पचनक्रियापीडा वा, केषाञ्चन उदरं रिक्तमेव अन्नलब्धिं विना। एवमेव एतस्मिन् संसारे अस्ति। एषा विपरीतता वा विचित्रता वा एव। अतः अयं संसारः सुखमयः वा दुःखमयः वा इत्येव प्रश्नः दृष्टिपथम् आयाति।

एतादृशी विपरीतता वा विचित्रता मा भवतु इति प्रयत्नाः चलन्ति। सर्वापेक्षया शासनमेव अधिकं समर्थं कुशलं च एतदर्थम्। तथा शासनेन कार्यनिर्वहणमपि क्रियते। परन्तु शासनस्य कार्यनिर्वहणे अपि विपरीतता एव दृश्यते। उदाहरणं संस्कृतमत्र पर्याप्तम् एतस्य समर्थनार्थम्। अन्ये अपि विषयाः सन्ति एव। परमत्र विस्तारभयम्।

संस्कृतविषये विपरीतता एव। भारतस्य पारतन्त्र्यकाले अपि संस्कृतस्य एतादृशी विपरीतता नासीत्। अद्यतनीय स्वतन्त्रे अपि भारते एषा विपरीतता अनुभवपथम् आयाति इति आश्चर्यमेव। सभामञ्चे व्यासपीठे च मन्त्रिमहोदयाः, अधिकारिजनाः च संस्कृतविषये महतीं अनुकूलताम् आवश्यकतां च प्रतिपादयन्ति समर्थयन्ति च। संस्कृतस्य गौरवमपि कुर्वन्ति, आश्वासनानि अपि उद्घोषयन्ति। परं प्रत्यक्षं कृतिकरणसमये, कार्यनिर्वहणकाले च विपरीतता एव ध्याने आगच्छति।

भारतस्य संघराज्यपद्धतिः। अत्र विविधप्रदेशराज्यानि अन्तर्भूतानि। संघराज्यस्य, तथा च प्रदेशराज्यानां कृते प्रशासननिर्वहणार्थं स्वतन्त्राः विषयसूचयः अपि वर्तन्ते। तान् विषयान् अनुसृत्य एव कार्य-

निर्वहणं चलति। परं संस्कृतविषये सर्वत्र समानता नास्ति। केन्द्रशासनेन केषुचन प्रदेशेषु एव संस्कृतविद्यापीठानि प्रचाल्यन्ते। न राज्ये राज्ये। उत्तरप्रदेशशासनस्य संस्कृतविषये कोट्यवधिरूप्यकाणां योजनाः चलन्ति। उत्तरप्रदेशे संस्कृतस्य विश्वविद्यापीठम् अपि अस्ति। अत्र च स्वतन्त्रा संस्कृतअकादमी अपि। एतदर्थं भव्यं संस्कृतभवनमपि। एतदर्थं स्वतन्त्रः निदेशालयः अपि। स्वतन्त्रतया कार्यालयः, कार्यनिर्वहणपद्धतिः विविधाः स्पर्धाः, बहुविधाः पुरस्काराः, इत्यादयः उपक्रमाः चलन्ति। संस्कृत-अकादम्याः स्वतन्त्रा नियमावलिः अपि प्रकाशिता विद्यते। लिपिकाः, निरीक्षकाः, उपनिदेशकाः, निदेशकः इत्यादयः पदाधिकारिणः अपि अत्र विराजन्ते। राजस्थानप्रदेशे अपि प्रायः एवमेव चलति। अत्र (राजस्थाने) केन्द्रशासनेन संस्कृतार्थं यद् दीयते तस्मात् अधिकं नाम द्विगुणितप्रमाणेन राजस्थानशासनेन दीयते व्ययीक्रियते च इति कथ्यते। ततः बिहारराज्ये ततः च मध्यप्रदेशराज्ये च। अन्यत्र संस्कृतस्य अकादमी अपि नास्ति। नाममात्रा संस्कृतसमितिः अपि नास्ति। महाराष्ट्रे संस्कृतस्थायिसमितिः अस्ति। परम् अस्याः वर्षत्रये एकापि सभा न जाता।

शिक्षणदानस्य पाठ्यक्रमे अपि सर्वत्र एक सूचना नास्ति। नूतनशिक्षणनीत्यां संस्कृतस्य महत्त्वपूर्णं गौरवं कृतं वर्तते। परन्तु केषुचन प्रदेशेषु पाठ्यक्रमे संस्कृतस्य नामोल्लेखः अपि नास्ति। नूतनशिक्षणपाठ्यक्रमस्य कार्यनिर्वहणार्थं नवोदयविद्यालयाः प्रचाल्यन्ते। परम् एतेषु नवोदयविद्यालयेषु संस्कृतविषयः एव नास्ति। नवीनशिक्षणनीत्यां संस्कृतस्य गौरवपूर्णानि वचनानि, तथा च मन्त्रि-अधिकारिजनानामपि आश्वासनपूर्णानि वचनानि। 'वचने किं दरिद्रता' इति सूक्तिः। अस्याः सूक्तेः विवरणमपि एकस्मिन् श्लोके मण्डितं विद्यते। तद् यथा—

**हस्तादपि न दातव्यं गृहादपि न दीयते।**
**परोपकरणार्थाय वचने किं दरिद्रता॥**

एतस्य सुवचनस्य एव यथार्थतया पालनं चलति इति एव अनुभवपथम् आयाति।

केन्द्रशासनस्य अधीने अपि बहुविधाः विद्यालयाः चलन्ति। एतेषां विद्यालयानां पाठ्यक्रमादिनिर्धारणार्थम् एकं मण्डलमपि अस्ति। अनेन मण्डलेन अपि संस्कृतविषयस्य दुरवस्था एव साधिता वर्तते। अस्य मण्डलस्य संस्कृतनिर्णयस्य विरोधे सर्वोच्चन्यायालये प्रार्थनापत्रमपि मण्डितम्। अस्य प्रार्थनापत्रस्य विचारं कृत्वा सर्वोच्चन्यायालयेन संस्कृतार्थम् अनुकूलः स्थगनादेशः अपि प्रदत्तः। अस्य आदेशस्य पालनमपि यथार्थतया न चलति।

१९८३ तमे खिस्ताब्दे महाराष्ट्रशासनस्य मन्त्रिमण्डलेन अपि ऐच्छिकरूपेण वा वैकल्पिकरूपेण वा अपि संस्कृतस्य स्वीकारः नैव कृतः। एतदर्थमपि महाराष्ट्रस्य उच्चन्यायालये प्रार्थनापत्रं मण्डितम्। उच्चन्यायालयेन अपि महाराष्ट्रमन्त्रिमण्डलस्य संस्कृतस्य प्रतिकूलनिर्णयविषये स्थगनादेशः दत्तः। परमधुना गते जूनमासे (१९८९) महाराष्ट्रशासनस्य मन्त्रिमण्डलेन संस्कृतं वैकल्पिकरूपेण शिक्षणपाठ्यक्रमे स्वीकृतम्।

कर्णाटकशासनेन संस्कृतविषये एकः आयोगः स्थापितः आसीत्। परम् अनेन आयोगेन संस्कृतस्य निष्कासनमेव संसूचितम्। एतदर्थं कर्णाटके अपि उच्चन्यायालयेन संस्कृतविषये अनुकूलता निर्णीता; ततः कर्णाटकशासनेन सर्वोच्चन्यायालये प्रकरणं प्रचालितम्। सर्वोच्चन्यायालयेन अपि कर्णाटकशासनस्य प्रार्थनापत्रम् अस्वीकृतं कृतम्। अर्थात् सर्वोच्चन्यायालयेन संस्कृतविषये अनुकूलः एव निर्णयः प्रदत्तः। परम् अधुना कर्णाटके संस्कृतस्थानविषये कार्यनिर्वहणार्थं मन्दादरः एव चलति। कथं वा केनमार्गेण वा संस्कृतस्य निष्कासनं करणीयमित्येव विचारः समारब्धः कर्णाटकशासनस्य इति श्रूयते।

प्रजाजनानां कृते न्यायालयस्य निर्णयः बन्धनकारकः भवति। तथा शासनस्य कृते अपि बन्धनकारकः। तथापि शासनेन अयं निर्णयः नैव पाल्यते इति दृश्यते। प्रजाजनानां कृते न्यायालयनिर्णयस्य कार्यनिर्वहणार्थं शासनस्य उत्तरदायित्वम्। परं शासनविषये किम्? शासनं शासनविरुद्धनिर्णयस्य कार्यनिर्वहणं कथं करिष्यति? एतदर्थं स्वतन्त्रा का अपि अन्या व्यवस्था अत्यावश्यिका। परम् अयं विचारः अपि अद्यापि न समुद्भूतः इत्यपि आश्चर्यमेव। शासनेन त्यागपत्रं देयम् इति उपायः संसूच्यते। त्यागपत्रं नाम न यथार्थः उपायः। अयं चोपायः पर्याप्ततया योग्यः अपि नास्ति। एवं संसूचनमपि राजकरणमिति कथनं संभवेत्। राजकारणं तु न अस्मदीयानां कार्यम्। अस्मदीयानां कार्ये संस्कृतं संस्कृतिः च।

आकाशवाणी केन्द्रशासनाधीना। आकाशवाणीद्वारा ''इयम् आकाशवाणी। संस्कृतवार्ताः श्रूयन्ताम्.....'' इत्यादि समाचारश्रवणं प्रक्षेपितं भवति। परम् एतदपि सर्वेषु आकाशवाणीकेन्द्रेषु प्रक्षेपितं न भवति। 'आकाशवाणी' इति शब्दः अपि न गृह्यते न सह्यते चापि। एवं विपरीतता एव अत्रापि। आकाशवाणीमाध्यमेन वार्ताश्रावणस्य उपक्रमारम्भः अपि आश्चर्यकारकः एव। प्रथमतः जर्मनदेशेन संस्कृतमाध्यमेन वार्ताश्रावणं समारब्धम्। ततः प्रायः वर्षद्वयानन्तरमत्र संस्कृतमाध्यमेन वार्ताश्रावणं स्वीकृतं जातम्। अनेन अस्मदीयानां पाश्चात्यानुकरणशीलता एव दृग्गोचरी भवति।

एवं बहूनि उदाहरणानि दातुं शक्यन्ते परमत्र विस्तारभयम्। अतः संस्कृतस्य एव उदाहरणं प्रतीकरूपेण मन्तव्यम्। संस्कृतं नाम भारतस्य सर्वस्वमपि। संस्कृतं धर्ममूलम्। धर्मः सुधारणामूलम्। सुधारणा ज्ञानमूलम्। ज्ञानं शिक्षणमूलम्। शिक्षणं संस्कारमूलम्। सस्कारः शीलसंवर्धनमूलम्। शीलं परं भूषणम्, शीलं हि विदूषां धनम्; शीलं सर्वत्र वै धनम्; शीलं भूषयते कुलम्....इत्यादीनि शीलविषये सुवचनानि सर्वश्रुतानि अपि। परमत्र मूलं संस्कृतमेव वर्तते इति ध्याने सम्यक्तया धारणीयमिति अवगन्तव्यम्। ततः एव विपरीतता वा विचित्रता वा कदापि कुत्रापि न भवेदिति एव सच्चिन्तनं स्वातन्त्र्यादिननिमित्तेनेति शम्।

**—गुलाम दस्तगीर विराजदारः**
**सम्पादकः**

# नयी शुरूआत नयी शक्ति




- हरित क्रांति को विस्तार मिलने से अन्न उत्पादन में तिगुनी वृद्धि
- सर्वतोमुखी ग्रामीण विकास
- जवाहर रोजगार योजना : गरीबी रेखा से नीचे के प्रत्येक परिवार के कम-से-कम एक सदस्य को रोजगार
- बढ़ते उद्योग : नौ प्रतिशत वार्षिक बढ़ोत्तरी, उच्चतर निर्यात
- सब के लिए बेहतर चिकित्सा सुविधाएं – जच्चा-बच्चा के स्वास्थ्य पर विशेष जोर
- राष्ट्रीय परिप्रेक्ष्य योजना के अंतर्गत महिलाओं के लिए नये अवसर
- ग्रामीण विद्यार्थियों के लिए बेहतर शिक्षा सुविधाएं
- प्रौद्योगिकी मिशन के अंतर्गत गरीबी दूर करने के कारगर उपाय
- पंजाब में सामान्य स्थिति लाने के लिए कई उपाय
- निम्नतम स्तर पर लोकतंत्र की बहाली – पंचायती राज में नयी शक्ति

davp 89/337

## स्वाधीनता - स्थिरता - विकासशीलता

# पण्डितजवाहरलालनेहरूः

—डॉ० राधेश्यामधर द्विवेदी
दर्शनविभागाध्यक्षः
सम्पूर्णानन्दसंस्कृतविश्वविद्यालयस्य



पण्डित जवाहरलाल नेहरूः

पञ्चशीलस्य प्रवर्तकान् तटस्थदेशानां राजनीतिविधायकान् भारतस्य प्रथमप्रधानमन्त्रिणो जवाहरलालनेहरूमहोदयान् के हि भारतीयाः युवकाः बालकाः ? वृद्धाश्च न जानन्ति। ते प्रधानमन्त्रिणः आसन् अतस्तेषां माहात्म्यं न वर्तते प्रत्युत ते सरलाः सहजाः मानवाः अभूवन्। ते स्वीयमैश्वर्यं सुखं परित्यज्य देशस्य हिताय गान्धिनं विहाय अन्येभ्यो नेतृभ्यो अधिकं कालं यावद् कारागारे, देशे जनेषु स्वातन्त्र्यस्य भावं जागरयितुं परिश्रमे, विश्वमञ्चे भारतस्य माहात्म्यं स्थापयितुं पञ्चशीले, बालकेषु प्राकृतिकं स्वाभाविकं स्वरूपमुदभावयितुं जापानीयबालकानां कृते मैसूरीयगजदाने, जनानां दारिद्र्येण पिशितं स्वरूपं विभाव्य कारुण्ये भारतस्य समग्रां संस्कृतिं पर्यनुवेक्ष्य विशालतमायां भारतीयोदारभावनायां प्रवर्तन्ते स्म। ऋषयो ज्ञानिनो भवन्ति, किन्तु ते न सन्तजना भवन्ति; भारते सन्तपरम्परा ज्ञानपरम्परा च बहोः कालात् प्रचलतः किन्त्युभयोरैक्यं यदि कुत्रापि दरीदृश्यते तर्हि तद् पण्डितजवाहरलालनेहरूमहोदय एव। यतो हि ते सन्तपरम्परानुयायिभ्यो महात्मागान्धिभ्यः एकत्र प्रभाविताः, अन्यत्र आधुनिकज्ञानविज्ञानेनापि प्रभाविताः दृश्यन्ते। पण्डितमोतीलालनेहरूमहोदयेन तस्य राष्ट्रियकर्मणि नित्यं व्यापृतत्वमवेक्ष्य व्यङ्ग्येन उक्तम् "अन्यस्य बलमाधृत्य यदि राष्ट्रियं कर्म समुपास्यते तर्हि केवलं स्वां गृहिणोमेव संरक्ष्य तदनुष्ठायतामिति तदा प्रयागमहानगरे नगरपालिकाया सेवाकार्यं कृत्वा तैः तस्योत्तरं प्रादायि। न केवलं व्यक्तावेव राष्ट्रजीवने यदा द्वाष्टयधिकैकोनविंशतिशततमे वर्षे चीनराष्ट्रेण भारतमाक्रमितम् तदा तस्यामैत्रीकार्यं दृष्ट्वा ते पूर्वतोऽप्यधिकैनोत्साहेन तं भर्त्सयन्तो भारतस्य औद्योगिकं आयुधीयं च विकासं संस्थापितवन्तः। तस्मादेवाधुना भारतं सबलं राष्ट्रं मन्यते—इत्थं नेहरूमहोदयानां विषये उक्तिरियं साधु प्रतिभाति—

सम्पदि यस्य न हर्षो
विषदि विषादो रणे न भीरुत्वम्।
तं भुवनत्रयतिलकं
जनयति जननी सुतं विरलम्॥

पं० जवाहरलालनेहरूमहोदयानां भारतं, भारतीयां, संस्कृतिं संस्कृतं च प्रति यो हि अनुरागः आसीत्, स च बहुभिर्न ज्ञायते। तैः १९५६ वर्षे भाण्डारकर-ओरियन्टरिसर्चसंस्थाने भणितम्—

संस्कृतस्य संस्कृतिः साहित्यञ्च भारते सात्मीकरणसंयोजनयोः, मानवतायाः मानवमूल्यानां, व्यक्तिसमाजयोः मध्ये सौहार्देन सह विकासविस्तारयोश्च भावके भवतः। तस्मादेवेयं महत्तमा प्राचीनतमा भाषासम्पत्तिः संरक्षणोया। इयञ्च भारतस्य विकासस्य उचितादिक्प्रदात्रीति।

The culture of Sanskrit and Sanskrit literature is actually the centre of synthesis

and the assimilation. The message of Sanskrit literature is one of humanism, of unity of human kind, of values of peace and mutual understanding and harmonious developoment of individual and society. Acquaintance with such literature can only elevate and widen one's outlook. For from being obscurantist, the Sanskrit literature can be a positive force for progress and growth in the right direction.

ते महदवसादैः युक्ताः सन्तः संस्कृताज्ञानेन सदा खिद्यन्ते स्म। गौतमबुद्धस्य उदारां विचारधारां विदेशेषु प्रसृतामवलोक्य भारतस्य वैशिष्ट्यमवगच्छन्ति स्म। अशोकवद् स्वयमपि महान्तं स्वरूपं प्रस्तोतुं यतन्ते स्म। भारतस्य सांस्कृतिकैतिहासिकगौरवाभ्यां तस्य परिचयो हि आचार्यनरेन्द्रदेवमहोदयेन कारितः। अतः प्रतीच्यदेशीयानां ख्रीस्तीयबहुला राजनीतिवत् प्राच्येषु बुद्धस्य मानवताप्रधानां समाजनीतिं प्रस्थातुं पञ्चशीलबलेन चेष्टितम्। यद्यपि विषयेऽत्र ते नैव साफल्यं प्रापुः तथापि तदुद्घाटितं हि कृत्यं सम्प्रति एशियाईराष्ट्रेषु प्रस्फुरीभवति। तस्य मतमासीत् यत् राजनीतिज्ञैः सदैव कर्णौ उद्घाटयितकौ मुखानि च अनुद्घाटितानि तेन सकलं इष्टानिष्टं ज्ञातुं शक्यते। ते लोकतान्त्रिकाः प्रधानमन्त्रिणः आसीत्। अतएव सदैव संसदि समुपस्थिताः भवन्तः विरोधिनां विचारं शृण्वन्ति स्म, अधिवेशनकाले कदापि बहिर्नैव प्रयान्ति स्म। किन्त्वधुना मूल्यप्रधाना राजनीतिरेव दूरंगता, येन केन प्रकारेण सत्तायां स्थातुं यतन्ते राजनीतिविदः। नेहरूमहाशयाः प्रशासका भवन्तोऽपि सर्वजनानां हितसाधका भवन्ति स्म। ते सर्वजनानां हितमवेक्ष्य सर्वधर्मसमभावत्वरूपेण राज्यं स्थापितवन्तः। इदं हि भारतीयधर्मस्य सारभूतं मतम्। पण्डितगङ्गाधरशास्त्रिणा शाश्वतधर्मदीपिकायां तदेव प्रतिपादितम्।

लोके यः सर्वभूतेभ्यो ददात्यभयदक्षिणाम्।
स सर्वभूतैरीजानः प्राप्नोत्यभयदक्षिणाम्।
न भूतानामहिंसायाः ज्यायान्धर्मोऽस्ति कश्चन॥

इत्येवं सर्वभूतहितकारित्वमेव धर्म इत्युपसंहृतम्।

नूतनानि तीर्थानि भाकड़ाडैम, दुर्गापुर, भिलाई, भाभाएटामिक एनर्जीसेन्टरसदृशानि तैरेव निर्मितानि। सम्प्रदायनिरपेक्षसमाजवादः तैरेव स्थापयितुं यतितः। जनजातिषु गौरवं, हरिजनेषु उत्साहः, पण्डितेषु वैज्ञानिकता, राजवित्सु नैतिकता, लोकेषु प्रेम, युवसु पारस्परिकं सौहार्दं संस्थाप्य स्वीयाकलुषितजीवनेन लोकं सेवयामासुः। ते हि साम्प्रदायिकसंघर्षे विनैव संकोचम् आत्मानं पातयित्वा तत्परिशाम्यन्ति स्म। भाषिकं मतभेदं विभाव्य तत्परिष्कृत्य लोकदृष्टिं च प्रसार्य सन्तोषयन्ति स्म। स्वेजकैनालसदृशान्ताराष्ट्रियमहत्त्वशालिनां संघर्षाणां परिशमनाय सर्वदा प्रयतितवन्तः। वाङ्दुंगसम्मेलने पञ्चशीलमुपस्थाप्य एशियायां शान्त्युद्भावनाय यतितवन्तः। वर्मादेशस्य क्रान्त्यधिगते अनुमहोदयस्य, तिब्बतदेशस्य चीनाधिकरूपेण दलाईलामामहोदयस्य पक्षं गृहीत्वा यावज्जीवनं संरक्षणं कृतवन्तः।

गान्धिमहोदयानामनुयायिनोऽपि सन्तः ग्रामकुटीरादौद्योगिकीं क्रान्तिं बाढं मन्यन्ते स्म। भारतीयसंस्कृतिपक्षधरा अपि ते आधुनिक्या संस्कृत्या प्रभाविता अभूवन्। देशभक्ता सन्तोऽपि कश्मीरतिब्बतयोः राजनीतिपक्षे विवादग्रस्ता इवालक्ष्यन्ते। किन्त्वेतत्सकलं राष्ट्रस्य झटितिविकासाय, शान्तिकामनया कृतं तैः यद्यपि लोकः तस्य दृष्टिं नाधिगतवान् तथापि ते सञ्जाताः, सरलाः निष्कलङ्का आसन्निति नास्ति तत्र विसंवादः। इत्थं तेभ्योऽवत्सरेऽस्मिन् श्रद्धासमर्प्यते।



# युववर्गे मादकपदार्थसेवनव्यसनम्

—डा० वा० का० क्षीरसागरः,
तेलंग मेमोरीयल होस्टेल, सीरोड, चर्चगेट, मुम्बई

इदानीं सर्वत्र भारतवर्षे विशेषतः तरुणवर्गे मादकपदार्थसेवनव्यसनं नितरां प्रचलितं दरीदृश्यते। स्थितिः एषा, अत्यन्तं भयावहा। यतः यस्मिन् तरुणवर्गे, देशस्य अस्य, भविष्यत्कालः अवलम्बितः, सः तरुणवर्गः एव एतद्व्यसनग्रस्तः। न केवलं महानगरेषु नगरेषु, ग्रामेषु तथा जनपदेषु अपि व्यसनेन अनेन पदं कृतम् इति समाजधुरीणानाम् अभिप्रायः। विशेषतः महाविद्यालयीनेषु तथा विद्यालयीनेषु छात्रेषु अपि व्यसनम् इदं प्रतिदिनं वर्धमानम् अवलोक्यते।

केवलं मुम्बईमहानगरे एव एकलक्षपरिमिताः जनाः एतद्व्यसनाधीनाः। एतेषु व्यवसायकार्यकारिणः, भिषजः, छात्राः तथा अन्यवर्गस्था अपि जनाः वर्तन्ते। प्रतिदिनं पञ्चशतसंख्याकाः जनाः नूतनतया व्यसनाधीनाः भवन्ति पञ्चषाश्च एतद्वशात् मृत्युमुखे पतन्ति। एषु मादकपदार्थेषु विविधप्रकाराः वर्तन्ते। केषाञ्चित् नामानि ब्राउनशुगर-मैण्ड्रेक्स-हेराइन-इत्यादीनि वर्तन्ते।

एतेषां सेवनेन मस्तिष्कहानिः, नपुंसकता तथा अन्ततो मृत्युः इत्यादयो दुष्परिणामा अनिवार्याः। मूत्रपिण्डकार्यविघातः अनेन संजायते। तथा मनुजस्य स्वाभाविक्याः नैसर्गिक्याः रोगप्रतीकारशक्तेः अपि अपरिमिता हानिर्भवति इति अस्य व्यसनस्य महान् विशेषः दुष्परिणामः तज्ज्ञैः कथ्यते।

यद्यपि शासनेन वृत्तपत्रैः नियतकालिकैश्च तथा अन्याभिः काभिश्चन सेवाभाविनीभिः सामाजिकीभिः संस्थाभिः, व्यसनम् एतत्, एकं राष्ट्रियसङ्कटम् इति पुनःपुनः उद्घोषितम्, यद्यपि केन्द्रशासनेन, व्यसनम् इदम्, विधिदृष्ट्या अपराधः इति घोषितम्, तथापि नित्यं वर्धते एव व्यसनिनां संख्या। किम् अस्य कारणम्? को वा हेतुः तत्र इति विचारयामः।

प्रथमं तावत् इदम् अवश्यं स्पष्टीकरणीयं यत् इदं मादकपदार्थव्यसनं विशेषतः श्रीमत्सु तरुणेषु दृश्यते। श्रीमतां धनवतां वा दुर्लक्षितेषु दुर्लालित्येषु वा अपत्येषु व्यसनं इदं झटिति प्रसृतं भवति। मातुः पितुश्च परस्परकलहः अन्यत्र निवसनं वा अपत्यानि दुःखीकरोति। एतादृशानां अपत्यानि वैफल्यवशात् एतद्व्यसनाधीनानि सहजतया भवन्ति। मातुः पितुश्च अन्योन्यकलहेन निराशीभूतानां अपत्यानां एतद्व्यसनग्रस्तता नाम एकः प्रकारः। अन्ये केचन युवानः केवलं कौतूहलेन एव "एकवारमेव इमम् आस्वादयेयम् न पुनः" इति कृत्वा अन्ते व्यसनवशगामिनो भवन्ति। व्यसनिनस्तु व्यसनपूर्तये धनमाप्तुं चौर्यकर्मापि कर्तुं न बिभ्यति लज्जन्ते वा इति सार्वत्रिकः अनुभवः।

कानि वा लक्षणानि एतद्व्यसनग्रस्ततायाः? क्षुधायाः अभावः, प्रतिदिनं शरीरकार्श्यं, अकस्मादेव मधुरपदार्थविषये रुचिः, प्रासङ्गिकी वमनभावना, दन्तकेशनखानां स्वच्छताविषये अवधीरणा, स्नाने अरुचिः इत्यादीनि अस्य व्यसनस्य लक्षणानि।

तथा के के परिणामाः अस्य व्यसनस्य? सततं जलपरिपूर्णे नेत्रे, क्षवः, कासः, जघने तथा पृष्ठसन्धौ वेदना, ज्वरः, मानसिकसम्भ्रमः, सततं म्लानं वदनं अलसं च वपुः इत्यस्य व्यसनस्य परिणामाः दृश्यन्ते। एते व्यसनिनः स्वस्य व्यसनपूर्तये अन्यान् धनं याचन्ते चोरयन्ति वा।

( शेषांशः १७ पृष्ठे )



तिगुने से अधिक उत्पादन। खाद्यान्न में आत्म-निर्भर।



हर चार में से तीन गांवों में बिजली।



सिंचित क्षेत्र दुगुना।




कमजोर वर्गों के उत्थान के लिए विशेष कार्यक्रम।

# कई मील के पत्थर पार किये हैं हमने प्रगति पथ पर



पिछले पांच वर्षों में 10 करोड़ से अधिक लोग गरीबी रेखा से ऊपर।



चेचक, महामारी (प्लेग) का उन्मूलन। स्वास्थ्य सुविधाओं में व्यापक सुधार।



बेहतर सेहत - लंबी उम्र।



शिक्षण संस्थाओं और उनमें पढ़ने वालों की संख्या में छः गुना वृद्धि। साक्षरता का व्यापक विस्तार।



उत्पादन में प्रति वर्ष 9 प्रतिशत की शानदार वृद्धि। प्रमुख औद्योगिक देशों में भारत का उच्च स्थान।



**हमें अपनी प्रगति पर गर्व है।**

davp 89/59

# युवकप्रतिभायाः उपयोगः करणीयः

[ अस्माकं विश्वभाषायाः सहायकसम्पादकः श्रीराजारामशुक्लः विगतमार्चमासे ( १९८९ ) नवदिल्ल्यां महामहिम-उपराष्ट्रपति महोदयेन साकं मिलित्वा संस्कृताध्येतॄणां युवकयुवतीनां समस्या अधिकृत्य वार्तालापं कृतवान् । उपराष्ट्रपतिमहोदयायैकं ज्ञापनं प्रदत्तवान् । तस्यैव ज्ञापनस्य सारांशः अत्र प्रस्तूयते ।
—सम्पादकः ]

प्रतियुगे प्रत्येकसमाजेन सर्वक्षेत्रेषु युवकशक्त्याः अपेक्षा सततं कृता वर्तते इति दृश्यते । अत्र एव अस्याः शक्त्याः महत्ता प्रतीयते । कदाचित् काचित् दिव्यता अपि अत्र अस्याः शक्त्याः प्रचीतिमायाति ।

परम्पराः अति प्राचीनाः । प्रायः सर्वाः एव परम्पराः रूढाः भवन्ति । काश्चित् एताः सुदृढतामपि धारयन्ति । काश्चन नवतायाः स्वागतार्थं सिद्धाः न भवन्ति । नवतां च तिरस्कुर्वन्ति । अतः एव निन्दास्पदाः भवन्ति । ततः एव प्रायः युवकशक्त्याः कार्यारम्भः । नवतायाः अपि स्वीकारविषये प्रयत्नाः चलन्ति । तथा अंशतः वा अधिकतया वा स्वीकारः साध्यते । नवतायाः स्वीकारान्ते एताः प्राचीनाः जीर्णाः चापि परम्पराः नवजीवनवत्यः एव भवन्ति । अर्थात् मूलपरम्पराणामेव आधारः अत्र । एवं भूतकालाधारेण वर्तमानकालस्य स्वीकारं कृत्वा भविष्यत्कालस्य आधारशिलां स्थापयति इत्येषा युवकशक्तिः इति दृश्यते ।

नवतायाः कार्यसंसाधनसमये युवकशक्तिः अतिकठिनप्रसङ्गान् अनुभवति । कदाचित् अतीव दुःखान्विता अपि भवति । अश्रूणि चापि मुञ्चति । निराशतां न धारयति । अश्रुमार्गेण हृदयस्थं दुःखमेव निष्कासयति । पुनरपि कार्यारम्भः स्वीकृतकार्ये सफलतां प्राप्नोति । ततः आनन्दिता भवति सा । एतादृशेषु प्रसङ्गेषु युवकशक्त्याः अश्रूणि नाम समाजस्य अश्रूणि युवकशक्त्याः आनन्दः नाम समाजस्य एव आनन्दः ( वा हास्यं वा ) इत्यपि चित्रं दृश्यते ।

संस्कृतक्षेत्रे अपि बहवः युवकाः युवत्यः च सन्ति । एते संस्कृतस्य अभ्यासं कुर्वन्ति । संस्कृतभाषा परमा श्रेष्ठा भाषा । अत्र महत् पवित्र्यमपि । अद्यापि अस्याः भाषायाः महिमा सर्वत्र गीयते । अखिलविश्वस्य सर्वं ज्ञानं संपूर्णं विज्ञानं च ( अर्थात् शास्त्रं ) अस्यां भाषायामस्ति । ज्ञानविज्ञानयोः अक्षयः निधिरेव अत्र । सर्वासां देशविदेशभाषाणामेषा जननी अपि । तथा एका सूक्तिः अपि—

भारते संस्कृता भाषा कामधेनुः प्रकीर्तिता ।
जननी विश्वभाषाणां विज्ञानस्योपकारिणी ।।

एतादृश्याः भाषायाः अभ्यासं कृत्वा महतीं सर्वोच्चपदवीमपि एते युवकाः एताः युवत्यः च संप्राप्नुवन्ति । एतेषाम् एतासां च नवनिर्मितिः नवरचनाः चापि भवन्ति । निर्मितिः वा रचना वा सर्वोत्कृष्टा अपि मन्यते ।

परं च सर्वोच्चपदे अथवा सक्षमाधिकारिपदे च युवकाः युवत्यः वा संस्कृतक्षेत्रे नियुक्ताः न भवन्ति । सार्वजनिकसंस्कृतक्षेत्रे शासनाधीनसंस्कृतक्षेत्रे च एवमेव स्थितिः दृश्यते । पुरस्कारदानविषये अपि संस्कृतक्षेत्रे एवमेव चित्रं दृश्यते । पुरस्कारदानविषये शासकीयाः नियमाः अपि युवकयुवतीनां कृते नानुकूलाः । क्वचित् कुत्रचित् कदाचिच्च अनुकूलाः नियमाः स्युः अपि प्रत्यक्षं पुरस्कारदानसम्मतिसमये युवकयुवतीनाम् उपेक्षा एव साध्यते । युवकशक्त्याः महत्तां ज्ञात्वा अपि उपेक्षा क्रियते । प्रकाशकाः अपि एवमेव कुर्वन्ति । प्रकाशकाः अपि नात्र अपवादात्मकाः । कदाचिद् प्रकाशकानां व्यवसायिनी दृष्टिः स्यात् । येन मार्गेण लाभः अधिकः स एव व्यवसायिमार्गः । अतः एव युवकशक्तिनिर्मितसाहित्यरचनादीनां प्रकाशने प्रकाशकानामपि मन्दादरः एव दृश्यते । युवकानां युवतीनां च प्रतिभाशक्तिः अस्ति तथापि प्रकाशनाभावात् प्रकाशं नागच्छति ।

तथापि संस्कृतक्षेत्रे अद्यापि युवकशक्त्याः असन्तोषः नास्ति । बहवः युवकाः युवत्यः च संस्कृतक्षेत्रे संस्कृतकार्यरताः सन्ति । संस्कृतकार्यविषये एतेषां एतासां च उदासीनता नास्ति । प्रचारक्षेत्रे तु एते एताः चैव अग्रगण्याः । संस्कृतवर्गशिविरादिसंचालने

अत्र सहभागग्रहणे च एतेषामेव उपस्थितिः अनुभवपथमायाति।

एतेषां एतासां च युवकानां युवतीनां च संस्कृतक्षेत्रे असन्तोषस्फोटात् पूर्वमेव केचित् उपायाः प्रस्तुताः क्रियन्ते। एतेषाम् उपायानां विचारः अनिवार्यतया करणीयः तथा च कार्यनिर्वहणमपि—

( १ ) एका अकादमी गठिता करणीया युवकयुवतीनाम्। अस्याः अकादम्याः माध्यमेन प्रतिवर्षं युवकयुवतीनां साहित्यनिर्मितिरचनादीनां अधिकाधिककृतीनां च प्रकाशनमकादमीद्वारा भवतु।

( २ ) युवकयुवतीनां संस्कृतसाहित्यरचनाविषये प्रतिवर्षं विशिष्टसाहित्यगुणान् परीक्ष्य पञ्चदशपुरस्काराः देयाः।

( ३ ) युवकयुवतीनां संस्कृतक्षेत्रे अध्यापनप्राध्यापनादिकार्यं दृष्ट्वा सम्मानः करणीयः। विशेषतः विद्यालयमहाविद्यालयीयक्षेत्रतः अन्यक्षेत्रे ये कार्यं कुर्वन्ति तेषामग्रक्रमेण विचारः एतस्मिन् विषये करणीयः।

( ३ ) संस्कृतविषये अपि प्रतिवर्षं युवकयुवतीनाम् एकम् अखिलभारतीयम् अखिलवैश्विकं वा संस्कृतसम्मेलनम् आकारणीयम्।

( ४ ) संस्कृतक्षेत्रे युवकयुवतीनां विशिष्टयोगदानं दृष्ट्वा सम्मानः करणीयः प्रतिवर्षम्।

( ५ ) विदेशेषु यदा यदा विश्वसंस्कृतसम्मेलनं भवति तदा दशयुवप्रतिनिधयः अपि शासनेन प्रेषणीयाः।

( ६) देशविदेशेषु कस्य अपि विषयस्य सम्मेलनेषु संस्कृताध्येतॄणां युवकप्रतिनिधीनामपि समावेशः करणीयः।

( ७ ) आधुनिकज्ञानविज्ञानशास्त्राणां तथा च प्राचीनप्रणालीयज्ञानविज्ञानशास्त्राणां युवकविदूषां एकं अन्ताराष्ट्रियं सम्मेलनम् प्रतिवर्षम् आकारणीयम्।

( ८ ) सभा-सम्मेलन-पुरस्कार - सम्मान-प्रशस्तिपत्रादिविषये अपि युवकानां समावेशः सम्मानेन करणीयः।

( ९ ) समर्थकार्याधिकारिपदे युवकयुवतीनां नियुक्तिः करणीया।

( १० ) युवकयुवतीभिः अन्यैः किमपि देयं अथवा दीयते इति अपेक्षां परित्यज्य स्वेषां संगठनं रचनीयम् संस्कृतक्षेत्रे संगठितकार्यकरणार्थम्।

एवमेव अन्येऽपि विविधाः उपायाः स्युः एव। कार्यारम्भार्थम् एते पर्याप्ताः।

मान्यास्तत्रभवन्तो निवेद्यन्ते यत् विषयेऽस्मिन् दत्तादरा भूत्वाऽस्मानुगृह्णन्तु भगवत्याः सुरभारत्याश्च शुभाशिषां भाजनानि भवन्त्विति। □

---

## द्वन्द्वातीतस्य मुक्तिः

—पद्मनाभ त्रिपाठी

मुक्तिर्नाम भगवति परब्रह्मणि लयः। भोगाकांक्षी मुक्तिं न लभते। प्रति-जन्मनि तस्य असंख्या वासना जायते। वासनासिद्धये सः कर्म करोति। कानि पुण्यानि, कानि च पापानि। कर्म कदापि निष्फलं न भवति। पुण्यानि पापानि च कुर्वाणः प्राणी घोरे संसारे अवश्यं सुखदुःखानि लभते। पुण्यं कृतं चेत् दुःखम् अवश्यं भोक्तव्यम्। सुखदुःखानि भुञ्जानः सः वारंवारं जन्म लभते। सुखदुःखे, पापपुण्ये, शीतोष्णे मानापमानौ च एतेषां द्वन्द्वानां विनाशे एव मोक्षः संभवति। पवित्रे भागवते एतस्य प्रतिपादनं वर्तते।

"एकदा गोपनार्य्यः भगवतः श्रीकृष्णस्य वनस्थं यज्ञस्थलं गन्तुं प्रवृत्ताः। एतासु काचित् तत्र गन्तुं गुरुजनैः नानुमता। पुनः कदा तत्र गच्छेत् इति भिया स्तम्भे प्रतिबद्धा च। एतेन भृशं रोरुद्यमाना सा—

तदप्राप्तिमहादुःखविलीनाशेषपातका
तच्चिन्ताविपुलाह्लादक्षीणपुण्यचया तथा।
चिन्तयन्ती जगत्सूतिं परं ब्रह्मस्वरूपिणम्
निरुच्छ्वासतया गतिं गतान्या गोपकन्यका॥

तत्कर्तृकपापकर्मणः अशेषं दुःखं भगवद्विरहजनितमहादुःखेन विनष्टम्। पुनः सकलपुण्यकर्मणः फलं सुखं भगवच्चिन्ताजनितविपुलाह्लादेन समाप्तम्। ततः उच्छ्वासविरहा सा गोपकन्या समाधिस्था परमां गतिं प्राप्ता।

अतः पुण्यकर्मणः फलं सुखम्। न तु मुक्तिः पापकर्मणः फलं दुःखम्। एतयोर्विनाशे मुक्तिः। □

# एकदन्तः

[ पाठशालासु रङ्गावतरणयोग्या नाटिका ]

—प्रो० ई० पी० भरत पिषारटिः

## रङ्गः प्रथमः

(जवनिकापसरणे भार्गवरामः तपस्यन् रङ्गे प्रत्यक्षी भवति ।) नेपथ्यात्—

गङ्गा यस्य विभोर्विभाति शिरसि
श्रीला च चान्द्री कला,
कण्ठे तु प्रलयानलप्रतिभटं
चाभाति तीक्ष्णं विषम् ।
भस्मालिप्ततनौ चकास्ति करिण-
श्चर्मापि यस्येशितुः,
तं ध्यायाम्यहमन्तरन्तरहितं
पीडाहरं शङ्करम् ।

(पार्वतीपरमेश्वरौ प्रविशतः । शिवः परशुरामं निरीक्ष्य पार्वतीं प्रति)

शिवः—प्रिये ! पश्य तत्र मूर्त्तीभूतः प्रतीकार इव भार्गवः तपश्चरति ।

पार्वती—(विलोक्य) आहा ! अहं बिभेमि । स मातृघातकः किल ।

शिवः—न भेतव्यम् । स अस्मद्भक्तः अस्मद्प्रसादार्थं तपस्यति ।

(शिवः भार्गवस्य समीपं गत्वा तस्य मूर्ध्नि करपुटं विन्यस्य अनुगृह्णानः तिष्ठति । भार्गवः नयनमुन्मीलयति, परमशिव साद्भुतं वीक्षते, झटित्युत्थाय प्रणमति च । उत्थाय साञ्जलिः)

भार्गवः—

गङ्गा यस्य विभोर्विभाति शिरसि
श्रीला च चान्द्रीकला,
कण्ठे तु प्रलयानलप्रतिभटं
चाभाति तीक्ष्णं विषम् ।
भस्मालिप्ततनौ चकास्ति करिण-
श्चर्मापि यस्येशितुः,
तं वन्दे भगवन्तमन्तरहितं
पीडाहरम् शङ्करम् ।

शिवः—वत्स ! तव तपसा अहं प्रसन्नोऽस्मि । किं नाम तवाभिहितं ? कथय ।

भार्गवः—भगवन्, क्षत्रिया मम शत्रवः । ते मे पितृघातकाः । तेषामहमन्तकी भवितुमिच्छामि । मम जीविते नान्यत् किमपि लक्ष्यमस्ति । न किमपि कर्तव्यमस्ति । भगवन्, तमर्थं साधयितुमहं प्रार्थये ।

शिवः—वत्स, यदिष्टं तत् लभस्व । (पार्वतीं प्रति) प्रिये, गच्छ, अन्तर्गत्वा तं परशुमानय । (पार्वती पश्चात् निवृत्य नेपथ्यात् परशुमादाय प्रविशति) ।

पार्वती—अयं परशुः स्वीक्रियताम् । (शिवः तमादाय भार्गवाय यच्छति । भार्गवः तमादाय प्रणमति) ।

शिवः—(तं पाणिभ्यां उन्नमय्य) वत्स, लोकविजयी भव । त्वमनेन परशुना अभीष्टं लप्स्यसे । अतः परं त्वं परशुराम इति प्रथितो भविष्यसि । (शिवः पार्वती च तमनुगृह्य तिरोभवतः ।)

परशुरामः—(विजयाह्लादेन परशुं भ्रामयन्) अहं हनिष्यामि । अनेन परशुना पितृघातकानां कुलं नामावशेषं करिष्यामि । अखिलानपि क्षत्रियान् अन्येन परशुना खण्डशः कर्तिष्यामि । पितुः घातकान् समूलमुन्मूल्य भूमिं निःक्षत्रियां करोमि । रङ्गे इतस्ततः सावेगं परिक्रामन् क ते क्षत्रियाः, अरे आयात आयात । न यूयं भविष्यथ । (नेपथ्यात् क्षत्रियाणां आर्तरोदनं श्रूयते ।)

हन्त ! हताः स्मः । हन्त हताः स्मः । क धावामः ।

क धावामः । हा हा हो हो क धावामः………।

(परशुरामः नेपथ्याभिमुखं धावति ।)

("क ते शुनकाः क ते मशकाः" इत्यादि रामस्य उग्रगर्जनं, "हा वयं हताः स्मः, हू वयं हुताः स्मः" इति क्षत्रियाणां आर्तनादश्च नेपथ्यात् श्रूयते) ।

## ( जवनिका )

### रङ्गः द्वितीयः ।

( कैलासे परमशिवस्य प्रासादः । नेपथ्यात् )

गङ्गा यस्य विभोर्विभाति शिरसि
श्रोला च चान्द्री कला,
कण्ठे तु प्रलयानलप्रतिभटं
चाभाति तीक्ष्णं विषम् ।
भस्मालिप्ततनौ चकासितकरिण–
श्चर्मापि यस्येशितुः
तं वन्दे भगवन्तमन्तरहितं
पीडाहरं शङ्करम् ।

( जवनिका अपसरति । गणपतिः द्वारपालको भूत्वा द्वारि तिष्ठति । परशुरामः परशुं हस्ते चालयन् प्रविशति । )

परशु०—( आत्मगतम् ) मम परमगुरोः भगवतः शङ्करस्य पादं प्रणम्य बहुकालो व्यतीतः । भगवतः कृपया अनेन परशुना बहवः क्षत्रिया हताः । भूरियं निःक्षत्रिया जाता । अथ ब्राह्मणानां अधिवेशनकार्यक्रमारम्भात् पूर्वमेव गुरुपादं प्रणन्तुमिच्छामि । ( गणपतिमभिवीक्ष्य ) अहो कोऽयं मुखेन गजः तनुना मनुजस्तिष्ठति ? ( विचिन्त्य ) हां अवगतं, गणनायको मे गुरुपुत्रः । स मे आप्तमित्रं खलु । ननु तदन्तिकमेव गच्छामि । ( गणपतिमुपगच्छति ) ।

गणपतिः—( उत्थाय ) अहो पितृशिष्यो भार्गवः ! ( परशुराममाहूय ) आयाहि मित्रक, मोदकैः वयं रसनां विनोदयावः । आस्यतामत्रैव ।

परशु०—न मे समयोऽस्ति । गुरुपादं प्रणम्य शीघ्रमेव निवर्तनीयम् । भगवन्तमहं वन्दितुमिच्छामि ।

गणपतिः—नायमवसरः गुरुवन्दनस्य ।

परशु०—कुतः ?

गणपतिः—मम पितरौ भोजनानन्तरं अन्तर्गृहे विश्रामसुखमनुभवतः ।

परशु०—अनुभवतां यथेच्छम् । मम तु तयोः प्रणाम एव कार्यः ।

गणपतिः – अथापि नाधुना कोऽपि तत्र प्रवेष्टुमर्हति ।

परशु०—कुतः ?

गणपतिः—तत्र प्रवेशो निषिद्धः ।

परशु०—कुत एतत् ? प्रणतानां शिष्याणां गुरोः सान्निध्यं न कदापि निषिद्धम् । तेषां कृते स्थलकालयोः प्रश्नः नैव ( गणेशमगणयन् स अन्तः प्रवेष्टुं त्वरते ) ।

गणपतिः—( सक्रोधम् ) तिष्ठ तिष्ठ रे अन्तर्मा प्रविश ।

परशु० – यदि प्रविशेयम् ।

गणपतिः—तर्हि तव नामैव अवशिष्येत् ।

परशु०—मैवं जल्प ।

गण—यदि जल्पेयम् ।

परशु०—तर्हि तव नामापि नावशिष्येत् । (परशुरामः अन्तःप्रविशति । गणेशः परशुरामं वारयति ।)

परशु०—मुञ्च मां कुम्भिमुख कुम्भोदर !

गणपतिः—न मुञ्चामि । (गणेशः परशुरामस्य पादं गृहीत्वा भूमौ पातयति ।)

परशु०—(कोपात् गर्जन्) अरे तुन्दिल ! यदि न मुञ्चसि तर्हि अयं परशुः त्वां मोचयिष्यति ।

गणपतिः—अरे मातृघातक ! किमेतैः सारशून्यैर्वचनैः ?

परशु०—न केवलमहं मातृघातकः किन्तु गुरुपुत्रघातकश्च स्याम् । पश्य । (परशुना गणेशस्य दन्तं छिनत्ति । गणेशः उच्चैः आर्तं रोदिति । नेपथ्यात् शिवभूतानामार्त्तनादः श्रूयते । आहा अस्मन्नेता हतः । अस्मद्गणेशो मृतः । हा हा ही हो…। 

(आर्तनादं श्रुत्वा पार्वतीपरमेश्वरौ सम्भ्रान्तौ आगच्छतः। रक्तेन परिप्लुतं गणपतिं हस्ते गृहीत्वा पार्वती सगद्गदं रोदिति।) हा हतो मम वत्सः हा हा……।

(शिवः गणेशं परशुरामं च कृपया कोपेन च वीक्षते।)

गणपतिः—मातः मम दन्तः छिन्नः। मम दन्तो भिन्नः। पश्य मातः पश्य (इति क्रन्दति)।

पार्वती—किमेतद् वत्स, कथमेतद् वत्स।

गणपतिः—(परशुरामं निर्दिश्य) अयं पितृशिष्यः। स मम दन्तं परशुना छिनत्ति स्म भिनत्ति स्म। (करुणं रोदिति)।

पार्वती—हा मम वत्सो नष्टः। मम वत्सः प्रनष्टः (भूमौ पतति। द्रुतमेव उत्थाय सकोपम् विश्लथं कुन्तलभारं वामहस्तेन नियन्त्य ज्वलता नेत्रद्वयेन शिवमभिवीक्ष्य) आचार्यवर्य, शिष्यादधुना विशिष्टा गुरुदक्षिणा न किं लब्धा ? भवतः अयं वरिष्ठः शिष्यः। अथ कोप्यन्य आयुधो नोपदिष्टश्चेत् उपदिश्यताम्। अनुगृह्यताम्। तव प्रियशिष्यो वर्धताम्। मम वत्सो म्रियताम्। कस्य का नाम हानिः ?।

परशु०—(ससाध्वसं ससंभ्रमं च) क्षमस्व भगवन्! मया पापमाचरितम्। क्षमस्व मातः। (पार्वत्याः पादयोः प्रणमति। पार्वती गणपतिं अङ्के निधाय संवाहयति। शिवः जटायाः भस्म आदाय गणपतेः दन्तक्षते विकिरति। गणपतिः आश्वसिति।)

परशु०—(गणपतिमुपगम्य) भ्रातः, अकस्मात् क्रोधेन मया योऽपराधः कृतः तं क्षमस्व। (गणेशमाश्लिष्यति)।

गणपतिः—भ्रातः, अयं ममैवापराधः यतो मया त्वं निवारितः। अहं तवाभिलाषे विघ्नकारी जातः। इतः परमहं सर्वेषामप्यभिलाषाणां विघ्नहन्ता भविष्यामि। (गणपतिः परशुराममाश्लिष्यति पार्वती परमेश्वरौ सहर्षाद्भुतं पश्यतः)।

शिवः—(गणपतिं विलोक्य सहर्षम्)।

इष्टे जनानां चरणाश्रितानां
विघ्नानपाकर्तुमयं हि वत्सः।
अतः शुभामृच्छतु भूर्भुवः स्वः
चिराय विघ्नेश्वर इत्यभिख्याम्॥

(परशुराममभिवीक्ष्य सानुग्रहम्)

शिष्योत्तमो मे यदयं, ततोऽसौ
विख्यातकीर्तिर्भुनेऽत्र भूयात्।
विवृद्धसत्त्वः परशुप्रकाण्ड-
विशीर्णशत्रुप्रकरप्रतापः॥

(जवनिका)

---

( ११ पृष्ठस्य शेषांशः )

कथमस्य व्यसनस्य प्रतीकारः कर्त्तव्यः इति विषये काचित् उपाययोजना कर्तुं शक्या। बहुषु शासकीयरुग्णालयेषु एको विभागः एतद्व्यसनग्रस्तानां रुग्णानां कृते स्थापितोऽस्ति। यद्यपि मादकपदार्थसेवनम् अथवा तत्सेवनव्यसनं विधिदृष्ट्या अपराधः तथापि एतद्व्यसनग्रस्ता न कठोरेण चक्षुषा अवलोकनीयाः अपि तु मृदुनैव। एतेषां पुनर्वसनं नितान्तं आवश्यकम्। बहवः समाजधुरीणाः बह्व्यश्च सामाजिक्यः संस्थाः एतद्व्यसनग्रस्तानां पुनर्वसनार्थं प्रयत्नशीलाः इति निःसंशयं अभिनन्दनार्हम्। किन्तु आधिम् अमुम्, समूलम् उन्मूलयितुं, जनजागरणं सार्वत्रिकं, नितराम् आवश्यकम्। यतः, देशस्य अस्य, युववर्गः एव, एतादृशे व्यसनगर्ते एवं पतितः स्यात्, तर्हि देशस्य अस्य भविष्यत्कालो घनान्धकारमयः एव इत्यत्र नास्ति संशयलेशोऽपि। केषाञ्चित् पाण्डितानां तु मतेन काश्चन परकीयाः शक्तयः एव, प्रत्यहं सितपक्ष—सुधांशुवत् विवर्धमानां अस्मद्भारतराष्ट्रप्रतिष्ठाम् असहमानाः, अस्माकं तेजोभङ्गाय, येन केन प्रकारेण प्रयतमानाः, तत्तेजोरूपप्रतिकृतिभूतम् अस्माकं युववर्गं व्यसनकन्दरे अस्मिन्, बुद्ध्यैव, हेतुतः एव, प्रक्षेप्तुम् अभिवाञ्छन्ति। अतः एव, विषये अस्मिन्, सार्वत्रिकं लोकशिक्षणं, सार्वत्रिकं जनजागरणम् एव प्रभावशाली उपायः।

इति शम्।

# "खेती है मेरा काम"



गंगाराम को अपने व्यवसाय पर गर्व है।

ऐसा व्यवसाय जिससे देश को भोजन मिलता है।

ऐसा व्यवसाय जिससे उसे अच्छी आमदनी होती है।

वे दिन लद गये जब खेती एक स्थिर और घाटे का व्यवसाय था

स्वतंत्र भारत में किसानों का आवश्यकताओं की ओर ध्यान दिया गया ताकि उन्हें बढ़िया बीज, सिंचाई सुविधाएं, खाद, कीटनाशक दवाएं – ये सभी रियायती दरों पर मुहैया करायी जा सकें।

ऐसी व्यवस्था की गई जिससे उन्हें समय पर ऋण और उनके उत्पादों का उचित मूल्य मिल सके। किसान इन सुविधाओं का पूरा लाभ उठाते हैं।

कड़ी मेहनत और प्रौद्योगिकी दोनों ही हरितक्रांति के अग्रदूत हैं। फलस्वरूप, आज भारत का खाद्यान्न उत्पादन 17 करोड़ टन तक पहुंच गया है – जो 1947 के कुल उत्पादन से 12 करोड़ टन अधिक है।

## हमें प्रगति पर गर्व है

davp 89/275

# वृक्षस्तुतिः

—त्रिपाठी यमुनेश चातकः
प्रवक्ता—दर्शनविभागे
सो० वे० म० बि० नरवर नरोरा, बुलन्दशहर, उ० प्रदेश

वृक्षं विरोपयति यो हि जनोऽत्र लोके
तस्य स्तुतौ कथय किं कविते ब्रवीषि ?
आत्मानमेव खलु भूजननीप्रसूतं
कृत्वामृतिं भजति तेऽस्ति किमुत्तरं सः ॥१॥
न क्लेदयन्त्यमितशक्तियुतं तमापो
नैवानिलश्च परिशोषयितुं समर्थः ।
सूर्योऽपि रश्मिसुमनोभिरहो सहर्षं
संस्तौति वृक्षपुरुषं तमितीह मन्ये ॥२॥
मूलान्यधः प्रविततानि दृढानि कृत्वा
शाखाः प्रसार्य सबलाश्च चतुर्षु दिक्षु ।
पत्राणि चैव चपलानि नियोज्य देहे
कस्यात्र वृक्षपुरुषो न सदाश्रयोऽस्ति ॥३॥
रक्तादितत्त्वरचिताङ्गसदङ्गनायां
संजायते सुतनयस्तु नरस्य योऽत्र ।
सोऽप्याचरत्यमरतां न तथा यथासौ
वृक्षो नरेण रहितोऽपि मृदंशजातः ॥४॥
वृक्षस्य कोऽत्र सदृशोऽस्ति समग्रलोके
यो निर्जनेऽपि विपिनेऽपि सदा प्रसन्नः ।
नापेक्षते च सरसं स्तुतिकान्तकाव्यं
स्वादुस्त्वरं कथय कामयते न चैव ॥५॥
जातास्तु सन्ति बहवोऽत्र सचेतना वै
येषां वृथात्वमपि वक्तुमहं न शक्तः ।
आमूलतः परमतीवमहत्त्वपूर्णश्
चेदस्ति कोऽपि स तु भूतलभाग्यवृक्षः ॥६॥
वृक्षो भवेदिह न चेदखिले नृलोके
को दर्शयेदमृततुल्यहरित्सुवर्णम् ।
कः प्रेरयेद्रसविपूरितमेघखण्डं
कः शिक्षयेज्जगति पूर्णपरोपकारम् ॥७॥

निर्माय वासभवनानि बहूनि भूमौ
मृत्प्रस्तरादिबहुमूल्यपदार्थसंघैः ।
सानन्दमेव निवसन्ति नराः परन्तु
प्रीतिस्तु वृक्षसुखदाश्रयसंश्रृतैव ॥८॥
स्वातन्त्र्यमेव सततं हि समीहते यो
जानाति सर्वमिव यश्च निजं शरीरम् ।
तं पक्षिसंघमपि चाद्रियते नितान्तं
प्रेम्णा निबध्य दृढमत्र तु सोऽस्ति वृक्षः ॥९॥
तीव्रातपं हि सहते निजमुन्नमय्य
प्रोच्चैः शिरः सततमेव विनैव खेदम् ।
वेगं रुणद्धि च तथैव विरुद्धवायोर्
योऽसौ न कश्चिदपरस्तु स एव वृक्षः ॥१०॥
पत्राणि चैव कुसुमानि फलानि दारून्
सर्वाणि मानवहिताय समर्प्यते यः ।
श्लाघ्यः कथं न भुवनेऽस्ति नितान्तरम्यः
श्रीमद्दधीचिरिव सोऽमृतकीर्तिवृक्षः ॥११॥
रामादिभूपतिवरा अपि दुर्दिनेषु
प्राप्तप्रकामशरणाः व्यचरन् तलेषु ।
गेयः कथं भुवि तथा न विरोपनीयः
सर्वत्र सः शरणदः सुखदोऽत्र वृक्षः ॥१२॥
रे मानवाः किमपि चिन्तयत स्वचित्ते
त्वत्कार्यकम्पिततनुः कथमत्र वृक्षः ।
पुत्रादपि प्रथयति प्रचुर यशो यत्
संरक्ष्यते सततमेव न किं प्रियः सः ॥१३॥
ग्रामोऽस्तु वास्तु नगरं न भवेन् मनोज्ञा
वृक्षावली यदि विचुम्बितचारुसीमा ।
काचिद् भविष्यति तदा रमणीयता किं
शुद्धश्च सौरभमयः सरसः समीरः ॥१४॥

वर्षारम्भसान्नजननी धरती विशाला
सम्प्लाविता भवति यच्च मृदंशशून्या ।
तद्वृक्ष एव विरुणद्धि महद्विनाशं
स्वीयेन सत्समुदयेन महाबलिष्ठः ॥१५॥
प्रोच्चाद्रिसून्नततत्वेषु समेषु वा स्यात्
संजायते सदृशमेव सदैव वृक्षः ।
जानासि रे मनुज शीतलशान्तसौम्य
च्छायः करोति वसुधापरिरक्षणञ्च ॥१६॥
आध्यात्मिकस्तु कथितोऽस्ति बहुत्र लाभो
वेदादिषु प्रचुरभारतवाङ्मयेषु ।
अद्यापि किन्त्वकथयन् जगदीशचन्द्रो
वृक्षः श्वसित्यखिललोकसमानधर्मा ॥१७॥
वृक्षो भवेद् यदि न मानव ! मर्त्यलोके
कीरः करिष्यति हि कुत्र निजं निवासम् ।
कुत्र स्थितश्च मृदु गायति कोकिलोऽपि
प्रेयः प्रचोदयति चञ्चलचित्तकाकः ॥१८॥
निम्बोऽस्तु सिंसपतरुर्वटपिप्पलौ वाऽ-
शोकः प्रियालपनसाम्रमधूकवृक्षाः ।
मालूरचीडबकुलाद्रितदेवदारुः
सर्वेऽत्र मानवजगद्धितसाधनाय ॥१९॥
नारोपयन्ति किल येऽत्र तरून् धरायां
ते प्राप्नुवन्ति तनयं सनयं न लोके ।
ये कर्त्तयन्ति मृतपुत्रविपद्गतास्ते
रक्षन्ति ये न च भवन्ति तु ते ह्यनाथाः ॥२०॥
तस्माद्राष्ट्रसमृद्धयेऽखिलजगत्सौख्यादिकप्राप्तये
नानातापशमप्रशान्तहृदयस्नेहस्य सम्प्रीतये ।
सर्वोपद्रवशान्तयेऽतिसहजाः स्वर्गाय सन्मुक्तये
वृक्षाः सर्वधरातलेषु महिता आरोपणीयाः सदा ॥२१॥

---

# हासविलासः

## अद्य किम् ?

**—चक्रधारी शास्त्री**

सम्पादकः—"कल्पद्रुम" हिमाचलप्रदेशः

सभ्याचारः सदाचारः मद्यपानेन लुण्ठितः
द्यूतेन लुण्ठिताः पूर्वं पाण्डवाः वनवासिनः ।
अद्य द्यूतं महत्पुण्यं लाटरीरूपसंज्ञितम्
गृहे गृहे प्रचलति ग्रामे ग्रामे जने जने ।
मन्त्रिणः सांसदाः विश्वे ख्याताः कूराः विचक्षणाः
भ्रष्टाचारस्य गर्त्ते पतिताः न पुनरुत्थिताः ।
टावरः पदनिर्भ्रष्टः जापाने मन्त्रिमण्डलम्
पदात् भ्रष्टः स मार्कोसः मृत्युशय्यामुपागतः ।
स्थानभ्रष्टाः न शोभन्ते दन्ताः केशाः नखाः नराः
व्यापारः भ्रष्टतां यातः सर्वकाराः प्रदूषिताः ।
शासनं भ्रष्टतां यातः न्याय्यं च भ्रष्टायते—
विपण्या मामिषं भ्रष्टं पशुमांसेन मिश्रितम् ।
सुराऽसुराणामापेयं तस्यामप्यस्ति भ्रष्टता
दुग्धं भ्रष्टं घृतं भ्रष्टं तक्रं शक्रस्य दुर्लभम् ।
दध्यन्नं विषसंयुक्तं सर्वं चोर्वरायते
सौवर्णं भूषणं भ्रष्टं रौप्यं रोदिति भूरिशः ।
पात्राणि लोहमिश्राणि क्रीडन्त्यद्य गृहे गृहे
धातवोऽधातवो जाताः माणिक्यं मरणायते ।
खाद्यान्नान्यपि भ्रष्टानि जीवनं भुवनं वनम्
अमृतं स्वादुसंजीवी विषपूर्णमिहात्र च ।
संगीतं भारतीयं यच्छास्त्रीयं स्वरतालयुत्
पाश्चात्यैर्वादनैर्बद्धं रोदित्यद्य दिने दिने ।
हा-हा-हं-हो - दुरालापं-दुःस्वरं कर्णछेदनम्
गायन्त्यद्य-लता-चोषा-वेगमी सा गमे रता ।
तस्कराणां यः सर्वः विषभैषज्यविक्रमः
सीमासु परिद्रष्टव्यः जलस्थलयुतासु च ।
भङ्गानां भेषजां सारं तत्काले बहुस्फूर्त्तिदम्
युवासेव्यं-च सुलभं मूर्च्छाऽशान्तिप्रदं महत् ।
सन्धिच्छेदः भवेद्भित्तौ वसयानस्य लुण्ठनम्
यूनामद्य क्रिया नित्या भौतिकी पारमार्थिकी ।
कन्योपहासः निर्व्रीडा चौर्य्यं चैवास्ति नग्नता
मूढालापः-वृक्षालापः-सभ्ये जगति निष्ठितः ।
दादा कविरिहास्त्यद्य लेखने शोचने रतः
किं लिखामि—? क गच्छामि ? को वेदानुद्धरिष्यति ।

# मिलनसेतुः

(गताङ्कानुवर्तते)

## द्वितीयोऽङ्कः

### प्रथमं दृश्यम्

(कलिकातनगर्याः कस्यापि गृहस्य मध्ये जया; माधुरी नाम्न्याः किशोर्याः द्रुतप्रवेशः)

माधुरी—जये, जयाभगिनि, इदानीमपि न सज्जासि ? किं चिरेणैव नोक्तं मया यदद्य बोटानिक्यालोद्यानं गन्तव्यम् ?

जया—माधुरि, त्वं भ्रात्रा सह गच्छ। अहं तु गृहे एव स्थातुमिच्छामि । भ्रमणं मह्यं न रोचते ।

माधुरी—न खलु। पितृस्वस्रा तव देहमनःस्वास्थ्यलाभायैव त्वमत्र प्रेषिता । त्वं तु प्रतिदिनं परिक्षीयमाणा पर्युत्सुका निरुत्साहा अन्यविधैव लक्ष्यसे । कथमेवमौदासीन्यम् ? न यास्यसि चेदहमपि न गमिष्यामि ।

जया—मैवम् । यास्याम्यहम् । अलं मामन्यथा चिन्तयित्वा । यास्यामि पश्चात्, सम्प्रति काञ्चित् कथां, श्रावय ।

माधुरी—कीदृशीं कथां श्रावयामि ? कां वा तुभ्यं रोचिष्यते । अहं तव मानसिकीं दशां वीक्ष्य नितरां शंकितास्मि । अहं तव मातरं विज्ञापयितुमिच्छामि 'न जाने जया कथं खिन्नेव लक्ष्यते । असमर्थाहं तां प्रवर्तयितुं हास्यकौतुकभ्रमणादिकर्मसु । एवमस्यास्तादस्थ्यं दृष्ट्वास्माकं मनांस्यपि दूयन्ते ।

जया—मा खलु, मा खलु मातरमेवं लिखित्वा । यदेव युष्मभ्यं रोचते तत् सर्वं करिष्यामि । किन्त्वलमद्योद्यानभ्रमणेन । अन्येद्युरेव गच्छावः । अद्य तव सख्याः शुक्लायाः गृहं भ्रमणाय यावः । तां मुग्धामासेचनकदर्शनां बालां प्रति मे मन आकृष्टम् ।

माधुरी—सुष्ठूक्तम् । श्रुतमद्य महाविद्यालयस्थया मया सा मातृष्वसृगृहात् सद्य प्रत्यागतेति । कतिपय दिवसपश्चात् सा परीक्षायै प्रस्तुतीभविष्यति । अतः युक्तमिदानीमेव गन्तुम् ।

जया—का सा परीक्षा ?

शुक्ला—'एम० ए०' इति नामपरीक्षाया अन्तिमपरीक्षा ।

जया—(साश्चर्यम्) कथं सा एम्० ए० परीक्षायामवतरिष्यति । न हि साधिकवयाः ।

माधुरी—ततः किम् ? न जाने कथं त्वया अध्ययनं परित्यक्तम् । न चेत्त्वयापि वर्षैकप्रागेव एम्० ए० परीक्षोत्तरणं सम्भवेत् ।

जया—(दीर्घं निःश्वस्य) धिगध्ययनं मम ।

माधुरी—(अपवार्य) अयि परिदेवते एषा अनेन प्रसङ्गेण । न जाने किमेतामुत्कलयति, किं वास्याः सन्तापकारणम् । भवतु, अन्यतः क्षिपामि । जये, झटिति उत्तिष्ठ । गन्तव्यं शुक्लानिकेतनम् ।

जया—(एवमेव)

(द्वे निष्क्रान्ते)

## तृतीयोऽङ्कः

### (प्रथमं दृश्यम्)

(शुक्लायाः कक्षः, तत्रासनस्था जयाशुक्लामधुर्यः)

शुक्ला—(माधुरीं प्रति) अस्ति मे महती प्रीतिर्यत् न केवलं त्वं मत्सकाश आगता जयाभगिन्यपि त्वयानीता । अहमत्र भवतीं त्रिवर्षपूर्वं कन्यावस्थायामेवाद्राक्षम् । किन्तु तत्रभवत्यास्तथाविधं लावण्यं कुत्रान्तर्हितम् ? अस्यां हि—

सौन्दर्यसुषमा यासीच्छारदी कौमुदी यथा ।
निष्प्रभाचन्द्रिका साद्य पौषरात्रि मुखे यथा ॥

कथमियं सम्प्रति शिशिरमथिता पद्मिनीव दृश्यते ?

माधुरी—(अपवार्य) दौर्मनस्यग्रस्ताया एतस्याः मानसिकविषादविषये जनसमक्षमालोचनां परिहर्तु-

मिच्छत्यामपि मयि स एव प्रसङ्गोऽनयारब्धः भवत्वहं प्रसंगान्तरमवतारयामि। (प्रकाशं) कच्चित् कालमनया शारीरिकस्वास्थ्यं नानुभूयते। दैहिकस्वास्थ्ये क्षुण्णे रूपलावण्याभ्यामन्तर्हीयते एव। कथय तव मातृस्वसृगृहस्य कुशलम्। का वार्ता ते मातृस्वसृपुत्र्याः सुनन्दायाः ?

शुक्ला—किं तस्याः कुशलम् ? तस्याः कृते भृशमुद्विग्नास्मि।

माधुरी—कथम् ?

शुक्ला—मातृष्वस्रा कन्यायाः विवाहार्थं यत्यते किन्तु सुनन्दया सा पुनः पुनः निवारिता। मातृष्वसा मामाहूय एकदोवाच "वत्से शुक्ले, सुनन्दायाः विवाहो मे चरमाभिलाषः। अहं तु तां स्वमतं ग्राहयितुमसमर्था। अतोऽहं त्वां साहाय्यं याचे।"

माधुरी—ततस्ततः ? भृशं मे कुतूहलं वर्धते सुनन्दावृत्तान्तश्रवणे। कथय किं पुनः कृतं त्वया ? जयाभगिनीं श्रावयितुं नास्ति चेदप्रवृत्तिस्तर्हि कथय।

शुक्ला—न हि, त्वं मम प्रियसखी। जयाभगिनी ममापि भगिनी। कः पुनः निषेधस्तस्याः श्रवणे ? एकदाहं सुनन्दामप्राक्षं "सुनन्दाभगिनि, कथं मात्रिच्छामवधीर्य एकापत्यां तां दुःखयसि, स्वजीवनमपि आयासितं दुर्वहं च करोषि ? सुनन्दयोत्तरितं "यदि जीवनं स्वयमेव दुर्वहं भवेत् तर्हि का पुनस्तस्य दुर्वहीकरणशङ्का ?"

मयोक्तं—"रहस्यं नास्ति चेत्तर्हि द्वितीयहृदयां शुक्लां कथयित्वा तव मनोव्यथां, तां समदुःखभागिनीं कुरु, तथा कृत्वा च लघय आत्मनो दुःखभारम्।"

तयोक्तं—"नास्ति रहस्यं, किन्तु मम सन्तापकारणं श्रुत्वा कथमात्मानमुद्वेजयितुमिच्छसि ?"

मयोक्तं—"मैवम्। अस्ति चेन्ममोपरि तव स्नेहस्तर्हि कथय आत्मीयां कथाम्।"

तयोक्तं—"शृणु, यदि ते कुतूहलम्। मत्तुल्या मन्दभाग्या नास्ति काचिद् भूतले। मम हृदयं पूर्वमेव कस्मैचिन्महानुभावाय दत्तम्। कथमहं मात्रिच्छयापरं वृणोमि ?"

मया सहर्षमुक्तं—"तर्हि कथं न निवेदयसि स्वमातरम् ? वद, वद कः स भाग्यवान् यत् कृते मम तपस्विनी भगिनी हरहेतोः गौरीवत् 'भावैकरसं हृदयं' धत्ते। मा एषा हिमालयशिखरे गत्वा तपसि प्रवृत्ताभूदिति आराधयामि गत्वा मातृस्वसारम्।

तयोक्तं—अलं कौतुकेन। जानाति माता सर्वम्। तस्य सुव्रताभिधानस्य रूपगुणविद्याशीलवित्तादिभिः परमसन्तुष्टया मात्रा प्रथममेव स जामातृत्वेन वृतः, किन्तु स परिणीतः अतः विवाहस्य असम्भाव्यत्वात् सा अधुनान्यस्यान्वेषणं करोति।"

मयोक्तं—"हा कथमस्थाने एव त्वया स्नेहाधानं कृतम् ? अथवा विप्रलब्धासि स्तस्य कपटाचरणेन ?"

तया प्रत्युक्तं—उदारचेतसा स्वार्थनिःस्पृहेन महानुभावेन तेन न किञ्चिदपि गोपायितम्। विवाहितः स सत्यं, किन्तु एतेन तथ्येन सह सर्वैरेतदविज्ञातमासीद् यत् स विवाहो नाममात्रमेव सम्पन्नः। विवाहान्मासानन्तरमेव नववधूः बी० ए० परीक्षायै स्वात्मानं प्रस्तुतीकरणाय पितृगृहं गता। कियत्कालपश्चात् श्वशुरे गुरुतरपीडिते सति सा श्वशुरालय आहूता। किन्त्वेवं प्रार्थ्यमानापि या म्रियमाणं श्वशुरं द्रष्टुं मनागपि नायाता। अतः क्रुद्धेन पितृव्यश्वशुरेण सा 'स्नुषे'ति अस्वीकृता, निषिद्धा सा गृहप्रवेशो तया सह सर्वैः सम्बन्धश्छिन्न इति उद्घोषितः (वामतो दृष्ट्वा सहसोत्थाय) माधुरि, माधुरि किमेतत् ? धारयैनाम्।

माधुरी—(आसनादुत्थाय पतनोन्मुखिनीं जयां दृष्ट्वा द्रुतमुपसृत्य) जयाभगिनि, जयाभगिनि, (स्वगत) किं मोहमुपगता ? किमिदानीं क्रियते ? शुक्ले, जलमानय, तालवृन्तं देहि।

शुक्ला—(कक्षकोणस्थात् भव्यासनात् तालवृन्तव्यजनमानीय) गृहाणैतत्तालवृन्तम्। (माधुरी तालवृन्तं गृहीत्वा बीजयति, शुक्ला मुखे जलं निक्षिपति)।

जया—(चक्षुषी उन्मील्य) माधुरि, न जाने कथं परितः अन्धं तमो दृष्टं शिरश्च घूर्णितम्। मत्कृते

भृशं क्लेशमापन्ना वराकी शुक्ला त्वमपि। भृशं लज्जितास्मि अधुना स्वस्थास्मि, एहि गृहं यावः।

शुक्ला—मैवम्। कथं गमिष्यसि? अतिश्रान्तासि। तिष्ठ कञ्चित् कालम्।

जया—न हि भगिनि! न मे मूर्च्छासीद् घोरतरा। मूर्च्छाधिकारे सति गृहाद्बहिः स्थितायां मयि पुनरेवं भविष्यति। अतः युक्तं हि प्रत्यावर्तनमधुना। शुक्ले आपृच्छे त्वाम्।

शुक्ला—यद्येवं किं पुनरुच्यते? माधुरि, युवयोः कृते शकटं द्वारि अपेक्षते। किमेषा शक्तास्ति तावत्-पथातिक्रमणे?

जया—अलं चिन्तया। शक्तास्मि।

माधुरी—यद्येवं तर्ह्येहि।

शुक्ला—यद्भवतु, युवाभ्यामेवं गमनं मह्यं न रोचते, यायश्चेदहमपि गमिष्यामि युवाभ्याम्। एनां स्वगृहस्थां स्वस्थां च दृष्ट्वा प्रत्यागमिष्यामि।

(सर्वाः निष्क्रान्ताः)

(क्रमशः)

---

## उद्यमः

—जगन्नाथः, पाण्डीचेरी

कदाचित् रबर्टब्रूस नामकः कश्चिद् राजा आसीत्। सः स्कटलाण्डदेशं शास्ति स्म। एकदा सः राज्यविस्ताराय समीपस्थं जनपदं जेतुं निर्गतः। तत्रान्तरे तस्य कश्चित् शत्रुः तस्य राजधानीं स्ववशम् अनयत्। अथ रबर्टब्रूसः प्रतिनिवृत्तः स्वनगरं शत्रुभिः अवरुद्धम् अपश्यत्। शत्रुसैनिकाः तं दृष्ट्वा निग्रहीतुम् अधावन्। परं सः कस्यचिद् विश्वासपात्रसेवकस्य सहायेन कथम् अपि अश्वम् आरुह्य पलायितः, सुदूरं वनम् च गत्वा कामपि गुहाम् आश्रयत्। अतीव व्याकुलः, निराशः च सः स्वप्राणान् अपि त्यक्तुं निश्चयम् अकरोत्।

ततः गुहायाम् कस्मिन् चित् कोणे एका लूता तस्य दृष्टिगोचरा भवति। सः पश्यति यत् सा जालनिर्माणे प्रवृत्ता। परन्तु वारं वारं तस्याः तन्तुभङ्गः भवति, सा च भूमौ निपतति। तथापि पुनः शिलाशिखरम् आरुह्य निर्माणकार्ये पुनः प्रारभते। तथैव पुनः तन्तुभङ्गेन सा स्वयम् अपि पुनः पुनः पतति। तदपि उत्साहं न त्यजति। भूयः भूयः शिलाशिखरम् आरुह्य तन्तुनिर्माणे प्रवर्तते। अन्ते च सा स्वकार्ये सफला भवति।

अनेन दृश्येन प्रभावितः सः मनसि अकरोत्—अहो उत्साहः अस्याः लूतायाः क्षुद्रा अपि इयं निरन्तर-प्रयासेन जालं निर्मातुं चेष्टते। पुनः पुनः पतनं विफलतां च नैव गणयति। उत्साहं धैर्यं च न त्यजति। इयं स्वकार्येण मां उपहसति इव। हन्त, एकाकिनी अपि एषा स्वकार्ये सफलं कर्तुं यत्नशीला। अहं सेनासहायः अपि एकेन एव पराजयेन हतोत्साहः संजातः। स्वं शत्रुं जेतुम् एकवारं अपि यत्नं न कृतवान्। लज्जास्पदं मम चेष्टितम्। कथं नु उद्यमं विना मनोरथः सिद्ध्येत्?

एवं विचार्य सः युद्धाय उद्यतः अभवत्; पराक्रमेण च निजराजधानीं शत्रोः हस्तात् अमोचयत्।

सारः—

उद्यमेन च धैर्येण कार्यसिद्धिर्भवेद् ध्रुवम्।
लूतया प्रेरितो ह्येवं रबर्टब्रूसोऽजयद् रिपुम्॥१॥
लूतां जालविनिर्माणे व्यग्रामुत्साहपूर्वकम्।
अनुहृत्य हृतं राज्यं रबर्टब्रूसः स्वमाप्तवान्॥२॥
प्रयासेन तरेत् सिन्धुं लङ्घतां च गिरिं पुमान्।
सञ्चरच्-चन्द्रलोकेऽपि नास्त्यसाध्यं प्रयासिनाम्॥३॥
उद्यमेन च धैर्येण किन्न कुर्वीत मानवः।
गौरीशङ्करमारोहेत् सन्तरेत् सुमहार्णवम्॥४॥
उपग्रहं च निर्माय वह्निबाणप्रचालितम्।
स्वर्गेऽपि सञ्चरेत् स्वैरं स्पर्धताम् सृष्टिकारिणा॥५॥

□

# रजोमहोत्सवः

—केशवचन्द्रदाशः, पुरी

दिनपूर्णं तापः। निदाघः व्याघ्र इव। मध्यांशश्च दिनस्य सारांशः। संध्या तु सुन्दरी। पूर्णफला इदानीम् आम्रमञ्जरी। बिल्वं प्रपाणकीयम्। मल्ली वल्लीतल्पा। यामिनी नग्नकामिनी। निशीथतारका शीतलस्नेहिनी। रजोविराजः समयः। महोत्सव आगतप्रायः।

संध्यास्नानं विधाय नलिनी पल्वलत उत्तिष्ठते। क्षीणतमसि सहसा अदृश्यत शकटः। नलिनी पुलकिता। महोत्सवम् अभिलक्ष्य अद्य प्रथमवारं गृहम् आयाति रजनी। रजनीयं बाल्यसखी। कैशोरे सा मन्त्रणाप्रिया। यौवनस्य प्रथमसोपाने सा परगृहवासिनी। तदनु तस्याः साक्षात्कारो नास्ति। अतः नलिनी इदानीम् उत्सुका—'सा मनःपूर्णं ताम् आलिङ्गिष्यति'।

प्रतिनिमेषं पृथिवी नवीना। अद्य सा रजोराजेश्वरी। अतः अभिरूपा। अभिजातकल्पनायां गौरवमयी। वरेण्या सा महोत्सवप्रिया। अतः लोकानुरागाय निजदर्शिनी।

अद्य रजनीपित्रालये स्त्रीणां कोलाहलः। सकलमुखे परिपृच्छा—'कीदृशं वर्तसे ? पतिः कीदृशः ? कथं च श्वश्रूव्यवहारः ? अन्ये सर्वे कुशलिनो वा ? एतत् सर्वम् उपवर्ण्य रजनी उपसंहरति—'अन्यद् अन्यदा'।

तद्दिने नलिनी प्रत्यागता। रजनी निजदर्शनं नेष्टवती। सा इदानीं क्लान्ता। आलापस्य नायम् अवसर इति तस्या माता सर्वान् निषिद्धवती। नलिनी विषण्णा। मनसि तस्या नाना कल्पना आसीत्—"इयं वकुलच्छाया। अत्र बहुवारं ताम् आलिङ्ग्य नलिनी कालं यापितवती। अत्र केलिः········अत्र विलापः····अत्र च सकलमनःकथा········इहैव सर्वम् अङ्कुरितम्। अद्य स्थानमिदं विधुरम्। अत्र स्मृति पुनः नवीकर्तुं सा ताम् आकारयिष्यत्। किं तु········!!

अद्य रजोमहोत्सवः। दोलायते दोलिः। वृक्षः वृक्षं स्पृशति। शाखा शाखाम् आलिङ्गति। प्रतिपर्णं रमते मनः। बालो विलासी। किशोरः कौशली। किशोरी रासेश्वरी। अन्येषां विषये कथा वृथा।

नलिनी सुवेशा। नववसने सा यथा प्रगल्भा कुमुदिनी। सखीवात्सल्ये सातिशयं चञ्चला। सानन्दं सा रजनीम् उपसृतवती। पूर्वभावं मानसम् आनीय अवदत्।

—रजनि····! किं मां विस्मृतवती ?

रजनी उदासीनतया उपेक्षितवती।

—रजनि ! एहि नु ! अद्य रजोमहः। खेलिष्यामः।

रजनीमाता सहसा निर्गम्य अवारयत्।

—नहि। न सा अधुना यातुं शक्नोति।

—किमर्थम्····?

—युष्माभिः सह कः तस्याः सम्पर्कः ? सा अद्यत्वे अभिजातस्य वधूः। परस्य गृहिणी। तस्या मर्यादा भिन्ना।

—मर्यादा····?

अभिजातः···मर्यादा····इति अनुरणयन्ती नलिनी प्रत्यागता।

वकुलच्छायायां दोलिः दोलायते। सा सत्वरमागम्य तत्र विचलितभावेन विलपितवती। लोतकै नयनम् अरुणायितम्।

उद्यापित उत्सवः।

अपरदिने ग्रामात् शकटो निर्गतः। रजनी तस्मिन् श्वश्रूगृहं प्रतिष्ठते। अपराह्ण वेला। वकुलमूले प्रतीक्षते नलिनी—'अवश्यम् अद्य रजनी आलपिष्यति'।

परं तु शकटः अतिक्रान्तः। नलिनीकपोले पुनः लोतकं तरलायितम्। अग्रे केवलं रजोमहः····केवलं धूलिः····धूसरा दिक्····। वकुलच्छायां दीर्घतरा। धूलिवायुः अपसृतः। तथापि निदाघमार्गे एका लघुधूलिघूर्णिः आवर्तप्रणयिनी आसीत्। ☐

# भारतस्य भाग्यविधाता

—पं० गुलाम दस्तगीर विराजदारः

भारतस्य ननु भाग्यविधाता
पण्डित-नेहरु- जवाहरः सः ।
शान्तिदूतश्च संयमशीलः
धीरोदात्तश्च सत्यवादी ॥१॥

"पण्डा यस्य च पण्डितो हि सः
योऽपि क्रियावान् सोऽपि पण्डितः ।"
इत्यपि व्याख्या पण्डितस्य हि
तथा पण्डितो जवाहरोऽपि ॥२॥

'भारतशोध'स्तस्य पुस्तकम्
पर्याप्तं तत् पाण्डित्यार्थम् ।
समग्रविषयव्याख्यानानि
निदर्शकानि पाण्डित्यस्य ॥३॥

बालानामपि पितृव्यः प्रियः
महांश्च नेता प्रजाजनानाम् ।
पक्षिपशूनां मित्रवरः सः
भारतभूम्याः पुत्रवरः सः ॥४॥

सृष्टिप्रेम - प्रतीकरूपम्
वक्षसि तस्य च पाटलपुष्पम् ।
सत्यं नित्यं शिवं सुन्दरम्
तत्त्वं तस्य नु सततं ध्येयम् ॥५॥

आलस्यमेव महांश्च शत्रुः
घातः कार्यस्य कालहरणम् ।
आरामस्य विराम एव
वचनमित्येव सततं तस्य ॥६॥

पञ्चशीलं नु तस्य च शीलम्
अनुशासनं तु तस्य कठोरम् ।
सर्वोच्चपदे रविरपि तीव्रः
कार्यकारणे सोऽपि कठोरः ॥७॥

भारतदेशः सततं ध्याने
भारतदेशः सततं मनने ।
भारतदेशस्तस्य च कार्ये
तनुमनःधने भारतदेशः ॥८॥

मातृभाषया सुलभं ज्ञानम्
शुद्धं शास्त्रं सर्वसम्मतम्
पवित्रमिह न हि ज्ञानसमानम्
प्रगतिर्नूनं ज्ञानादेव ॥९॥

भारतदेशे विविधा भाषाः
भाषाविकासे तस्य नु चिन्ता ।
भाषां च धृत्वा प्रदेशरचना
स्वीकृता तेन जवाहरेण ॥१०॥

ज्ञानयुक्तोऽपि विज्ञानी सः
श्रद्धामयोऽपि सत्यज्ञश्च ।
परापराविद्या - भोक्ता सः
तथापि नासीद् अन्धः श्रद्धा ॥११॥

निजो नन्वयं परो वेति च
गणना तस्य कदाऽपि नासीत् ।
अखिला वसुधा कुटुम्बमेकम्
विश्वबन्धुता मनोधारणा ॥१२॥

इयमाकाशवाणी कथयति
जन्मशताब्दीं जवाहरस्य ।
सततं गेया सततं ध्येया
विश्वबन्धुता विश्वात्मकता ॥१३॥

संस्मरणं ननु गौरवगानम्
कर्तुं च तस्य जवाहरस्य ।
सर्वभाषिकाः सर्वदेशिकाः
सर्वतश्चात्र कवय आगताः ॥१४॥

महाकाव्यस्य विषयो नूनम्
जीवनचरितं जवाहरस्य ।
सारगर्भिते लघुकाव्ये च
भावाञ्जलिं नु समर्पयामि ॥१५॥



**बालजगत्**

# मूर्खराजः

—जगन्नाथः, पाण्डीचेरी

मालवा-प्रदेशे धारा नाम नगरी आसीत्। तत्र कदाचिद् भोजः नाम राजा प्रजाः पालयति स्म। एकदा तस्य महिषी स्वभवने सखीभिः सह वार्तालापं करोति स्म। तस्मिन् एव समये राजा तस्याः भवनं प्रविष्टः। सहसा एव च तत् स्थानं गतः यत्र सा सखीभिः सह वार्तालापं कुर्वती आसीत्। तं दृष्ट्वा सा अवदत्—"आगच्छ मूर्खराज"!

एतत् श्रुत्वा राजा अत्यन्तं चकितः अभवत्। सः अचिन्तयत्—"अहं तावत् न मूर्खः। न च अहं मूर्खवत् किमपि कार्यं कृतवान्। मम महिषी अपि पूर्वं कदापि इत्थं न कथितवती"। एवं चिन्तयन् सः तत्क्षणं एव प्रतिनिवृत्तः। सभाभवनं गत्वा सः स्त्रियाः व्यवहारस्य कारणं विचारयन् अतिष्ठत्। किन्तु सः तद् ज्ञातुं समर्थः न अभवत्।

तस्य सभायां बहवः विद्वांसः आसन्। प्रतिदिनं बहवः कवयः पण्डिताः च आगच्छन्ति स्म। तस्मिन् दिने यः अपि पण्डितः सभाभवनं प्रविशति स्म तं सः अकथयत् आगच्छ मूर्खराज! सः पण्डितः अपि नृपस्य अभिप्राये न जानन् लज्जितः निरुत्तरः च तत्र उपविशति स्म।

प्रथमम् एकः विद्वान् प्रविष्टः। पश्चाद् द्वितीयः तत्र आगतः, अनन्तरं तृतीयः तत्र प्राप्तः। सः सर्वान् अपि तथैव सम्बोधयति स्म—एहि मूर्खराज। अन्ते कालिदासः अपि तां सभां समागतः। तम् अपि दृष्ट्वा राजा अब्रवीत्—एहि मूर्खराज!

बुद्धिमान् कालिदासः तु शीघ्रमेव सर्वां स्थितिं अवगतवान्। क्षणं विचार्य सः इमं श्लोकं उत्तररूपेण उच्चारितवान्—

खादन् न गच्छामि हसन् न भाषे
गतं न शोचामि कृतं न मन्ये।
द्वाभ्यां तृतीयो न भवामि राजन्
किं कारणं भोज भवामि मूर्खः॥

तस्य इमं श्लोकं श्रुत्वा राजा भोजः स्वमहिष्याः व्यवहारस्य कारणं ज्ञातवान्। चिन्तया मुक्तः सः शान्तिं प्राप्तवान्। तस्य ज्ञातम् अभवद् यत् तदा राज्ञी सखीभिः सह संलापसंलग्ना आसीत्। अहं च सहसा एव तत्र प्राप्तः। अतः सा मां मूर्खराज इति अकथयत्। सत्यम् एव मया तदा महामूर्खता कृता॥

कालिदासस्य बुद्धिमत्तां वीक्ष्य राजा अत्यन्तं प्रीतः तं सम्मानितवान्।

सारः—

चलन् जातु न भुञ्जीत हसन् नैव वदेत् तथा।
न तृतीयो भवेज्जातु द्वयोः संलपतो सुधीः॥१॥
प्रविशत्यगाधसत्यं बाह्यप्रकृतेश्च चेतसोऽपि च यः।
सुकविः स सूक्ष्मदर्शी कवयो ह्यपरे तु केवलं कपयः॥२॥
अनुपश्यति यो भुवनं सकलं नवया कयापि काव्यदृशा।
सुकविः स एव लोके स एव विवृणोति मर्ममाधुर्यम्॥३॥

# रामनगरस्य लालः

## ( लालबहादुरशास्त्री )

—भोला प्रसाद आग्नेयः

हे कालजयी ! हे लौहपुरुष !
हे युगपुरुष ! नमो नमः ।
भारतमातुः वीरसुपुत्रः
रामनगरस्य भूमेः लालः
भूतं बहादुरमकरोत् विस्मयकृत्यम् ।
हे युगपुरुष ! नमो नमः ।
बापोः सत्यानुगामी
तनवदनम् अल्पतम
प्रत्युत् चित्तविचारः उच्चतम
नेहरूः अपि
त्वामयममन्यत्
विश्वस्य सर्वे जनाः
लौहपुरुषममन्यन् त्वाम् ।
हे युगपुरुष ! नमो नमः ।
त्यागशौर्यकीर्तिपताका तव
तनोति संदेशान् तव
अनन्तगगनतले
मधुरस्वरे यशगाथा तव
श्रावयति पवनः माम् ।

हे युगपुरुष ! नमो नमः
किन्त्वद्याहम्
स्वार्थे लिप्तमभवम्
स्वप्रशंसाया भवाम्याह्लादितम् ।
हे युगपुरुष ! नमो नमः ।
स्मरामि न त्यागादर्शौं तव
उपार्जयामि कदाचिन् नाम्नि तव
राजधान्याम् च
प्राप्नोमि प्रतीकान्
किंचित् राष्ट्रभक्तानाम्
यत्र गच्छामि, अर्चयामि
पुष्पानि किंचित् समर्पयामि;
प्रत्युत् नास्ति
प्रतीकम् तव स्मृतिभवनम् वा
जनश्च नास्त्यद्य
समाधिस्थले तव
अश्रुजलान्यपि
शक्नोमि समर्पयन् ।
हे युगपुरुष ! नमो नमः ।

# प्रियाशा

—राजारामशुक्लः

[ शेक्सपीयररचित—मर्चेन्ट आफ वेनिस इत्यस्य कथानके आधृतम् ]

नान्दी

सेयं सौभाग्यसेव्या तनुजमिव जगल्लालयन्ती ललामा
मालाऽलङ्कारदीप्ता पतितमतिकृपापाणिना तारयन्ती ।
सिद्धा विद्धान्धकारा विबुधबुधरिपून्मूलनेऽतिप्रसिद्धा
भूयादम्बाऽवलम्बा जगदुदधिनिरालम्बनालम्बना नः ।१।

[ नान्द्यन्ते प्रविशति सूत्रधारः ]

सूत्रधारः—

भाले चन्द्रकला गलेऽतिविरला हालाहली कालिमा-
पार्श्वे भूतभटा ललाटपटले प्रोद्दीप्तनेत्रच्छटा ।
देहे फूत्कृतिभीषणा अहिगणाः पादार्चने ब्राह्मणा
यस्यैतत्पुरुषोत्तमः स भगवान् नव्याय भूयाद्भवः ।।२।।

अलमतिविस्तरेण

सभा सभाजनीयाऽद्य नाटयित्वा कृतिं नवाम् ।
रमणीयां प्रियाशाख्यां सांसदानुज्ञया मया ।।३।।

तत्तावन्नटीमाकारयामि (नेपथ्याभिमुखम्)

अपि नाट्यकलासु कोविदे! प्रमदे ! देवि ! चिरात्प्रतीक्षते ।
विनुनोदयिषुर्मनो निजं ननु रङ्गोऽत्र सनात्थ्यतामयम्
।।४।।

नटी—( प्रविश्य ) आर्यपुत्रमभिवादयन्तीयमुपस्थिता दासी ।

उपस्थितास्ति दासीयं भवतो नतमस्तका ।
आज्ञापयतु मामार्यः को नियोगो विधीयताम् ।।५।।

सूत्र०—आर्ये !

आस्ते पुँस्कोकिलो यः कुशलकविकृतौ कर्कशस्तर्कशास्त्रे
काशीराजाधिराजाश्रयरसरसिकः प्रेमपात्रं गुरूणाम् ।
अस्त्यस्माभिः प्रियाशाख्यमिदमभिनवं पार्षदादेशतोऽद्य
राजारामस्य तस्य प्रथितसुयशसो नाटकं नाट्यमत्र ।६।

तत्प्रतिपात्रमाश्रित्य प्रयतताम्

नटी—

ननु रङ्गमनोविनोदने निपुणा मर्मविदो वयं पुनः ।
परितो भुवनप्रकाशने रविरभ्यासमपेक्षते किमु ? ।।७।।

सूत्रधारः—अनुरूपमेतदत्रभवत्याः । नन्विदानीं प्रस्तूयतां काचिद्रमणीया गीतिः परिषच्चेतोरञ्जयितुम् ।

नटी—यदादिशत्यार्यपुत्रः ( गायति )—

रविरेष जहाति दीधितिं
सुहृदर्थं शशिनः प्रियः सखा ।
सुहृदेव हि जीविताश्रयः
परिसेव्यो निज जीवितैरपि ।।८।।

सूत्रधारः—अपि ! गीतप्रकर्षेण वीतसंज्ञ इवात्रभवतीमभिनन्दत्येष रङ्गः ।

नटी—आर्य ! तेन हि धन्याः स्मः ।

सूत्रधारः—आर्ये ! दृश्यतां—सुहृदर्थं सर्वस्वमपि समर्पयितुमस्माभिः सहैष रङ्गोऽपि प्रतिजानीते—

नेपथ्ये (समूहस्वरः)—

सुखे दुःखे समो बन्धुर्मित्रमेव नचापरः ।
तस्माज्जीवितदानेन करिष्यामः सुहृद्धितम् ।।९।।

नेपथ्ये (एकस्वरः)—हन्त !

सुहृदेवाश्रयो लोके विपत्सु निखिलास्वपि ।।१०।।

सत्यपा

नटी—(ससम्भ्रमम्) आर्यपुत्र ! को न खलु यथार्थेऽप्याशङ्कते ।

सूत्रधारः—(कर्णं दत्वा) अपि, एष खलु विपत्समुद्रे निमग्नो विष्णुमयो[1] नाम नगरश्रेष्ठी इन्दुमयं[2] नाम मित्रमुपगच्छँस्तिरस्काराशङ्कया खिद्यते । तदावां गच्छावः ।

नटी—तथा (निष्क्रान्तौ)

इति प्रस्तावना

[ ततः प्रविशत्युद्विग्नमना विष्णुमयः ]

विष्णुमयः—हा धिक् !

यो वा सदाऽऽपत्सु चकार सख्यं
स्वजीवितेनापि महाजनो मे ।
तस्यैव गेहं व्रजतो ममाहो !
मनः ! कुतस्त्वं परिशङ्कसेऽद्य ।।११।।

१. वेसानियो (Besaniyo) २. एन्टोनियो (Antoniyo)

तन्निःशङ्कं तमुपगच्छामि । स नूनमेव धनदानेन मां विपत्समुद्रादुत्तारयिष्यति । (परिक्रम्यावलोक्य च) एतद्धि अस्मत्प्रियमित्रस्येन्दुमयस्य सदनम् । अहो !

अट्टालिकाश्चन्द्रविचुम्बनार्हाः
समुल्लसत्कुट्टिमचाकचक्यम् ।
वृहत्कपाटानि च तोरणानि
धनित्वमेतस्य समर्थयन्ते ॥

तदत्र प्रविशामि (प्रविश्य) आः एष खलु कार्यव्यस्तोऽस्माकं प्रियसुहृदासन्दोमधितिष्ठति । अहो !

अयं स तिष्ठत्यपरः खरारि-
र्विभीषणस्येव ममावलम्बः ।
व्यस्तोऽपि बुद्ध्वाऽऽगमनं मदीयं
ध्रुवं प्रसीदेदिति निश्चिनोमि ॥१३॥

(उपसृत्य) वयस्य ! अभिवादये ।

इन्दुमयः—(सोल्लासमुत्थाय)

अहो महद्भाग्यमिदं मदीयं
सुहृत्तमो लोचनगोचरोऽभूत् ।
प्रतीक्ष्यमाणश्च चिराद्य आसीत्
स एव मे जीवितमागतस्त्वम् ॥१४॥

वयस्य ! स्वागतमत्रभवतः । आस्यतां सनाथ्यतामेषाऽऽसन्दी ।

विष्णु०—(उपविश्य) अप्यनामयं भवतः ?

इन्दु०—आम्, भवादृशैः सुहृद्वरैर्विहितशुभकामना वयं सुखिनः कुशलिनश्च वर्तामहे आशास्महे च भवतोऽप्यनामयम् ।

विष्णु०—हन्त ! अस्य दुर्भाग्यस्य तु
प्रफुल्लवक्त्रां स्मितसुन्दरां वरां
कुरङ्गनेत्रा सुकुलां यदावधि ।
प्रियां प्रियाशां[1] परिणेष्यते नहि
कुतः सुखं तावदनामयं ननु ॥१५॥

इन्दुमयः—वयस्य ! केयं प्रियाशा यस्यां भवानेव मासक्तः ?

विष्णु०—सखे ! आसीत् कश्चिच्चारुचन्द्रो नाम नगरश्रेष्ठो ।

इन्दु०—आः, को न वेवेत्ति तं वणिक्श्रेष्ठम् ?

महामना यः प्रियशीलया स्वं
सुपुत्रवन्तं सुतयैव मेने ।
निःस्वार्थं भक्त्या हि सुसेवते यः
पितुस्त्विहामुत्रफलप्रदः सः ॥१६॥

आम्, ततस्ततः ?

विष्णु०—तस्यैव तनुजेयं प्रियाशाऽधुना मम जीविताशा संवृत्ता—

सरसिजवदना सा चारुहासा विलास-
स्फुरितरुचिरगात्रा लोचने चालयन्ती ।
नयनशरनिपातैस्त्रासयन्ती मनो मे
मयि विगतरसेऽपि प्रीतिमाविष्करोति ॥१७॥

इन्दुमयः—अपि भवानपि तस्यां तथैवानुरक्तो यथा तत्रभवती भवति ।

विष्णु०—हन्त ! यदा प्रभृति सा चारुवदना अक्षिलक्ष्यीकृता—

तदाप्रभृत्येव च मन्मथेन
सखेऽतिविद्धं हृदयं मदोयम् ।
तया प्रसन्नाननया विहीनो
नदीं विना मीन इवाकुलोऽस्मि ॥१८॥

इन्दुमयः—आः ! तर्हि को विलम्बः ?

वधूर्वरो द्वावपि सम्मतौ यदि
विरुद्धय किं वाऽत्र करिष्यतेऽपरः ।
तदा विलम्बो न बुधैर्विधीयते
शुभेषु शैघ्र्यं परिपाल्यमेव हि ॥१९॥

विष्णुमयः—(निःश्वस्य) किन्तु सम्प्रति धनहीनोऽहं तां परिणेतुमसमर्थः यतः

प्रियाणि वस्तूनि सखे ! प्रियाया
उपायनीकर्तुमपेक्ष्यते स्वम् ।
धनेन साध्यं निखिलं जगत्यां
न निर्धनाः कुत्रचिदाद्रियन्ते ॥२०॥

इन्दुमयः—वयस्य ! तत्थ्यमभिहितं भवता । यद्यपि प्रेमा धनादिनिरपेक्ष्यस्तथापि चारुचन्द्रतुल्यपदेन भवता रिक्तपाणिना न सा साक्षात् कर्तव्या—

---

१. पोर्शिया (Portia)

लास्यैर्विलासैः सततं प्रमोदै-
नर्ष्टं बभूवात्यतुलं धनं ते ।
कोऽस्त्यन्यथा वा युवयोर्विभेदः
आसीद्भवांस्तत्सदृशः कदाचित् ॥२१॥

विष्णु०—वयस्य ! ननु प्रकृतं चिन्तयामः । धनाढ्यया तया सह परिणये धनागमेन मे व्यापारोऽप्युत्कर्षमेष्यतीत्यपरोऽपि लाभः । तन्नैनां कथमपि परिजिहीर्षामि ।

इन्दुमयः—तदधुना भवान् कस्यचिद्धनिकस्य पार्श्वे गत्वा ऋणं गृह्णातु, मासत्रयानन्तरं च यदा मदीयाः पोताः परावर्तिष्यन्ते तदाऽहं भवन्तमनृणं करोमि ।

विष्णु०—वयस्य ! कस्तादृशोऽस्मिञ्जनपदे ?

इन्दुमयः—(विचिन्त्य) आम्, अस्ति कश्चिन्महाधनः शून्यालोकनामा[1] । यद्यपि स मां द्वेष्टि तथापि धनलुब्धोऽसौ स्वेप्सितद्रव्यलोभेन नूनमेव ऋणं दास्यति ।

विष्णुमयः—परं दुर्जनोऽसौ कथं याचनीयः ?

इन्दुमयः—भोः ! अलं शङ्कितेन—

आलम्बनीय आपत्तौ सज्जनो दुर्जनोऽपि वा ।
विपत्तौ तु सदा विज्ञैः स्वार्थसिद्धिर्विधीयते ॥२२॥

विष्णुमयः—यथा रोचते भवते ।

इन्दुमयः—वयस्य ! स इदानीमेतादृशेष्वेव कार्येषु व्यापृतो भवेत्, तत्सत्वरं भवता स साक्षात्कर्तव्या । अहमप्यचिरेणैव तत्रागच्छामि ।

विष्णु०—तथा ।

( निष्क्रान्तौ )

इति प्रथमोऽङ्कः

## अथ द्वितीयोऽङ्कः

[ततः प्रविशति केनचित् कृषीबलेनालप्यमानः शून्यालोकः]

शून्यालोकः–(श्मश्रु परामृशन्) अरे रे कृषकाधम !

गृहीतपूर्वं मम वित्तमद्य
दत्सेऽथवा त्वां परिदण्डयानि ? ।
अस्मादृशास्त्वसदृशाधमाना-
मश्रुप्रवाहैर्विचलन्ति नैव ॥१॥

कृषकः—(सरोदनम्) दीननाथ ! दयस्व, दयस्व—

क्व भवान् धनिनां धुरन्धरः
क्व च दारिद्र्यनिपीडिता वयम् ।
धनिनां च धनं महाधनिन्
पतितत्राणकरं स्मृतं बुधैः ॥२॥

शून्या०—(सगर्जनम्) अरे नीच ! मामुपदिशसि ? तिष्ठ ते गुरुदक्षिणां दद्मि (उच्चैः) कः कोऽत्र भोः ।

प्रतीहारः—(प्रविश्य) आज्ञापयतु देवः (प्रणमति) ।

शून्यालोकः—दाण्डिकं दिदृक्षे ।

प्रतीहारः—यथाऽऽज्ञापयति देवः (निष्क्रान्तः) ।

शून्या०—(सगर्वम्) सद्य एव ज्ञास्यसि कीदृशो भवति धनिनां कोप इति ।

कृषकः—(पादयोः पतति) नाथ ! महाधनोऽपि कथमकरुणो वर्तसे ?

त्वद्दत्तजोविकामेव भुक्त्वा संसेव्य भक्तितः ।
कथञ्चिद्दुःखतप्तोऽपि स्वकुटुम्बं बिभर्म्यहम् ॥ ३ ॥

तद्देवो मासत्रयं यावदर्हति मयि दयितुम् ।

शून्यालोकः—दया ! (साट्टहासम्) ।

यो वार्ऽति निर्दयः ख्यातः क्रूरदण्डोऽपराधिनाम् ।
सर्वशून्येषु मे तस्य त्वादृशेषु दया कुतः ॥ ४ ॥

कृषकः—(साञ्जलिबन्धम्) अप्यस्ति कश्चनान्योऽपि निर्गमोपायः ? देव ! जनोऽयं—

स्वकुटुम्बेन, देहेन, गेहेनासुभिरेव च ।
सर्वस्वेन सपर्या ते यावज्जोवं करिष्यते ॥ ५ ॥

शून्यालोकः—(विचिन्त्यात्मगतम्) स्वकुटुम्बेनेत्यपि ब्रूते (प्रकाशम्) आम्, अस्त्येको निर्गमोपायः ।

कृषकः—देव ! शुश्रूषतेऽयं जनः ।

शून्यालोकः—अस्ति च सरलः ।

कृषकः—सदयः खलु देवः ।

शून्या०—त्वं चास्माकं वयस्यो वर्तिष्यसे ।

कृषकः—देव ! जनोऽयं स्वप्नेऽपि तन्न चिन्तयति तथापि श्रोतुमीहते ।

1. शायलाक (Shayolak) ।

शून्या०-वयस्य ! इत एहि अलं कुरु ममार्धासनम् ।

कृषकः-(सविस्मयम्) देव ! (शनैरुपसृत्यात्मगतम्)

विना लोभमयं हन्त ! कथं सत्कुरुतेऽद्य माम् ।
अत्र नूनमेव केनचित् कारणेन भवितव्यम्
निष्कारणं सकारुण्या भवन्ति नहि दुर्जनाः ॥ ६ ॥

शून्या०—( करं गृहीत्वा ) किमात्मन्येवात्मना रमसे, उपविशात्र ।

कृषकः—(निवार्य) एष दुर्भाग्योऽत्रैव समीचीनः आज्ञापयतु देवः ।

शून्या०—सखे ! अस्ति तवैका षोडशी कन्यका ।

कृषकः—अस्ति प्रभो !

शून्या०—सा च कदाचिन्मद्दृष्टिपथमायाता ।

कृषकः—देव ! शक्यते तत् । अविनीता सा मया निषिद्धाऽपि प्रत्यहं पर्यटति ।

शून्या०—ममापि नास्ति काचित् सन्ततिः । या चासीदेका कन्यका साऽपि स्वेच्छयैवोढवतीति न मेऽस्ति तस्यां तादृशोऽनुरागः । त्वदीयां चेमां कन्यकां योग्याय वराय प्रदाय स्वजीवितं कृतकृत्यं मंस्ये ।

कृषकः—दयावान् खलु देवः ।

शून्या०—तत्सा तावदत्रैव मत्सविधे तिष्ठतु यावदहं वरं परिमार्गयामि ।

कृषकः—(विचिन्त्यात्मगतम्) अयं मनस्यन्यथा कृत्वा ब्रवीति ।

दुर्वासनावासितमस्य वक्त्रं
कालुष्यमन्तस्थमभिव्यनक्ति ।
अस्मादृशे कारुणिको दरिद्रे
दयादरिद्रः कथमन्यथा स्यात् ॥ ७ ॥

(प्रकाशम्) देव ! वरप्राप्ति यावच्चरित्रमात्रधना सा अस्य निर्धनस्यैव गृहे स्थातुं योग्या ।

शून्यालोकः—तन्नास्ति तवोद्धारः । शृणु रे दुर्मते ! भूतार्थं ते कथयामि—

निवर्तयाद्यैव धनं ममाखिलं
दहामि गेहं सकुटुम्बमन्यथा ।

अरे रे कृषकाधम !

स्वजीवितं वाञ्छसि चेत्सबान्धवो
मनोरमां तां कुरु मेऽङ्कशायिनीम् ॥ ८ ॥

कृषकः—अरे रे क्लीब !

ऐश्वर्यमदमत्तः सन् मनोऽभीष्टं चिकीर्षसि ।
दुर्वादिनोऽद्य ते जिह्वां कर्तयिष्यामि खण्डशः ॥९॥

(मारयितुं चेष्टते)

[ततः प्रविशति दाण्डिकेन सह प्रतीहारः]

प्रतीहारः—एष उपस्थितो दाण्डिकः, आज्ञापयतु देवः ।

दाण्डिकः—(त्रिःप्रणम्य) विजयतां देवः ।

शून्यलोकः—दाण्डिक ! अयं दुर्मतिरितो नीत्वा पशुमारं मारणीयः ।

कृषकः—अरे पापमते ! कृतस्य फलं भोक्ष्यसि ।

यद्यत्त्वया कृतं क्लीब ! फलं तस्यात्र भोक्ष्यसि ।
परलोकेऽपि दण्डार्थं हरिः साक्षी भविष्यति ॥१०॥

दाण्डिकः—चलेतः (तं बलाद्बद्ध्वा प्रतीहारेण सह निष्क्रान्तः) ।

शून्यालोकः—(साट्टहासम्) ।

अहो दारिद्र्यदीनानां दम्भिनां स्वाभिमानता ।
एवमेवास्ति मे किन्तु द्वेषी सर्वोऽपि दण्डभाक् ॥११॥

प्रतीहारः—(प्रविश्य) जयतु देवः । एष खलु विष्णुमयनामा श्रेष्ठिनः इन्दुमयस्य सखा द्वारि तिष्ठति । श्रुत्वा देवः प्रमाणम् ।

शून्यालोकः—अपि मद्रिपोरिन्दुमयस्य सखा ?

प्रतीहारः—आम् देवः ।

शून्यालोकः—प्रवेशयैनम् ।

प्रतीहारः—यथादिशति देवः (निष्क्रम्येन्दुभयेन सह प्रविश्य) उपस्थितोऽत्रभवान् (निष्क्रान्तः) ।

विष्णुमयः—श्रेष्ठिवर्य ! अभिवादयतेऽयं जनः ।

शून्यालोकः—स्वागतमत्रभवतः (सुखेनास्यताम्) ।

विष्णु०—धन्योऽस्मि संवृत्तोऽधुना (उपविशति) ।

शून्या०—अपि कुशलं तत्रभवतः कलङ्काङ्कमयस्य ?

विष्णु०—कलङ्काङ्कमयस्य ?(विचार्य) अत्र कोऽयं महाभागः ।

शून्या०—भवतः सखा ।

विष्णु०—अपि तत्र भवानिन्दुमय ?

शून्या०—अथ किम् ? । इन्दुरपि कलङ्काङ्क एव ।

विष्णु—(सक्रोधमात्मगतम्) किमधुना करवाणि ? जिह्वां वैतस्य कर्तयानि ? (विचार्य) नूनमधुना स्वार्थसिद्धिरेव श्रेयस्करी (प्रकाशम्) कुशली तत्र भवानिन्दुमयः ।

शून्या०—ननु प्रकृतं चिन्तयामः । अथ कस्मादागमनं भवतः ?

विष्णु०—श्रेष्ठिवर्य ! अपेक्ष्येऽहं ऋणम् । मासत्रयान्तरं च यदा आर्यस्येन्दुमयस्य पोताः परावर्तिष्यन्ते तदा स मां ऋणान्मोचयिष्यति ।

शून्या०—(सहासम्) अरे ! तस्मिन् कपटाचारिणि कथं विश्वसिति भवान् ? अहो !

शाठ्यमाचरितं भद्र ! येनाद्यावधि पाप्मना ।
कथं विश्वस्यते तस्मिन् कितवेऽनृतभाषिणी ॥१२॥

प्रतीहारः—(प्रविश्य) एष खलु नगरश्रेष्ठी इन्दुमयो देवं साक्षाच्चिकीर्षति ।

शून्या०—नन्वागतः सोऽपि वराकः ?। प्रवेशयैनम् ।

प्रतीहारः—यथाऽऽदिशतिदेवः (निष्क्रम्येन्दुमयेन सह प्रविश्य च) देव ! उपस्थितोऽत्रभवान् (निष्क्रान्तः) ।

शून्या०—उपविशतु महानार्यः ।

इन्दुमयः—महान् आर्यः अनार्यो वा ?

शून्या०—(सहासम्) चौरस्य कूर्चे तृणम् । भवतु उपविशतु भवान् । अपि भवतः पोताः मासत्रयानन्तरं नूनमेवागमिष्यन्ति ?

इन्दुमयः—(उपविश्य) ओम्, नास्ति तत्र सन्देहः । इदानीमस्मत्—सुहृद् ऋणदानेनानुग्राह्यः ।

शून्या०—किन्तु सम्प्रत्यहं भवादृशेभ्यः दातुमसमर्थः ।

इन्दुमयः—कुतस्तत् ? भवतस्त्वयं व्यापार एव ।

शून्या—सत्यं तत्, किन्तु भवान् तावत् कुसीदं दातुं न प्रभवति यावदितरे ददति ।

इन्दुमयः—भोः अलं शङ्कितेन । समर्था वयं यथेप्सितदाने ।

शून्या०—(आत्मगतम्) यथेप्सितमिति ब्रूते (विचार्य) आः गृहीतः खल्वेषः ।

योऽयं मां सततं द्वेष्टि गृहीतः सोऽधुना मया ।
अत्युल्बणं स्मराम्यद्य मम वैरं पुरातनम् ॥१३॥

(प्रकाशम्) भद्र ! नाहं भवतः कुसीदं जिघृक्षामि । वरमस्त्येकः समयः ।

इन्दुमयः—कश्च सः ?

शून्या०—निश्चितावधि यावद् यदि धनं न परावर्तिष्यते तदाऽहं भवद्वक्षोभागादर्धसेटकपरिमितं मांसं कर्तयिष्यामि अपि सम्मतो भवान् ?

विष्णुमयः—(सरोषम्) नैव, न वयं ऋणं जिघृक्षामः ।

इन्दुमयः—वयस्य ! अलं रोषेण । मत्पोतास्ततः प्रागेव परावर्तिष्यन्ते इत्यस्ति मे द्रढीयान् विश्वासः । (शून्यालोकं प्रति) श्रेष्ठिवर्य ! अस्ति नः सम्मतिः ।

शून्या०—अथ कियदपेक्षते ?

इन्दुमयः—स्वर्णमुद्राणां सहस्रत्रयम् ।

शून्या—(पत्रं दत्वा) अत्र समयं लिखतु भवान्, अयमहं दद्मि मुद्राः ।

इन्दुमयः—तथा (पत्रमादाय विलिख्य च) गृह्णात्वेतत् ।

शून्यालोकः—(गृहीत्वाऽवलोक्य च सहर्षमात्मगतम्)

द्वेषिणं निगृहीतं मे हंस्ये कैतवमाश्रितः ।
एवमेव द्विषोऽस्माकं नाशं यास्यन्ति निश्चितम् ॥१४॥

(प्रकाशम्) गृह्यतामिदं स्वर्णमुद्राणां सहस्रत्रयम् ।

इन्दुमयः—(गृहीत्वा) ननु साधयामस्तावत् ।

शून्यालोकः—(सव्यंग्यम्) स्वैरं सर्पताम् । अपि च भद्रौ !

वयमेतादृशा नैव निर्दयाः स्मः सुहृत्तमौ ! ।
विनोदमात्रमेतत्तु याथार्थ्येन न गृह्यताम् ॥१५॥

इन्दुमयः—अत्र तु भविष्यदेव प्रमाणम् । अस्तु गच्छामः (विष्णुमयेन सह निष्क्रान्तः) ।

शून्यालोकः—(साट्टहासम्) नाशितं खल्वेतच्छिरःशूलम् । नन्वधुना इन्दुमयस्य पोता जलधौ नष्टा इति लोके प्रवादयामि । तदिदानीं तदर्थं साधयामि ।

(निष्क्रान्तः)

इति द्वितीयोऽङ्कः ॥

(क्रमशः)

# स्वातंत्र्यमहासमरयोगेश्वरः

—डा० राजेन्द्र नारायण शर्मा



श्री जयशंकर प्रसादः

आसीत् काश्यां महामाहेश्वरस्य नित्यस्वेच्छा-स्वयंभूसाहित्यावतारस्वरूपः स्वनामधन्यः श्रीजयशंकरप्रसादनामाभिधेयो महान् कविः। स्वतः प्रमाण-भूतस्य यस्य नाम महद्यशः किंचिदपि परिचयं नापेक्षते अस्मिन् देशे। जन्मान्तरीय संस्कारप्रबुद्धैः सारस्वतप्रतिमासम्पन्नैः भारतीय पुत्रैः एतैः एकोनत्रिंशत् मौलिकग्रन्थाः रचिताः सन्ति, ते सर्वे च सर्व स्वीकृतसाहित्य निधयः। अद्यतिथौ सर्वेषां बुद्धिजीविनां मनसि एका जिज्ञासा वरीवर्ति। समीचीना च सा। एतैः कविकुलचूड़ामणिमहाभागैः स्वर्गादपि गरीयस्याः निज जननी रूपायाः जन्मभूमेः अथ च भारतमातुः मुक्तयर्थं किम् कृतम्। समाधानं अपेक्ष्यते। प्रश्नस्योत्तरप्रतोकाशप्रणतिपुरस्सरं निवेदन-मिदम् यत् त्यागसमर्पणप्रतिभा प्रतिरूपैः श्री जयशंकर प्रसादैः निजमातुः भारतमातुश्च मोक्षार्थे किम् किम् न कृतम्। एतेषां महाभागानां सम्पूर्णजीवनम् धर्मकर्म-प्राणमनः सहितमखिलं एतद्देशस्य भारतमातुः देव्याः पूजार्चनमेव आसीत् किल।

तव च का किल नः स्तुतिरम्बिके !
सकलशब्दमयी किल ते तनुः।
निखिलमूर्तिषु मे भवदन्वयो
मनसिजासु बहिः प्रसरासु च॥
इति विचिन्त्य शिवे ! समिता शिवे !
जगति जातमयत्नवशादिदम्।
स्तुति जपार्चन् चिन्तनवर्जिता
न खलु काचन कालकलास्ति मे।

उपर्युक्तश्लोकः भारत-मातरं देवीं प्रति श्री जयशंकरप्रसादस्य श्रद्धासमादरभावनायाः स्व-चेतनायाश्च सारूप्यं किंचिद् किंचिद् अभिव्यनक्ति। प्रसादस्तु राष्ट्रीय मुक्ति-आन्दोलनस्य, रणोल्लास महायज्ञस्य च अर्चचितो विरलतरः पुरोधा आसीत्। स्वातन्त्र्य महासमरस्य वैचारिकक्रान्तिः मन्त्रदाता च। स्वाराज्यप्राप्त्यर्थम् आत्माहुतिप्रदानाय स्वकीये आग्नेयैः राष्ट्रगीतैः स्वदेशवासिनः आहूय 'उद्बुद्धय-स्वाग्ने प्रति जागृहि' इति वेदमन्त्रैः तेषां सर्वेषां चित्तोद्बोधनमसौ अकुरुत। स्वातन्त्र्यसंग्रामसैनिकानां हृदयेषु स्वदेशभक्तिभावनाग्निः प्रज्वलितो दावाग्निरिव प्रसादविरचितैः राष्ट्रगीतैः—

( शेषांशः ३६ पृष्ठे )

# भारतवर्षे संस्कृतभाषाया अनिवार्यत्वं किमर्थम्

—डॉ० भगीरथप्रसादत्रिपाठी 'वागीशशास्त्री'
निदेशकः—अनुसंधानसंस्थानम्, सम्पूर्णानन्दसंस्कृतविश्वविद्यालयः, वाराणसी

( गतांकादनुवर्तते )

संस्कृतभाषायाः साहाय्यमन्तरा प्रादेशिकभाषागतशब्दार्थो न शक्यते ज्ञातुम् । तदर्थं शरणीकरणीयैव संस्कृतभाषाऽस्माभिः समैः । तर्हि कुतो न विधीयते देशरक्षा संस्कृतभाषासमाश्रयणेन ? खण्डशो विभजनात्कुतो न वारणीयो देशः ? पंजाबीयभाषायामस्ति शब्द **'जाणा'** इति । 'डेंह दी धुप्प, रत्त दी भुक्ख ते जाणा दा गहना'—'दिवा चातपः, नक्तं च बुभुक्षेति जन्ययात्राभूषणम्' इति तदर्थः । जाणो नाम जन्ययात्रावरयात्रा जान्यमात्रात्मको वा । सिन्धीयभाषायाः तदर्थकः शब्दोऽस्ति 'जञू' इति । सिन्धीयभाषाभाषाभिः पंजाबीयभाषाभाषिभिश्च संस्कृतभाषायाः साहाय्येन विना न तदर्थावगमं पार्यते कर्तुम् । संस्कृतभाषायामेतदर्थकः शब्दोऽस्ति—"जन्य" इति तदर्थश्च—जनम्-वरम् ( आहोस्विद् जनीम् = वधूम् ) श्वसुरगृहं प्रति प्रयायिता[1] । मालतीमाधवे वरयात्रार्थकस्य जन्ययात्राशब्दस्य प्रयोगः । एष जन्ययात्राशब्दो हिन्दीभाषायां 'जनेत्' इति मराठीभाषाया 'जनावस' इति 'जनवास' इति वा शब्दो लभ्यते । मराठीव्युत्पत्तिकोशकारेण संस्कृतभाषाया जन्यशब्दपर्यालोडनेन विना तदर्थो विहितः—'जनकस्य गृहे दीयमान आवासः' इति । संस्कृतभाषायाः साहाय्याद् ऋते प्रादेशिकभाषायां कीदृशी दुर्दशाभवतीति विभावितं भवद्भिः ।

नेपालीयभाषायां रसवत्यर्थकः **'भान्सा'** इति शब्दः संस्कृतभाषाया **महानस**शब्दसन्ततिः हिन्दीभाषायां प्रचलितः **रसोई** इति शब्दः संस्कृतभाषाया **रसवती** शब्दजननः । संस्कृतभाषा समग्रे भारते वर्षे नैकरूपतया प्रचलिता, किन्तु भिन्नभिन्नप्रदेशेषु भिन्नभिन्ना व्यवह्रियन्ते स्म शब्दसमूहाः । अद्यत्वे, ऐक्याद् अनेकत्वं प्रपद्यमानासु भाषासु दृश्यमाना भिन्नता संस्कृतभाषासाहाय्येन देशं न प्रभविष्यति विभेदयितुम् ।

प्रादेशिकभाषाणां वैभिन्याद् न खण्डीस्याद् देशइत्यालक्ष्य महामुनिना कुमुदेन्दुना **भूवलय**नामको ग्रन्थः प्रणीतः । एष महानुभाव ऐशवसप्तमशतकस्योत्तरार्द्धे जीवति स्म । तात्कालिकगङ्गवंशस्य सुप्रथितमहीक्षितोऽमोघवर्षस्य ( प्रथमस्य ) अयं ब्राह्मणराजगुरुः, जैनाचार्यवीरसेनस्य च प्रधानः शिष्य आसीत् । एतेन लिखितो भूवलयनामको ग्रंथो जगतोऽष्टममाश्चर्यम् । सोऽष्टादशोत्तरसप्तशतभाषामयो ग्रन्थः । ताः सर्वा भाषास्तत्र सुव्यक्तरूपेण सन्ति संनिविष्टाः । नियमपूर्वकमध्ययनेन यदर्थकं पद्यं संस्कृतभाषायामस्ति तदर्थकमेव तत्पद्यं तत्र ग्रन्थेऽन्यभाषायामुपलभ्यते । ५४ ख्रिस्ताब्दं यावत् संस्कृतप्राकृतशौरसेनीकन्नडतमिलतेलुगुपैशाचीमागध्यर्धमागध्यादीनां भाषाणामभूत् समुद्धारः ।

ग्रन्थस्यास्य सम्पादकोऽस्ति महीशूरविश्वविद्यालय इतिहासप्राध्यापकः पञ्चत्रिंशद्भाषावेत्ता डा० श्रीकण्ठैयाशास्त्री । तन्मतानुसारेण तज्ज्ञाताः सर्वा भाषा इह ग्रन्थे विलसन्ति ।

संस्कृतपालिप्राकृतद्राविडान्ध्रमहाराष्ट्रमलयालमतमिलतेलुगुकन्नड़गुर्जरकलिङ्गकाश्मीरभाषाः कम्बोजीय-

१. द्रष्टव्यो निबन्ध "संज्ञायां जन्याः जायापानिङ्"—सारस्वती सुषमा, २२ वर्षे, १ अङ्कः, ७७ पृ० ।

तिब्बतीयवज्जीबङ्गपद्मवैजयद्धवैदर्भीवैशालीयपैशाचीस्ताक्षीसारस्वतापभ्रंशारितीनिरोष्ठी मागध्यर्धमागधीपाटलीकलटगौडोक्तयवनानीतुर्कीसैधव ऐन्थीन्मूलदैवीवैदिकीप्रभृतयो भाषाश्च सन्तीह ग्रन्थे। एष ग्रन्थ एकपञ्चाशदुत्तरैकोनविंशतिशतख्रैस्ताब्दे तदानोन्तनैर्भारतराष्ट्रपतिभिः डॉ० राजेन्द्रप्रसादमहाभागैर्दृष्टः सम्प्रत्येव बङ्गलूरे विद्यते।

भूवलयनामको ग्रन्थोऽसङ्ख्यातविज्ञानामाकरः। इह ग्रन्थे चत्वारो वेदा, ब्रह्मणानि, उपनिषदः, दर्शनानि, महाभारतम् ( नयाख्यानकर ), श्रीमद्वाल्मीकीयं रामायणम्, गणितम्, भूगोलः, खगोलः, रसवादः, शरीरविज्ञानम्, संगीतम्, वादित्रम्, योगः ( मनोविज्ञानम् ), व्याकरणम् ( भाषाविज्ञानम् ), आयुर्विद्या, वनौषधिविज्ञानम्, अणुवादः आध्यात्मादिविषयकाः सर्वे प्रामाणिका ग्रन्था इहैवैकस्मिन् ग्रन्थे समुपलभ्येरन्निति प्रयत्तं तेन विद्वत्तल्लजेन। असंख्यग्रन्थसंग्रहक्लेशो न स्याज्जनानामितिधिया प्रयासस्तदीय एवंविधः। संपूर्णोऽयं ग्रन्थः कर्णाटकभाषायाः साङ्गत्यच्छन्दोनिबद्धः। अविकलश्चैषोऽङ्केष्वपि लिखितः। नेह कस्या अपि भाषाया वर्णलेशः। बृहत्पत्राकारेण प्रकाशने षोडशसहस्रतो नोनानि जायेरन् पृष्ठानीति मुद्रणकलावेत्तॄणां विमर्शः। एतावच्चिरमेतदीयेषु षष्ठस्वंशेष्वेकतमोंशः पठितः। एतावन्मात्रेण पञ्चमप्रतिसहस्रसंख्याकाः श्लोकाः समभूवन्। यदीयं संख्या सर्वप्रमाणीभूततया गृह्येत तदा ४२०००० श्लोकाः सपद्येरन्।

भूवलयनामकोऽयं ग्रन्थो देशस्यैक्याय कियत् साहाय्यम् अर्पयेदित्यत्र नागतायत्तम्। एर्तहि, देशकर्णधाराणामिदं कर्तव्यं यत् तैस्तत्तत्प्रदेशप्रचलितभाषागतशब्दजनकानां संस्कृतभाषागतशब्दानां साहाय्येन सर्वत्रैक्यस्थापनपूर्वकं देशस्यैक्यसुरक्षा विधीयेत। एवं भूतं बृहत्तरभारतं कस्य भारतीयस्य मस्तकं नोन्नामयेत्?

"भारती चैव विपुला महाभारतवर्धिनी"

**—वायुपुराणम्**



---

( ३४ पृष्ठस्य शेषांशः )

हिमाद्रि तुंग शृंगसे प्रबुद्ध शुद्ध भारती
स्वयं प्रभा समुज्ज्वला स्वतन्त्रता पुकारता....
अराति सैन्य सिन्धु में सुवाडवाग्नि से जलो
अमर्त्य वीर पुत्र हो बढ़े चलो बढ़े चलो।

एतादृशी प्राणोन्माद-प्रबोधनकारिणी वीररसमयी रचना क्वचिदपि न दृश्यते साहित्येतिहासे।

आर्यदेशेऽस्मिन् राष्ट्रीय चेतनासुसम्पन्नमतयः ये च कवयो मनीषिणः सन्ति तेषां मध्ये एष महानुभावः कनिष्ठिकाधिष्ठित आसीत् अस्तिचेत्यत्र न कोऽपि संशयलेशः। एतस्य महाकवेः समस्त-छन्दोरचना राष्ट्रीय चेतनायाः मानवसमष्ठिचेतनाभाश्च प्रबोधिनी संगीतिकास्ति। प्रसादविरचितेषु समस्तेषु नाटकेषु एकमेवाद्वितीया आर्यसभ्यतायाः गौरवगाथा चित्रलिखितास्ति। आकल्पमुमूर्षितहतदर्पमहाजात्यभिमानस्य नव उन्मेषविधाता, जागर्तिदेवदूतएष इति बुधजनैः चिरस्मर्यमाणः महामनीषी श्री जयशंकरप्रसादो विजयतेतराम्। प्रसादविरचितदेशभक्तिमयी राष्ट्रीय रचना शाश्वतिकमहत्त्वशालिनी अस्ति। यद्यपि पुरा लिखिता सती अपि प्रसाद तादृशोमेव तेजोमयतां नित्यनवीनतां नितरां च बिभर्ति। सम्प्रति भविष्यत् काले देशभक्तानामुद्बोधनपथप्रदर्शने च नितरां क्षमा। ॥ इति शम् ॥

# २१ संस्कृतविद्वांसः पुरस्कृताः

उत्तरप्रदेशस्य राज्यपालेन श्री मुहम्मद उस्मान आरिफमहोदयेन राजभवने आयोजिते एकस्मिन् समारोहे संस्कृतस्य २१ उत्कृष्टाः विद्वांसः सम्मानिताः। अयं समारोहः उत्तरप्रदेशसंस्कृताकादम्यास्तत्वावधाने आयोजित आसीत्। पुरस्कारं लब्धवत्सु कालिकातास्थः श्रीगौरीनाथशास्त्री, वाराणसेयः प्रो० रामजी उपाध्यायः, बम्बईवास्तव्यः प्रो० सदाशिव अम्बादास डांगे महोदयश्च प्रमुखा आसन्। एतेभ्यः सम्मानपत्रातिरिक्तं २५ सहस्ररुप्यकाणि अपि समर्पितानि।

अस्मिन् वर्षे अकादम्या ४२ विद्वांसः सम्मानिताः। विगते २१ जून दिनांके २१ विद्वांसः सम्मानिताः। अवशिष्टानां पुरस्कारः डाकद्वारा प्रेषितः। अकादम्या २५ सहस्रस्य त्रयः, विशिष्टपुरस्कारः एकोत्तरदशसहस्रस्य दशवेदपण्डितपुरस्काराः, दशसहस्रस्य त्रयः नामितपुरस्काराः, पंचसहस्रस्य षट् विशेषपुरस्काराः तथा द्विसहस्रस्य विंशद्विविधाः पुरस्काराः प्रदत्ताः। एते पुरस्काराः १९८७ वर्षस्य आसन्। ८७ वर्षस्य "विश्वभारती" पुरस्कारस्य निर्णयः अधुना न जातः।

## श्रीमण्डनमिश्रः संस्कृतविद्यापीठस्य कुलपतिः नियुक्तः

राष्ट्रीयसंस्कृतसंस्थानस्य निदेशकः डा० मण्डनमिश्रमहोदयः श्रीलालबहादुरशास्त्री केन्द्रीयसंस्कृत-विद्यापीठस्य कुलपतिपदे नियुक्तः। श्री मिश्रमहोदयः विद्यापीठस्य प्रथमः कुलपतिः वर्तते। इदं विद्यापीठम् अस्मिन्नेव वर्षे विश्वविद्यालयश्रेण्यां समागतम्।

श्रीमिश्रमहोदयः विगतवर्षे एकलक्षरुप्यकाणां "विश्वभारती" पुरस्कारेण सम्मानित आसीत्।

## "वेदमनीषी" पुरस्कारः

उत्तरप्रदेशसंस्कृताकादम्या सम्पूर्णानन्दसंस्कृतविश्वविद्यालयस्य वेदविभागाध्यक्षः प्रो० युगलकिशोर-मिश्रः "वेदमनीषी" इति पुरस्कारेण सम्मानितः। दशसहस्ररुप्यकात्मकोऽयं पुरस्कारः प्रो० मिश्रमहोदयैः २१ जून दिनाङ्के राजभवन लखनऊ इत्यत्र समायोजिते एकस्मिन् समारोहे स्वीकृतः।

## पुरातत्त्वविषये संस्कृते प्रथमं पुस्तकम्

उपराष्ट्रपतिशङ्करदयालशर्मणा गतदिवसे स्वीयावासे कु० मधुबाला द्वारा लिखितस्य "भारतीय-पुरातत्त्वम्—नवीनतमा उपलब्धयः" इति संस्कृतपुस्तकस्य लोकार्पणं कृतम्।

पुरातत्त्वविषयककार्याणां तथा तस्य नवीनतमोपलब्धीनां विवरणं प्रस्तुतं वर्तते।

पुरातात्त्विकान्वेषणम्, पुरातात्त्विकखननम्, प्राचीनस्मारकानां संरक्षणम्, विधिव्यवस्था, पुरालेखः, संग्रहालयनियोजनम्, पुरातात्त्विकोद्यानव्यवस्थापनम् इत्यादिविषये विगत ४० वर्षतः कृतानां पुरातात्त्विककार्याणां विवरणं संस्कृतभाषायामेव अस्मिन् पुस्तके प्रस्तुतमस्ति ।

समारोहे पुस्तकपरिचयः प्रसिद्धपुरातत्त्वविदा प्रो० बी० बी० लालमहोदयेन दत्तः । अध्यक्षता डॉ० लोकेशचन्द्र महोदयेन कृता ।

## संस्कृतं वैदेशिकभाषयाः कोटौ आगतम्

दिल्लीप्रशासनद्वारा कृतस्य वैदेशिकभाषाकोटौ संस्कृतस्य प्रवेशस्य "अखिलभारतीयसंस्कृतविकास-परिषदा" आलोचना कृता । परिषदः अध्यक्षेण महान्त कैशालनाथशास्त्री महोदयेन एकस्मिन् वक्तव्ये उक्तं यत् परिषदा अस्य आशयस्य ज्ञापनं प्रधानमन्त्रिणः, राष्ट्रपतिमहोदयस्य दिल्लीप्रशासनस्य च समीपे प्रेषितमस्ति।

श्रीशास्त्रिमहोदयेन सूचितं यत् दुर्भाग्यवशात् दिल्ली प्रशासनेन एकस्मिन् पत्रे पत्रसंख्या–एफ ३४/१३/८८ ई० डी० एन० २५/८९ अक्टूबरमासे ६ दिनांके संस्कृतस्य विदेशीयभाषाकोटौ प्रवेशः कृतः अस्ति । □

---

# स्वातन्त्र्यमरविन्दश्च

—राममूर्ति त्रिपाठी

प्रो० विभागाध्यक्ष : उज्जैन विश्वविद्यालयः

स्वस्यात्मनस्तन्त्रं स्वतन्त्रस्य भावः स्वातन्त्र्यमित्यस्मिन्नेवार्थे योगिनः महात्मनोऽरविन्दस्वामिनिवेशः । अतएव कियद्दूरं यावत् अन्यथाभूतस्वातंत्र्यसंग्रामे रक्तोऽपि अन्ततोऽपरक्तः । केचन तावत् स्वातंत्र्यस्य दक्षिणमार्गावलम्बिनः योद्धारः पूर्णस्वातंत्र्यविरोधिनः, अन्ये तु तद्विरोधिनः पूर्णस्वातन्त्रस्य पक्षधराः, किन्तु तेषां पूर्णस्वातत्र्यं ब्रिटिशसत्तातः मातृभूमेर्विमोचनमेव । अपरे स्वातन्त्र्यस्यान्यथा व्याख्यानं प्रकुर्वाणः साम्राज्यवादिभ्यः तत्तन्त्रेभ्यः मानवतायाः शोषितायाः पीडिताया वा मुक्तिमङ्गीकृतवन्तः—अतः तेषां रुचिः विशिष्टप्रकारकशोषकतन्त्रान्मुक्तिप्राप्तौ—न तु केवलं ब्रिटिशसत्तात एव । इमे मार्क्सवादिनः न केवलं ब्रिटिशसत्तात एव मानवतां समुद्धर्तुकामाः—अपितु तन्निर्दिष्टपद्धतितः । तेषां मते 'सांपनाथस्य' स्थाने 'नागनाथस्याभिषेकः समानमेव । महर्षिरर्विदस्तु ततोऽपि न सन्तुष्टः । तेषां मते स्वतन्त्रस्तु आत्मैव–तत्रैव स्वातंत्र्यमधिवर्तते नान्यत्र । तत्त्वबोधादेवाधिगतं स्वातन्त्र्यं कामधुक् । तेनैव यथा समष्टिमुक्तिः सम्भवति—। यद्यपि महाव्यवस्था तत्रैव स्वयम् गमिष्यति–तथापि शीघ्रतां सम्पादयितुमस्माभिर्मनुष्यैरपि यथाशक्ति किञ्चित् कर्तव्यम् । एवंविधं स्वातन्त्र्यमधिगन्तुमीप्साऽपेक्षिता अभीप्सैव परमा अस्मदधीना-अवशिष्टन्तु सर्वं महाशक्तिरेव सम्पादयिष्यति । आरोहणावरोहनविधया पूर्णयोगतः तत् सम्पत्स्यते । सर्वात्मिनोपरितनसत्ताम्प्रत्यधस्तनसत्तायाः विसर्जनमेव तदवरोहणार्थं योग्यतामादधाति—एवमेवाधस्तनचैतन्यसत्ताया आरोहणमपि संभवति ।

यदा सृष्टेः प्रभृति इदानीं यावत् विकासः भवन्नास्ते भूतञ्च जडाज्जीवनस्य जीवनान्मनसः—तदात्रैव विकासस्य तस्यावरोधः कुतः सम्भवति ? अग्रेऽपि चेतनायाः स्तरभेदा भविष्यन्त्येव—इत्येवं चिन्तयतः योगिनोऽरविंदस्य स्वातन्त्र्यं किञ्चिदन्यदेव । स्वातन्त्र्यस्यैवंविधप्राकट्येन सर्वं विश्वं समष्टिरूपेण पूर्णस्वातन्त्र्यमनुभविष्यति । □

# ज्ञानशिविरम्

**तर्कपरीक्षा**—[ भवतां तर्कपरीक्षार्थमत्र केचन प्रश्नाः उट्टंक्यन्ते । एतेषां प्रश्नानां समाधानाय तर्कस्य आवश्यकता भवति । एतेषां समाधानस्यावसरे पाठकाः न केवलं उत्तरमन्वेषयेयुः अपितु उत्तरस्य सत्यतां प्रमाणयितुं तर्कमपि प्रतिपादयेयुः । एष प्रयोगः भवतां बुद्धिशुद्ध्यर्थम् अतीवोपयोगी भवेदिति विश्वसिमि ] ।

**—सम्पादकः**

१—कासुचित् आदिमजातिषु राजनीतिज्ञाः सदा मिथ्या भाषन्ते । अराजनीतिज्ञाश्च सत्यं वदन्ति । कोऽपि नवागन्तुकः तज्जातेः त्रिभिर्जनैः सह मिलितवान् पृष्टवांश्च अपि भवान् राजनीतिज्ञः ?। तेषु प्रथमः किमपि उत्तरं ददाति । तदा द्वितीयः कथयति यत् प्रथमेण स्वस्य राजनीतिज्ञता अस्वीकृता । पुनश्च तृतीयः बलपूर्वकं वदति—प्रथमः वस्तुतः राजनीतिज्ञः अस्तीति ।

एषु कति राजनीतिज्ञाः सन्ति ?

[ एतादृशा एव समस्याः अधस्तादुट्टंक्यन्ते । उदाहरणत्वेन उपर्युक्तस्य प्रश्नस्य समाधानं तत्पद्धतिश्च अत्र प्रस्तूयेते । तदनुसारमेव अन्येषामपि समाधानं समाधानपद्धतिं च यथाशीघ्रमस्मान् प्रेषयन्तु । साकमेव स्वीयैकं छायाचित्रं ( पासपोर्ट-आकारकं ) अपि प्रेषयन्तु । प्रथमतया विजेतुः चित्रमग्रिमाङ्के प्रकाशयिष्यते—सं० ] ।

**समाधानम्**—यदि प्रथमदेशवासी वस्तुतः राजनीतिज्ञः अस्ति तदा सः अवश्यं मिथ्या वदति । तथा च स्वराजनीतिज्ञतामपि अस्वीकरोति । एवं यदि सः वस्तुतः राजनीतिज्ञः नास्ति तदा स सत्यं वदति स्वीयराजनीतिज्ञतां चास्वीकरोति । अतः प्रथमः प्रत्येकदशायां स्वराजनीतिज्ञतामस्वीकरोति ।

यस्माद् द्वितीयः वदति यत् प्रथम स्वराजनीतिज्ञतामस्वीकरोति, तस्मात् सः सत्यं भाषते । यस्मात्स सत्यं भाषते तस्मात्स न राजनीतिज्ञः ।

तृतीयः वदति यत् प्रथमः राजनीतिज्ञोऽस्ति । यदि वस्तुतः प्रथमः राजनीतिज्ञः तर्हि तृतीयः सत्यं वदतीति निश्चीयते । यस्मात्स सत्यं वदति तस्मात्स न राजनीतिज्ञः यदि च प्रथमः राजनीतिज्ञः नास्ति तदा तृतीयोऽसत्यं वदति । अतोऽसत्यवदनात् तृतीयः राजनीतिज्ञो भवति ।

एवञ्च त्रिषु एक एव राजनीतिज्ञः सम्भवति । द्वितीयः सदा सत्यवचनान्न कदापि राजनीतिज्ञः । यदि तृतीयः सत्यं वदति तदा प्रथमः राजनीतिज्ञः सिद्ध्यति । यदि सः असत्यं वदति तदा स स्वत एव राजनीतिज्ञः सम्पद्यते । परं तदानीं प्रथमः अराजनीतिज्ञः सिद्ध्यति । अतः कथमपि एक एव राजनीतिज्ञो भवितुमर्हति ।

२—सर्वश्री मोहनरामः, श्रीमती सुषमा, कुमारी सरोजनी, श्री प्रवीणः तथा कुमारी विजया एकस्याः संस्थायाः सदस्या सन्ति । प्रबन्धकः, सहायकप्रबन्धकः, कोषाध्यक्षः, आशुलिपिकः, द्रव्यगणकः, लिपिकश्चेत्येतानि तेषां पदानि सन्ति यानि क्रमानुसारं न वर्तन्ते । सहायकप्रबन्धकः प्रबन्धकस्य दौहित्रः अस्ति । कोषाध्यक्षः आशुलिपिकस्य जामाता वर्तते । श्रीमोहनः अविवाहितोऽस्ति । श्रीरामः २२ वर्षीयो विद्यते । कुमारी सरोजिनी द्रव्यगणकस्य सापन्त्य ( सौतेली ) भगिनी वर्तते । तथा श्री प्रवीणः प्रबन्धकस्य निकटवास्तव्यः ( पडोसी ) अस्ति । एवं स्थितिरस्ति ।

कः कस्मिन् पदे विद्यते ?

( क्रमशः )

# जन-जन के द्वार पर लोकतंत्र

पंचायती राज...... ऐसी क्रांति है जो लोकतंत्र को करोड़ों भारतीयों के द्वार तक ले जाएगी। यह एक ऐसी क्रांति है जो विकास की ज्योति को हमारे लाखों गांवों तक पहुँचाएगी। यह ऐसी क्रांति है जो अनुसूचितजातियों तथा अनुसूचितजनजातियों के लाखों लोगों और हमारे देश की आधी जनसंख्या अर्थात् भारतीय महिलाओं के लिए नए अवसरों के द्वार खोल देगी। यह वह क्रांति है जो लोगों को उनके अपने विकास में शामिल करेगी।

—राजीव गांधी

स्वतन्त्रता दिवस उत्तर-प्रदेश के लिए आशा और विश्वास का नया वातावरण लाया। लोकतांत्रिक संस्थाओं की पुर्नस्थापना से समाज में नयी चेतना जागी। प्रधानमंत्री, श्री राजीव गांधी के प्रेरणादायक मार्ग दर्शन तथा मुख्यमंत्री, श्री नारायण दत्त तिवारी के गतिशील नेतृत्व में विकास के नये आयाम स्थापित किये गये। पंचायती राज और जवाहर रोजगार योजना के जरिये गाँवों में क्रांति लाने का निर्णय लिया गया है—

* जवाहर रोजगार योजना के अर्न्तगत ग्रामसभाओं को अनुदान की कुल २०४.१४ करोड़ रु० राशि आवंटित।
* पहली बार महिलाओं को जन-प्रतिनिधित्व के लिए ३० प्रतिशत आरक्षण की व्यवस्था।
* राज्याधीन सेवाओं में पिछड़े वर्गों को १५ प्रतिशत आरक्षण सुनिश्चित करने के निर्देश।
* ग्राम पंचायतों, ब्लाकों, जिला परिषदों, नगरपालिकाओं का चुनाव कराके लोकतंत्र की पुर्नस्थापना।
* आजादी के बाद पहली बार १८ वर्षीय युवकों द्वारा स्थानीय निकायों के चुनाव में मताधिकार के प्रयोग का अवसर।
* बीस-सूत्री कार्यक्रम के कार्यान्वयन में चौथी बार प्रथम स्थान। उपलब्धि ८९.४ से ८२०.४ प्रतिशत तक।
* ग्रामसभाओं को मालगुजारी वसूलने का अधिकार।
* वित्तीय संस्थाओं से २५०० करोड़ रुपये जुटाने तथा ९४४ करोड़ रुपये बिक्रीकर से वसूलने में सफलता।
* ३६३ लाख मीट्रिक टन खाद्यान्न उत्पादन का लक्ष्य निर्धारित।
* भूमि संरक्षण कार्यों के लिए अब लघु एवं सीमान्त किसानों को कोई शुल्क देय नहीं। छः हजार किसान लाभान्वित।
* पूरे राज्य में गन्ने का एक समान मूल्य।
* छः लाख हेक्टेयर क्षेत्र के लिए अतिरिक्त सिंचन क्षमता सृजित।
* चौथी पंचवर्षीय योजना के चौथे वर्ष में औद्योगिक क्षेत्र की वृद्धि दर में १२.५ प्रतिशत की उल्लेखनीय वृद्धि।
* पर्वतीय क्षेत्र में विकास कार्यों को तेजी से लागू करने के लिए अलमोड़ा (कुमायूँ) तथा श्रीनगर (गढ़वाल) में क्षेत्रीय कार्यालयों की स्थापना।
* ग्रामीण आवास योजना के अर्न्तगत दो दिन में एक मकान बनाने का कीर्तिमान स्थापित।
* अनुसूचित जाति के लोगों तथा खेतिहर मजदूरों को गांव-सभा की आवंटित भूमि पर वास्तविक कब्जा दिलाने के लिए ९० दिन का राज्यव्यापी सफल अभियान।
* राजकीय सेवाओं और सार्वजनिक उपक्रमों में अल्पसंख्यकों का प्रतिनिधित्व सुनिश्चित करने के लिए चयन समितियों में इन वर्गों का एक प्रतिनिधि शामिल करने की व्यवस्था।

**सूचना एवं जन सम्पर्क विभाग, उत्तर-प्रदेश।**

# प्रतिष्ठानस्य विहारशाखया प्रशिक्षणशिविरायोजनम्

विश्वसंस्कृतप्रतिष्ठानस्य विहारशाखायाः चत्वारः प्रचारकाः—सर्वश्रीमिथिलेश झा, मुकेशकुमार ओझा, अनिलकुमारसिंहः, अनिलकुमार चौबे च राँची नगरे पञ्चसंस्कृतप्रशिक्षणशिविराणि विश्वसंस्कृतप्रतिष्ठानस्य तत्त्वावधाने समायोजितवन्तः। शिविराणां सञ्चालनं १५-६-८९ तः २४-६-८९ पर्यन्तम् निम्नलिखित-स्थानेषु अभवत्।

१—सरस्वती शिशुमन्दिर (धुर्वा), छात्रसंख्या—३५
आयोजकः—श्री भुवनेश्वर उपाध्यायः

२—डोरण्डा बालिका महाविद्यालयः, छात्रसंख्या—९५
आयोजिका—श्रीमती गीताचक्रवर्ती
प्राचार्या—डोरण्डाबालिका मध्यविद्यालय डोरण्डा, राँची।

३—डोरण्डा बालिका उच्चविद्यालय, छात्रसंख्या—८०
आयोजिका—श्रीमती चित्रलेखागुप्ता
प्राचार्या—डोरण्डा बालिका उच्चविद्यालय (बाँग्ला) डोरण्डा, राँची।

४—न्यू ए० जी० कालोनी, छात्रसंख्या—३०
आयोजकः—श्री शालिग्राम ओझा

५—सेक्टर-२, छात्रसंख्या—२५
आयोजिका—श्रीमती योजनगन्धा

एषां समेषामपि शिविराणां समापनं डोरण्डा-बालिकाविद्यालयस्य विशालभवने २४ दिनांके अभवत्। समारोहेऽस्मिन् ५०० जनाः उपस्थिता आसन्।

एषु शिविरेषु संस्कृतप्रशिक्षणं निःशुल्कतया अभवत्। अन्तिमदिने सर्वेषां प्रमाणपत्रमप्यावंटितम्।

प्रशिक्षणं प्रतिदिनं २ घटापर्यन्तं भवति स्म। अस्य कार्यक्रमस्य विवरणं वृत्तपत्रेषु विस्तृततया गृहीतम्।



श्रीराजेन्द्रप्रसादः जनगामशिविरे घटिकायन्त्रादिनित्योपयोगिवस्तुप्रदर्शनमाध्यमेन संस्कृतं शिक्षयति।

# यह वर्ष—आपका वर्ष

उत्तर-प्रदेश सरकार ने भू-राजस्व का हस्तान्तरण पंचायतों को कर एक ऐतिहासिक कदम उठाया है……और पूरे देश को एक रास्ता दिखाया है। —प्रधानमंत्री

उत्तर-प्रदेश में एक नया माहौल बना है, नयी दिशाएँ खुली हैं और नयी मंजिलों की ओर हमारे विश्वसनीय कदम बढ़े हैं। गरीब व पिछड़े वर्गों ने विकास के इस नये प्रभाव को अनुभव किया और जनता ने सत्ता को अपने निकट पाया। इस माहौल में एक नयी कार्य संस्कृति ने जन्म लिया। यह सम्भव हुआ प्रधान मंत्री श्री राजीव गाँधी के कुशल मार्गदर्शन और इस विशाल प्रदेश के अनुभवी तथा कल्पनाशील मुख्यमंत्री श्री नारायण दत्त तिवारी के कुशल नेतृत्व में यह वर्ष उपलब्धियों तथा प्रभावी कदमों के सफलता की कहानी है जिसका सार है :—

★ लम्बी अवधि के बाद प्रजातान्त्रिक पद्धति से ग्राम सभाओं, स्थानीय निकायों, विकासखण्डों तथा जिला परिषदों के चुनाव सम्पन्न हुए और जन-प्रतिनिधियों ने संचालन की बागडोर सम्भाली।

★ गाँवों के सामाजिक आर्थिक स्वरूप को बदलने के लिए १७७० करोड़ रुपये का प्रविधान।

★ ग्रामों का २८.३० करोड़ रुपये वार्षिक का भू-राजस्व पंचायतों को ही दिये जाने का अभूतपूर्व तथा अनुकरणीय निर्णय।

★ ग्रामीण आवास योजना के अन्तर्गत एक वर्ष में दो लाख आवासीय इकाइयों का निर्माण पूर्ण। इन्दिरा आवास योजना में भी २३०७१ आवासों का निर्माण।

★ प्रधानमंत्री द्वारा घोषित जवाहर रोजगार योजना को लागू करने के लिए प्रभावी कदम।

★ खाद्यान्न उत्पादन में अभूतपूर्व उपलब्धि की आशा। गत वर्ष की तुलना में २९ लाख टन अधिक उत्पादन होने का अनुमान। बीज वितरण के लिए सहकारी संस्थाओं तथा यू० पी० एग्रो के सहयोग स १०,००० बिक्री-केन्द्रों की स्थापना। उर्वरकों की खपत पिछले वर्ष २१.३६ लाख मी० टन, जिसे इस वर्ष २७ लाख मी० टन किया जायेगा।

★ बीस सूत्री कार्यक्रम में उत्तर-प्रदेश को चौथी बार देश में प्रथम होने का श्रेय। २३१५० लघु औद्योगिक इकाइयों की स्थापना, ६४०८ एकड़ भूमि वितरित, अनुसूचित जाति के ३.७० लाख परिवारों को आर्थिक सहायता, २,७७७ ग्रामों का विद्युतीकरण तथा ३०,३०१ पम्प सेटों का ऊर्जीकरण, ७,३७० गाँवों को पेयजल की सुविधा।

★ आवंटित भूमि पर कब्जा दिलाने के लिए नब्बे दिन का राज्यव्यापी अभियान प्रगति पर।

★ ५० जिला मुख्यालयों की सड़कों का हाट मिक्स तकनीक से सुधार।

★ पूरे प्रदेश में गन्ने की दरों में एकरूपता स्थापित। सामान्य श्रेणी के गन्ने की दर ३० रु० प्रति कुन्टल तथा समुन्नत गन्ने की ३४ रुपया प्रति कुन्टल निर्धारित। "गन्ना विकास निधि" की उत्तर-प्रदेश में पहली बार स्थापना।

★ प्रत्येक जिले में अल्पसंख्यकों के कल्याण के लिए एक-एक करोड़ की योजनाएँ तैयार करने के निर्देश।

★ सातवीं तथा आठवीं कक्षाओं के लिए १३.७७ लाख बालकों को शिक्षा निःशुल्क।

★ खेतिहर मजदूरों, रिक्शाचालकों, हथकरघा बुनकरों, निजी ड्राइवरों, इक्के-ताँगे वालों, दस्तकारों तथा वनश्रमिकों के लिए कल्याणकारी सामाजिक सुरक्षा योजनाएँ क्रियान्वित।

★ पूर्वांचल में "नोयडा" के अनुरूप औद्योगिक प्राधिकरण स्थापित करने का महत्वपूर्ण निर्णय।

★ नये उद्योगों के प्रोत्साहन हेतु १० करोड़ रुपये की "उद्यमिता निधि" की स्थापना।

★ महिलाओं के उत्थान के लिए महिला कल्याण निगम तथा पिछड़े वर्गों के लिए पिछड़ा वर्ग वित्तीय तथा विकास निगम गठित।

**सूचना एवं जनसम्पर्क विभाग, उत्तर-प्रदेश**

## आन्ध्रशाखायाः गतिविधिः

विश्वसंस्कृतप्रतिष्ठानस्य तत्त्वावधाने निगत २८-५-८९ तः ६-६-८९ पर्यन्तं प्रतिष्ठानस्य आन्ध्रप्रदेश-शाखाया आयोजकत्वे केन्द्रीयसंस्कृतप्रचारकेण श्री राजेन्द्रप्रसादमहोदयेन एकं संस्कृतप्रशिक्षणशिविरं वरङ्गलमण्डले जनगामनगरे समायोजितम्। शिविरेऽस्मिन् विविधां नवीनां प्रशिक्षणसरणिमाश्रित्य श्री राजेन्द्रमहोदयेन प्रशिक्षणं दत्तम्। अस्य प्रयोगस्य बहुभिः विशिष्टैर्जनैः प्रशंसा कृता। (द्रष्टव्यः)—

इति दिनाङ्कस्य Indian Express इति नामके वृत्तपत्रे "A mobile Sanskrit Guru" इति लेखः।

## केन्द्रीयसमित्याः गोष्ठी

विश्वसंस्कृतप्रतिष्ठानस्य केन्द्रीयसमित्याः गोष्ठी १५-७-८९ दिनांके वाराणसीस्थ नदेसरपैलस इति स्थाने संजाता। एषा गोष्ठी प्रतिष्ठानाध्यक्षाणां श्री ५ काशिराजमहाभागानामध्यक्षतायां सम्पन्ना। मङ्गलाचरणानन्तरं प्रतिष्ठानस्य महामन्त्रिणः श्रीदेवदत्तमहोदयस्य विवरण ( Report ) प्रस्तुतिद्वारा सभा आरब्धा। अत्र पारितेषु विविधेषु प्रस्तावेषु मुख्योऽस्ति अगामि नवम्बर मासस्य ११-१२ दिनाङ्कयोः विश्वसंस्कृतप्रतिष्ठानस्य वार्षिकोत्सवस्यायोजनम्। अत्र विविधसांस्कृतिककार्यक्रमातिरिक्तं किञ्चिदन्यदायोजमपि भविष्यति। (प्रसिद्धविदुषः श्रीधरभास्करवर्णेकरमहाभागस्य प्रतिष्ठानपक्षतः तेषां संस्कृतसेवार्थम् अभिनन्दनम्। श्रीवर्णेकर-महोदयः विश्वविश्रुतः विविधः भाषाविज्ञः संस्कृतविद्वानस्ति। तेषां जीवनवृत्तं यथावसरं विश्वभाषायां प्रकाशयिष्यते।)



---

**स्त्रीजगत्**

## आर्द्रकप्रपाणकम्

—महाराज कुमारी कृष्णप्रिया

वस्तूनि—१. शर्करा १½ किलोमात्रम्।

आर्द्रकम्—५०० ग्राममात्रम्।

साइट्रिकः एसिडः—चमसद्वयम्।

जलम्—१½ लीटरमात्रम्।

बोतलद्वयम्।

विधिः—आर्द्रकं उत्कृत्य शोधयेत् विश्लेषयेच्च। यन्त्रो वर्तते चेत् तर्हि तेन आर्द्रकस्वरसं निष्कासयेत्। शर्करायां जलं आर्द्रकस्वरसं विश्लिष्टं गूथं (गूदा) वा प्रक्षिप्य शर्करां द्रावयेत्। (जलस्य परिमाणं १०० मिली० मात्रं वर्धयेत्)। ३-४ मिनटम् यावत् पाचयेत्। ततः शर्कराद्रवे एसिडं प्रक्षिप्य सूक्ष्मवस्त्रात् निष्पादयेत्। द्रवं शीतलीकृत्य बोतले पूरयेत्। किन्तु बोतलस्य किञ्चित् स्थानं रिक्तमेव स्थापयेत्। प्रपाणकस्य एकं भागं पञ्चगुणितेन जलेन मेलयेत् शीतलीकरणानन्तरं प्रयोक्तव्यम्।



# कृपाचार्यस्योत्पत्तिः

श्री कृपासिन्धु शर्मा
(प्राचार्यः) ब्रह्मर्षि बलदेव संस्कृत विद्यालय, लक्ष्मीकुण्ड, वाराणसी

[महाभारतस्य कथाप्रसङ्गे कृपाचार्यस्य नाम विदितमेव, किन्तु तस्योत्पत्तिरहस्यं लोके अप्रसिद्धः। महाभारतानुसारं रहस्योद्घाटनम् अत्र द्रष्टव्यम्।]

महर्षेः गौतमस्य पुत्र शरद्वान् आसीत्। सः शरैः सह जन्म लेभे। अतएव शरद्वान् इति उच्यते स्म। सः धनुर्वेदे यथा बद्धादरः न तथा वेदाभ्यासे। तपसा तेन अस्त्राणि-शस्त्राणि च अधिगतानि। तस्य तपः, धनुर्वेदनिपुणतां च दृष्ट्वा इन्द्रः अबिभ्यत्। तपो विघ्नार्थम् इन्द्रेण जानपदी नाम्नी काचित् रमणी प्रेषिता। तया च आश्रमं गत्वा बहुभिः भावैः शरद्वान् प्रलोभितः। तां रमणीं दृष्ट्वा शरद्वान् चकम्पे। तस्य हस्ताद् बाणानि पतितानि। यतः स विवेकी तपस्वी च आसीत् अतः धैर्येण तेन स्वीयं मनः दमितम्। यतः तस्य मनसि विकारलेशः जातः अतः तस्य वीर्यं स्खलितम्। स धनुर्बाणादीनि परित्यज्य तत् स्थानं त्यक्त्वा अन्यत्र जगाम। यतस्तद् वीर्यं शरेषु पतितम् अतः तद् द्विधा विभक्तं जातम्। ततश्च एका कन्या एकश्च पुत्रः जातौ।

दैववशात् राजर्षिः शान्तनुः मृगयार्थं तत्र गतवान् आसीत्। राज्ञः अनुचरस्य दृष्टिः शिश्वोः उपरि पतिता। राजानं च तेन विषये अस्मिन् सूचिता। कृपापरवशेन राज्ञा तौ द्वौ शिशू पालनार्थं रक्षितौ, स्वगृहं च आनीतौ। यथोचितं संस्कारश्च कृतः। बालकस्य नाम 'कृप' इति बालायाः 'कृपी' इति दत्तम्।

तपोबलेन यदा शरद्वता इदं सर्वं रहस्यं ज्ञातं तदा सः शान्तनोः सकाशम् आजगाम। शिशुद्वय-नामगोत्रादिकम् उक्तवान् च। कृपं च विविध शस्त्र-शास्त्राणि शिक्षयामास। अल्पेनैव कालेन कृपः बहुशस्त्र-शास्त्रविशेषज्ञः सम्पन्नः, 'कृपाचार्य' इति संज्ञया विख्यातो बभूव। ततश्च कौरवपाण्डवयादवादीन् धनुर्वेदस्य अभ्यासं कारितवान्।

---

# शुकनासोपदेशः

—चौ० श्रीनारायणसिंहः

( गताङ्कादनुवर्तते )

प्रतीयते यत् विश्वरूपं धारणार्थं लक्ष्मी विराड्-रूपिणं नारायणम् आश्रयति। अविश्वसनीयस्वभावा इयं लक्ष्मी विस्तृतसैन्यकोशराज्यवन्तं राजानं तथैव जहाति यथा सायङ्काले कमलं स्वकीयं प्रवृद्धं मूलदण्ड-कोशसौन्दर्यं परित्यजति। यथा लता क्षुद्रवृक्षान् आवेष्टयति तथैव लक्ष्मी प्रायः क्षुद्रजनान् आलिङ्गयति। यथा वसूनां प्रसवित्री तरङ्गबुद्बुदसङ्कीर्णा गङ्गा चञ्चला भवति तथैव सम्पत्तिप्रसविनी लक्ष्मी सर्वथा अस्थिरा दृश्यते। यथा सूर्यस्य गतिः अनेकराशिषु दृश्यते तथैव लक्ष्मी अपि अनेकव्यक्तिषु सञ्चरणं करोति। सघनान्धकारपूर्वं पातालगह्वरम् इव इयं लक्ष्मी तमोगुणप्रधाना भवति। यथा हिडिम्बा राक्षसी साहसिके भीमसेने स्नेहम् अकरोत् तथैव इयं लक्ष्मी साहसिके पुरुषे अनुरागं करोति। वर्षाकाले यथा क्षणमात्रं विद्युत्प्रकाशः दृश्यते तथैव लक्ष्मी स्वल्पकालस्थायिनीं चाकचिक्यतां प्रदर्शयति। यथा पिशाची अनेकपुरुषप्रमाणकम् औन्नत्यं दर्शयित्वा-कापुरुषान् भीषयति तथा इयं लक्ष्मी अनेकपुरुषाणाम् ऐश्वर्य-प्रदर्शनेन क्षुद्रजनेषु उन्मादं जनयति। यथा लक्ष्मी सरस्वतीपरिगृहीतं विधिं न आश्रयति तथैव लक्ष्मी विद्यासम्पन्नं विद्वांसं न परिगृह्णाति। सज्जनाः यथा अपवित्रं पदार्थं न स्पृशन्ति तथैव लक्ष्मी गुणवन्तं जनं न आश्रयति। यथा लोकः अमङ्गलं पदार्थम् अवहेलयति तथैव लक्ष्मी उदारसत्वं जनम् उपेक्षते। इयं लक्ष्मी सुजनं अपशकुनमिव पश्यति। इयं सुकुलीनं जनं अहिमिव परित्यजति। यथा लोकः कण्टकं दूरतस्त्यजति तथैव इयं शूरं पुरुषं परित्यजति। यथा जनाः दुःस्वप्नान् न स्मरन्ति तथैव इयं दानशीलं जनं प्रायः विस्मरति। यथा लोकः पातकिना संसर्गं न करोति तथैव इयं विनीतं जनं न स्पृशति। यथा लोकः उन्मत्तानाम् उपहासं करोति तथैव इयं मन-स्विनं जनं उपहसति। ( क्रमशः )

सांसारिकजीवनस्य सुख-दुःखानाम् अनुभवाः तैः यथेष्टं गृहीताः । ततः च -

अधुना अहं सरस्वतीसमीपे गमिष्यामि मण्डनमिश्रेण सह शास्त्रार्थं करिष्यामि।

अतः श्रीशंकरात्मा राजशरीरं त्यक्त्वा -



....स्वशरीरे प्रत्यागतः ।

भवता भक्तिपूर्वकं सेवा कृता। एतदर्थं च फलं प्राप्यते।

श्रीशंकराचार्यः पद्मपादं तत्र संस्थाप्य मण्डनमिश्रसमीपे प्राप्ताः ।



उभययोः शास्त्रार्थस्य व्यवस्था सम्पन्ना।




शास्त्रार्थः बहुदिनानि यावत् प्राचलत्। तत्र...




तत्क्षणे एव मण्डनस्य पुष्पाणि म्लानानि जातानि।
संन्यासिन्, त्वया विजयः प्राप्तः। अहं तव शिष्यत्व स्वीकरोमि।


मण्डनाय दीक्षा दत्ता।
अधुना तव नाम सुरेश्वराचार्यः।


सुरेश्वराचार्येण सरस्वत्या च सह श्रीशंकराचार्याः दक्षिणं प्रस्थिताः मार्गस्थेषु सर्वतीर्थक्षेत्रेषु निवसन्तः निवसन्तः ...


... ते गोकर्णम् आगताः। धनी मानी च नागरिकः स्वपुत्रं शंकरं तेषां समीपे आनीतवान्।
अयं मूकः भ्रमिष्ठः च। एषः निरोगतां नेतव्यः।

श्रीशंकरैः पुत्राय आशीर्वादः दत्तः। ततः च सः वदति। सर्वे आश्चर्य-चकिताः जाताः। सः अवदत्...




श्रीशंकरैः तस्मै दीक्षा दत्ता।




श्रीशंकराचार्याः ततः शृंगेरीं प्राप्ताः। तत्र श्रीशारदापीठस्य स्थापना कृता तैः। तत्र व्यासपदे सुरेश्वराचार्यः नियुक्तः।




श्रीशंकराः कतिपय-मासान् तत्र व्यतीत-वन्तः। तत्रैव एकदिने मातुः स्मरणम्-




तदा कालडीतः केचित् संन्यासिनः तेषां समीपे आगताः।



मातुः समीपं गत्वा श्रीशंकरैः ज्ञानोपदेशः कृतः। शान्तिपूर्वकं च तया शरीरत्यागः कृतः।



तस्याः अन्त्यक्रियाकर्मार्थं श्रीशंकरैः गैरिकवस्त्राणि निष्कासितानि, तथा दण्डः कमण्डलुः च अन्यत्र स्थापितौ।



परन्तु यदा ते यत्र मातुः शवः आसीत् तस्मिन् कोष्ठे गताः तदा -




रूढिवादिनः नम्बुद्रिब्राह्मणाः विमुखाः अभवन्।



परन्तु श्रीशंकराः न विचलिताः। तैः शवम् उद्यानस्य एकस्मिन् कोणे नीत्वा रम्भाफलवृक्षैः दाह-संस्कारः कृतः। अनन्तरं नम्बुद्रि-ब्राह्मणैः बहु-पश्चात्तापः कृतः। श्रीशंकरमातृप्रेमविषये साधुवादाः च प्रवृत्ताः।



मातुः स्वर्गवासान्ते पुनः द्विवारं भारतभ्रमण श्रीशंकरैः कृतम्। प्रथमतः तैः पश्चिमदिग्विभागे द्वारिका इत्यत्र मठस्थापना कृता। तत्र च व्यासपदे हस्तामलकाचार्यः नियुक्तः। तथा च पूर्वदिग्विभागे पुरी इत्यत्र मठस्थापना कृता। तत्र च पद्मपादः व्यासपदे नियुक्तः। कांची, पशुपतिनाथ तथा च अन्यनगरेषु अपि तैः मन्दिराणाम् आश्रमाणां च प्रतिष्ठापना कृता।





आसाम, नेपाल, काश्मीर, तिब्बत, बैक्ट्रिया चेति नगरेषु अपि ते गताः। यत्र यत्र ते गताः तत्र तत्र नृपैः विद्वद्भिः च ते सम्मानिताः। श्रीनगरे एकस्याः विदुष्याः मस्तकोपरि तरंग इति शिरोवस्त्रविशेषं प्रावार्य तस्याः सम्मानः तैः कृतः। अद्यापि श्रीनगरे तरंग इति शिरोवस्त्रविशेषं विद्वत्तायाः प्रतीकं मन्यते।




तेषां एकशिष्येण शिव सोमेन- अयं कम्बोज राज जयराम द्वितीयस्य भ्रातृव्यः आसीत्- आचार्याणां मतस्य दक्षिण-पूर्वेशियाविभागे प्रचारः कृतः।




मानवसमाजस्य बन्धुत्व-भावस्य तथा च सत्यस्य ऐक्य-विषये तेषां मान्यता अद्यापि जीवति प्राणवती चास्ति। भारतीयसंस्कृतेः अग्रदूताः रामकृष्ण परमहंसः विवेकानन्दः, श्रीअरविन्दः, रमणमहर्षिः, गुरुनानकः त्यागराजः एवं महात्मगान्धिः एतादृशां उन्नायकानां माध्यमेन भारतीय-संस्कृतिः निरन्तरं प्रकाशमाना विद्यते।

## श्रीशंकराचार्याणाम् उक्तयः
### (वचनानि)

तमसि यथा रज्जुखण्डः एव सर्पः शुक्तिः च रूप्यं भाति तथा अज्ञानी मनुष्यः शरीरमेव आत्मानं मन्यते।

ब्रह्मणा सह स्वस्य एकरूपतां ज्ञात्वा एव मुक्तिं प्राप्तुं शक्यते। सा मुक्तिः न योगेन, न दर्शनेन, न ज्ञानेन, न कर्मणा, न अन्येन च केनापि साधनेन साध्यते।

मनः आदर्शवत् शुद्धं भवति तदा तत्र ज्ञानं प्रकटं भवति। अतः सावधानेन मनः शुद्धं करणीयम्।

संसारः रागद्वेषैः भरितः। स्वप्नवदेव च सः। यावद् अज्ञानं तिष्ठति तावत् तद्ज्ञानं सत्यमेव भाति। परं नेत्रोन्मीलनेन तस्य अज्ञानस्य निस्सारता प्रकटीभवति।

आत्मा शरीरस्य शासकः आन्तरिकश्च। शरीरं शासितं बाह्यं च। तथापि मनुष्यः तत्र एकतामेव मन्यते। अतः अस्य नाम अज्ञानं विना अन्यत् किं भवति?

कतिपयाः आत्मानः शुद्धाः शान्ताः उदाराः च भवन्ति, ये निर्झरवद् अत्यहितकारिणः। ये स्वयं जन्ममृत्युसागरम् उत्तीर्य निःस्वार्थभावेन परान् पारं कर्तुं सहायतां कुर्वन्ति।

पितुः ऋणं तस्य पुत्रः अन्यसम्बन्धिनः च प्रत्यर्पयन्ति परन्तु तस्य स्वबन्धनानि तं कृन्तन्ति।

यदि विष्णुलोकं प्राप्तुम् इच्छन्ति तर्हि मित्रस्य, शत्रोः पुत्रस्य, सम्बन्धिनः च मोहं न कुर्वन्तु। न शान्तिः न युद्धम् अपि। सर्वत्र समदर्शिनः भवन्तु।

# SCIENCE





# ANIMAL LIFE



# HUMOUR



# MYTHS



# PUZZLES



**KALIA THE CROW**




**You get it all in**

# TINKLE

**—The all-comics children's fortnightly**

Distribu
India Book



## सादरं समीहताम्

सादरं समीहतां वन्दना विधीयताम् ।
श्रद्धया स्वमातृभूःसमर्चना विधीयताम् ॥
आपदो भवन्तु वा
विद्युतो लसन्तु वा ।
आयुधानि भूरिशोऽपि
मस्तके पतन्तु वा ॥
धीरता न हीयतां वीरता विधीयताम् ।
निर्भयेन चेतसा पदं पुरो निधीयताम् ॥ सादरं .... ॥
प्राणदायिनी इयं
त्राणदायिनी इयम् ।
शक्तिमुक्तिभुक्तिदा
सुधाप्रदायिनी इयम् ॥
एतदीयवन्दने सेवनेऽभिनन्दने
स्वाभिमानमात्म[illegible] [illegible] [illegible]यताम् ॥ सादरं .... ॥

श्री वासुदेव द्विवेदी शास्त्री



तृतीयवर्षस्य तृतीयाङ्कः दीपमालिकाङ्कः २९ अक्टूबर १९८९



# विश्वभाषा

# VISHVABHASHA

अन्ताराष्ट्रिया त्रैमासिको संस्कृत-पत्रिका International Sanskrit Quarterly

# जवाहरतरङ्गिणीम् अधिकृत्य
## पं० जवाहरलालनेहरुमहाभागानाम् अभिप्रायः

मनाली
कुलु–पंजाब
१८–६–१९५८

प्रिय श्री वर्णेकरजी

आपका पत्र मुझे मिला और उसके साथ कविता की पुस्तक-जवाहरतरङ्गिणी भी मिला-धन्यवाद. आपकी पुस्तक को मैंने पढ़ा—मैं संस्कृत इतनी अधिक नहीं जानता कि उसको अच्छी तरह समझ सकूं। बचपन में कुछ संस्कृत पढ़ी थी. फिर दुर्भाग्य से उसका पढ़ना छूट गया और मैं विदेश चला गया। अकसर मेरी इच्छा हुई कि फिरसे उसके पढ़ने में कुछ समय दूं लेकिन बहुत कामों में फंसा रहा. जो बचपन में कुछ पढ़ा भी उससे अब भी कुछ समझ में सहायता मिल जाती है। इससे कुछ आपकी कविता को समझा और उसको बहुत सुन्दर पाया।

लेकिम आपसे एक शिकायत है। आपने जिस तरह मेरा चर्चा किया है उससे मुझे बहुत लज्जा आई। मैं जानता हूँ कि कविता में बातें बढ़ा कर कही जाती हैं लेकिन वह समय अब नहीं रहा और किसी व्यक्ति की बहुत प्रशंसा करना न उसके लिये और न जनता के लिये अच्छा होता है। मेरा यह कहना आप माफ करेंगे।

मुझे इस बात की खुशी है कि हमारी प्राचीन भाषा संस्कृत आजकल भी इतनी जीवित है और उसके सेवक आप ऐसे कवि और आचार्य हैं.

फिरसे आपको बहुत धन्यवाद.

आपका
जवाहरलाल नेहरु






शुल्कविवरणम्

आजीवन सदस्यता—

| | |
|---|---|
| शुल्कम् | १५०-०० |
| वार्षिकशुल्कम् | १५-०० |
| प्रत्यङ्कमूल्यम् | ५-०० |

मुद्रणस्थलम्

तारा प्रिंटिंग वर्क्स

कमच्छा, वाराणसी—२२१०१०

विश्वसंस्कृतप्रतिष्ठानम् तस्य मुखपत्रम्

# विश्वभाषा

VISHVABHASHA

अन्ताराष्ट्रिया त्रैमासिकी संस्कृतपत्रिका

तृतीयवर्षस्य तृतीयोऽङ्कः दीपमालिकाऽङ्कः

## वेदवाणी

महर्षि-श्रीअरविन्दविरचित-अग्निमन्त्रमालातः

अ॒ग्निमी॑ळे पु॒रोहि॑तं य॒ज्ञस्य॑ दे॒वमृ॒त्विज॑म् ।
होता॑रं रत्न॒धात॑मम् ॥१॥ ऋग्वेदः, मण्डलम् १, सूक्तम् १ ।

### पदविन्यासः

१ अ॒ग्निम् । २ ई॒ळे॒ । ३ पु॒रः-हि॑तम् । ४ य॒ज्ञस्य॑ । ५ दे॒वम् । ६ ऋ॒त्विज॑म् । ७ होता॑रम् । ८ र॒त्न॒-धात॑मम् ।

### व्याख्या

१ दिव्याग्निम् । २ उपासे । अहमन्तर्यजमानस्य इति शेषः । कीदृशमग्निम् ? ३ अन्तर्यज्ञस्य । ४ पुरोहितम् । तस्य यज्ञस्य । ५ दिव्यं देवभूतं वा । ऋत्विजम् । ८ रत्नस्य आनन्दैश्वर्यस्य अतिशयेन आधायकं प्रतिष्ठापकम्, यद्वा आनन्दैश्वर्यस्य विधाने श्रेष्ठम् । ९ देवानाम् आह्वातारम्, आह्वानपूर्वकं होमनिष्पादकञ्च । अग्निदेवम् ईळे इति सम्बन्धः ।

# अस्मिन् अङ्के



**अस्मिन् अङ्के डॉ० श्री० भा० वर्णेकरविषये अधिकतया लेखानां प्रकाशितत्वात् केचन स्थायि-स्तम्भाः अमरचित्रकथा च न प्रदत्ताः। क्षम्यताम्। अग्रिमाङ्कतः यथापूर्वं पत्रिका प्रकाशयिष्यते। अग्रिमा चित्रकथा विक्रमादित्यस्य—सं०**

# सम्पादकीयम्

अयं दीपावली–अङ्कः । दीपावलिः इति उत्सवविशेषः । उत्सवः नाम आनन्दः । दीपावलि-उत्सवे तु विशेषः आनन्दः । आनन्दप्रदर्शनस्य प्रतीकरूपेण एव दीपमालाः प्रकाश्यन्ते । आकाशे अपि दीपाः । सर्वत्र दीपाः एव दीपाः । अनेन घनान्धकारे अपि प्रकाशः ।

अन्धकारः नाम अज्ञानम् । प्रकाशः नाम ज्ञानम् इत्यपि बोधः गृह्यते । तथा 'तमसो मा ज्योतिर्गमय ।' इति प्रार्थना अपि वैदिककालतः एव प्रार्थ्यते । तथापि अद्यापि अज्ञानम् अस्ति एव ।

संस्कृतविषये अज्ञानतमः अद्यापि सर्वत्र विराजते । अशिक्षिताः प्रायः अज्ञानिनः एव, सुशिक्षिताः तु ज्ञानिनः इति मन्यते । परन्तु संस्कृतविषये बहुविधसुशिक्षितानामपि अज्ञानं वर्तते इति दृश्यते । प्रायः संस्कृताज्ञानतमोग्रस्तता एव अनुभवपथम् आयान्ति । एतादृशी स्थितिः पारतन्त्र्यकाले आसीत् इति कथने न विशेषः । परं स्वातन्त्र्यप्राप्तेः अनन्तरमपि एतादृशी स्थितिः दृश्यते इति विशेष एव । पुनश्च पारतन्त्र्यकालतः स्वातन्त्र्यकाले अपि एतद् अज्ञानस्य अभिवृद्धिः एव जाता इति दृश्यते । अनेन अज्ञानेन एव संस्कृतभाषा मृता इत्यपि विचारः मण्ड्यते । संस्कृतभाषायाम् अद्यापि वेदाः सन्ति, उपनिषदः वर्तन्ते, ब्राह्मण-आरण्यक-पुराणादयः ग्रन्थाः विलसन्ति, लघुकाव्य-खण्डकाव्य-महाकाव्य-नाट्य-शास्त्र-टीकाग्रन्थादयः अपि विराजन्ते । यथा न्यायादिशास्त्राणि तथैव च संस्कृतभाषायां भौतिकादिशास्त्राणि अपि । स्वतन्त्रभारतस्य संविधाने अपि संस्कृतभाषायाः समावेशः वर्तते । आर्थिकविनिमयार्थं 'नोट' इति प्रचलति । अस्य नोटस्य उपरि अपि, एक-रूप्यकं, द्वे रूप्यके पञ्चरूप्यकाणि इत्यादि लेखनं संस्कृतभाषायाः व्यवहारतामेव सूचयति । पुनश्च बहुविधानि नियतकलिकानि अपि नियमितं प्रकाश्यन्ते । विवाहसदृशशुभकार्यस्य निमन्त्रणपत्राणि अपि संस्कृत-भाषायां मुद्रितानि वीतीर्णानि च भवन्ति । तथा विविधाः संस्कृतसंस्थाः अपि विद्यन्ते । भारतस्य संसदि, विधानसभायां विधानपरिषदि च संस्कृतमाध्यमेन केषाञ्चन शपथग्रहणमपि भवति । 'सत्यमेव जयते' सदृशानि बोधवाक्यानि अपि सर्वत्र समायोज्यन्ते । एतत्सर्वं प्रत्यक्षीकृत्य अपि ये 'संस्कृतभाषा मृता' इति वदन्ति ते एव मृताः स्युः अथवा एतेषां बुद्धिः मृता स्याद् इति एव कथनं समर्पकं भवति ।

'पुनश्च जगन्नाथान्तं संस्कृतम्' इत्यपि केषाञ्चन कथनं चलति । परन्तु स्वयं संस्कृतधीः तथा न कथयति । जगन्नाथानन्तरम् अपि संस्कृतं वर्तते चलति च । तथा संस्कृतमहाकाव्यादिरचना अद्यापि कृयते । तेषु एकतमः प्रायः अनन्यतमः डॉ० श्रीधरभास्करवर्णेकरः । अयं संस्कृतस्य सिद्धहस्तलेखकः प्रतिभासम्पन्नः कविः अपि । अस्य विषये एव एतस्मिन् अङ्के विशेषाः लेखाः । एतेषां लेखानां पठनेन डॉ० श्री०भास्करवर्णेकरस्य यथार्थः परिचयः भवति ।

काव्यस्य विविधानि प्रयोजनानि 'काव्यप्रकाशः' इति ग्रन्थे मम्मटेन मण्डितानि । तद्यथा—

काव्यं यशसेऽर्थकृते व्यवहारविदे शिवेतरक्षतये ।
सद्यःपरनिर्वृतये कान्तासम्मिततयोपदेशयुजे ॥ १–२ ॥

तथापि अन्यप्रयोजनानि अपि भवितुमर्हन्ति एव इत्येतत् कथनं डॉ० भा० वर्णेकरस्य साहित्यं समर्थयति। यदा अनेन संस्कृतसाहित्यरचना समारब्धा तदा संस्कृतसाहित्यकारः निन्दायोग्यः एव। तथा च संस्कृतसाहित्येन अर्थलाभस्तु नैव। व्यवहारार्थमपि अनुपयुक्तम् एतत् साहित्यम्। शिवेतरक्षतिः अपि न सम्भवति। यतः आंग्लमाध्यमसाहित्येन पाश्चात्यानुकरणेन चैव सर्वं सम्भवेदिति रूढिः प्ररूढा। संस्कतमाध्यमेन उपदेशदाने उपदेशग्रहणे चापि असिद्धता। संस्कृतेन अत्र न सद्यः निर्वृतिः ततः परत्र निर्वृतिः कथम् ? इत्यपि प्रचारः। तथापि डॉ० श्री० भा० वर्णेकरेण मम्मटानुसारं किं प्रयोजनम् आश्रितम् ? अपि स्वात्मसुखाय वा स्वान्तः सुखाय वा ? नहि नहि। निर्वृतिः एव नास्ति ततः सुखं कथम् ? प्रायः संस्कृतश्रीः एव डॉ० श्री० भा० वर्णेकरस्य माध्यमं स्वीकृतवती स्यात्। अनेन एव माध्यमेन स्वस्य जागृतिः प्रकटिता स्यात्। एकदा डॉ० श्री० भा० वर्णेकरः एव अस्माभिः पृष्टः यत् सर्वविशिष्टगुणान्विता रचना कथं साध्या जाता ? तदा तेन उक्तम् 'मया अपि न ज्ञायते' इति। अतः संस्कृतश्रीरेव अत्र कारणम्।



वि० सं० प्रतिष्ठानस्य प्रयागस्थेऽधिवेशने भाषमाणाः श्रीवर्णेकराः। सभायां १०८ पेजावरमध्वाचार्य, डॉ० कर्णसिंहप्रभृतयः।

ये साहित्यिकाः प्रायः सङ्घटनकार्ये ते अरसिकाः एव। पर डॉ० श्री० भा० वर्णेकरः सङ्घटनकार्ये अपि रसिकः कुशलः च। 'विना सहकारं न हि उद्धारः' इत्यपि विचारः संस्कृतश्रिया एव तस्मै दत्तः स्यात्।

विश्वसंस्कतप्रतिष्ठानम्' इति संस्थानिर्माणे अपि प्रमुखतया अस्य एव विचाराः कारणीभूताः। तथा विश्वसंस्कृतप्रतिष्ठानस्य कृते प्रायः अनेन एव कार्यसमितिरचनाविषये पदाधिकारिनियुक्तिविषये चापि अधिकः रसः गृहीतः। अयमेव योजकः तद् यथा—

अमन्त्रमक्षरं नास्ति नास्ति मूलमनौषधम्।
अयोग्यः पुरुषो नास्ति योजकस्तत्र दुर्लभः॥

एवमयं दुर्लभः योजकः अपि। अतः एव अद्यापि विश्वसंस्कृतप्रतिष्ठानस्य कार्यम् अबाधितत्वेन चलति। वर्षदशकमपि समापयति। एतस्यां संस्थायाम् अयम् अद्यापि कस्मिन्नपि पदे नास्ति इति एतदपि अस्य कार्यवैशिष्ट्यम्। अतः एव आदरणीयं स्थानम्। अतः एव अस्य विषये विशेषाङ्कः।

गुलामदस्तगीरः

# महाकविः डॉ० श्री० भा० वर्णेकरः

—डॉ० रूपा कुलकर्णी
तिरुपति अपार्टमेन्टस्, रामनगर, नागपुरम्

अखिल भारतीयकीर्तेः प्रतीकः, संस्कृत-साहित्यिकः सिद्धहस्तः संस्कृतवक्ता तथा नागपुरविद्यापीठस्य संस्कृतविभागाध्यक्षः महाकविः डॉ० श्रीधरभास्करवर्णेकरमहाभागः संस्कृतसेवार्थं राष्ट्रपतिपुरस्कारेण सम्मानितः इति शुभवृत्तान्तं संश्रुत्य एतत् क्षेत्रीयाणां सर्वेषामपि महान् आनन्दः समजनि। स्वीयशैलीविशेषेण यद्यपि एष महाकविः आधुनिकयुगस्य कालिदासः इति प्रसिद्धिं लभते तथापि अस्य विशिष्टया शैल्या स्वत एव संस्कृतजगति मान्यो वर्तते। अतः यदा अस्य कृते कालिदास इति प्रतिमानं व्यवह्रियते तदा तस्य केवलम् अयमेवार्थो भवति यत् श्रीवर्णेकरमहोदयस्य तत्तूल्यमूल्यवदेव-रचना भवति। तस्माद् विशिष्टा शैली वर्णेकरीति कुत्रापि क्षीणा न भवति।

## रघुवंशस्य आकर्षणम्

वयसां द्वादशे एव वर्षे रघुवंशमहाकाव्यस्य प्रायः सर्वेऽपि सर्गाः श्रीवर्णेकरस्य कण्ठे आसन्। अस्यापि इतिहासः अतीव रमणीयः अस्ति। यदा श्रीवर्णेकर-महोदयः इतवारी इत्यत्र निवसन् आसीत् तदा तस्य पार्श्वभागस्य गृहे काशीतः समागताः वेदान्ताचार्याः श्रीहनुमन्तशास्त्रिकेवलेमहाभागाः निवसितुमायाताः।

हनुमन्तशास्त्रिणः बधिरा आसन्, तस्मात् ते कुत्रापि न गच्छन्ति स्म। ते संस्कृतशिक्षणार्थं बालकान् प्रेषयितुं वर्णेकरस्य पितरं प्रति वदन्ति स्म। तदा वर्णेकरस्य पिता संस्कृत-शिक्षणार्थं गच्छत' इति अवोचत्। तत्समये बालकाः कस्मिन्नुचित् कार्यविशेषे व्यस्ता अपि नासन्। अयं प्रायः १९३० वर्षस्य समयः आसीत्। गान्धीमहाभागस्य आन्दोलनं प्रकर्षे आसीत्। विद्यालयाः महाविद्यालयाश्च अनुद्घाटिताः, सर्वत्र पिकेटिंग, सभा, मोर्चा इत्यादि आन्दोलनमयमेव वातावरणम्। तस्मिन् अवसरे श्रीवर्णेकरमहोदयः स्वस्य अग्रजेन प्रभाकरेण सह शास्त्रिमहाभागानां सविधे गन्तुं प्रारब्धवान्। अमरकोशतः संस्कृताध्ययनं प्रारब्धम्। गृहे पुस्तकं नासीत्। प्रथमकाण्डम् अर्धमूल्ये (Second hand) क्रीतम्। (तत्पुस्तकम् अद्यावधि सुरक्षितं वर्तते)। प्राचीनपद्धत्या अमरकोशानन्तरं लघुसिद्धान्तकौमुद्याः अध्ययनं समारब्धम्। शास्त्रिणः किमपि लिखितुम् अनुमतिं न ददति स्म। केवलं श्रुत्वा स्मरणं कर्तव्यम्। कालिकातायाः व्याकरणपरीक्षायां तैः वर्णेकरमहोदस्य प्रवेशः कारितः। व्याकरणानन्तरं काव्यं पठनीयमतः दि० वि० वराडपाण्डेमहोदयस्य बृहदाकारे भवने स्थिते नागपुर-सं० महाविद्यालये प्रवेशं कारयितुं वर्णेकरं ते स्वत एव नीतवन्तः। तत्र सावळापुरकरमहोदयः वराडपाण्डेमहोदयश्च उभौ अपि शिक्षकौ आस्ताम्। तत्र कालिदासस्य रघुवंशविषये वर्णेकरस्य मनसि एतावदाकर्षणं जातं यत् तेन तत् सम्पूर्णमपि महाकाव्यं कण्ठस्थीकृतम्। दोलायाम् उपविश्य श्लोकपाठकरणे तस्य अतीव रुचिः आसीत्। रघुवंशः अतीव रुरुचे। कुमारसम्भवस्य सर्गाः कण्ठस्थीकृताः। कण्ठस्थीकरणे तस्य अतीव रुचिः उदपद्यत। सर्वोऽपि पाठ्यक्रमः कण्ठस्थीक्रियते स्म। अधुनाऽपि सूरदासस्य भजनानि कण्ठस्थीकुर्वन्तस्ते वर्तन्ते। रामदासस्य दासबोधोऽपि कण्ठस्थः कृतः आसीत्।

---

**नागपुरस्य प्रसिद्धः संस्कृतविद्वान् पण्डित-डॉ० श्री० भा० वर्णेकरमहोदयः स्वीयसंस्कृतसेवार्थम् स्वतन्त्रतादिवसे राष्ट्रपतिपुरस्कारेण सम्मानितः एतद्गौरवनिमित्तं तेषां व्यक्तित्वस्य परिचयाय प्रस्तुतोऽयं वार्तालापः…. ।**

---

## कठिनतरं विद्यार्थिजीवनम्

आर्थिकसमस्यावशात् माध्यमिकपरीक्षा (मैट्रिक) पर्यन्तमेव पितरः तस्य अध्ययनं कारयितुम् अशकन्।

तत् किं कार्यम् ? विद्यालयस्य शिक्षका अग्रिम-परीक्षायाम् अस्य प्रवेशं वाञ्छन्ति स्म। अतः तेन अन्धविद्यालये शिक्षकस्य वृत्तिः स्वीकृता। माध्यमिक-परीक्षोत्तीर्णस्य शिक्षकपदे कथं नियुक्तिर्भवेत् ? परम् अन्धविद्यालये केवलं सनेत्रः कश्चित् माध्यमिक-परीक्षोत्तीर्ण एव आवश्यक आसीत्। लक्ष्मणनामकेन एकेन मित्रेण इदं कथितम्। १० रु० मासिकवेतने वर्णेकरमहोदयः अन्धविद्यालयस्य च्छात्राणां न केवलं शिक्षकः अभूत् अपितु मित्रम्, पालकः, चिकित्सकश्च अभवत्। स्वतः वर्णेकरमहोदयः कथयति—अहं तत्र तेषां सेविका (दाई) अपि शिक्षकः अपि च आसम्। अयं वृत्तान्तः १९३६ वर्षस्य अस्ति। ५० बालकेषु न्यू-नातिन्यूनं पञ्च षड्वा जनाः प्रतिदिनम् अस्वस्था भवन्ति स्म। तदा तेषाम् औषधादिकम् आनेतुं वर्णेकरमहोदय एव गच्छति स्म। सर्वत्र पद्भ्यामेव गन्तव्यं भवति स्म। तस्मिन् समये रामकृष्णाश्रमे डॉ० स्वामी होमियोपैथ-धर्मार्थ-चिकित्सालयं चाल-यतिस्म। तत्र पंक्तौ सदा होराद्वयपर्यन्तमुपवेष्टव्यं भवति स्म। तत्रत्य-आपणे स्वामीरामकृष्णस्य पुस्तकानि भवन्ति। तानि सर्वाण्यपि पुस्तकानि तैः पठितानि। पठनाय अन्यः कालः नैव लभ्यते स्म। अनन्तरं रामकृष्णविषये तेन काव्यनाटकादिकमपि लिखितम्। बाल्ये औषधानयनावसरे कृतम् अध्ययन-मेव तत्र मूलमिति स्वतः एव ते वदन्ति।

अन्धविद्यालये मध्याह्ने बालकानां गणितस्य अध्ययनं कारणीयं भवति स्म। केशवठोंबरे इति नामा तस्य प्रथमः विद्यार्थी आसीत्। रामकृष्णाश्रमस्य स्वामिव्योमानन्दमहाभागाः ठोंबरे इत्यस्य बान्धवाः आसन्। तत आरभ्य एव स्वामिभिः साकं तेषां सम्बन्धः आसीत्। इदानीमपि राष्ट्रपतिपुरस्कार-विषयकं वृत्तान्तम् आकाशवाणीतः श्रुत्वा स्वामि-व्योमानन्दमहाभागा एव सर्वप्रथमं वर्णेकरमहोदयस्य निकटं गतवन्तः। तदनन्तरमेव वर्णेकरमहोदयेनापि एष वृत्तान्तो ज्ञातः।

### संगीतस्य महत्ता

विद्यालये अन्धबालकानां संगीतस्य वर्गः चलति



सपत्नीकः डॉ० वर्णेकरः

स्म। संगीतस्य आकर्षणं तु आसीत् परन्तु एषः वर्गशिक्षकः आसीद् इति बालकैः सह संगीतशिक्षणं न सम्भवति स्म। अतः वर्णेकरमहोदयाः बहिरुपविष्टैव सन्तोषं कुर्वन्ति स्म। तत्पूर्वं चतुरसंगीतविद्यालयस्य केवलं प्रारम्भ एव जात आसीत्। तदानीं वर्णेकरस्य तत्र प्रवेशः कारितः आसीत्। एकमासपर्यन्तं सः तत्र गतवान् परं विद्यालयः अतीव दूरे आसीद् अतः शिक्षणम् अवरुद्धम्। अग्रिमे आयुषि संगीतशिक्षणस्य योग आसीत्। कन्याकुमारी इत्यत्र विवेकानन्द-स्मारकस्य स्थापना जाता तदानीं संस्कृते व्याख्यानं दातुं डॉ० वर्णेकरमहोदयस्य एकमासार्थमाह्वान-मागतम्। एकस्मिन् दिने मद्रपुरीतः मुरुगदासनामकः कश्चन गायकः समागत आसीत्। तस्य भजनानि श्रुतानि। तेषां भजनानां मोहनम् एतावदासीद् यत् तस्यां रात्रौ वर्णेकरमहोदयेन निद्रा न लब्धा। अयं प्रसङ्गः १९७६ वर्षस्य अस्ति वर्णेकर-महोदयः इदानीं ५८ वर्षवयस्क आसीत्। तेन रात्रि-पर्यन्तं शान्तिः न प्राप्ता। अपरेद्युः प्रातः समुद्रतीरं गतः। तत्र नागपुरस्य भैयाजी वझलवारमहोदयाः मिलिताः। वर्णेकरमहोदयेन नमस्कारः कृतः। उक्तं च—भैयाजिमहोदयाः भवन्तः मम गुरुः। अहं भवतां शिष्यः। भवन्तः नागपुरे मम गायनस्य अध्यापनं कार-यन्तु। अनन्तरं नागपुरे संगीतस्य पाठनं प्रारब्धम्।

तावत्कालं यद्यपि वर्णेकरमहोदयः नाट्यगीतभजन-गीतादिकं गायतिस्म तथापि संगीतस्य सप्तस्वरेषु भेदः न ज्ञायते स्म। वयसः ५८ तमे वर्षे 'सारेगम' पठितुं प्रारब्धम्। विलम्बेनापि भवतु परन्तु हस्ते हरमोनियम-तम्बूरा इत्यादिकं वाद्यं गृहीत्वा तेन वादयितुं प्रारब्धम्। एवं गायनस्य स्वसंकल्पः तेन पूरितः।

### संस्कृताध्ययनम्

अंधविद्यालये स्थितत्वाऽपि वर्णेकरमहोदयस्य संस्कृताध्ययनं प्रचलदेवासीत्। तत्र साहित्यदर्पणस्य कण्ठस्थीकरणं कृतम्। पुनः हर्षचरितसारः कण्ठस्थः कृतः। उत्तरमाध्यमिकपरीक्षायां तथैव काव्यतीर्थ-परीक्षायां प्रवेष्टव्यमासीत्। उत्तरमाध्यमिकपरीक्षायाम् अन्येऽपि विषयाः आसन्। अध्येतव्यं बहु आसीत्। अन्धविद्यालये कार्यबाहुल्यमपि जातम् आसीत्। समयः न लभ्यते स्म। पुस्तकानि नासन्। अस्यामेव स्थितौ कथञ्चित् काव्यतीर्थपरीक्षा दत्ता। परम् उत्तरमाध्यमिकपरीक्षायाः मासत्रयात् पूर्वम् अन्ध-विद्यालयः तेन त्यक्तः। धंतोली इत्यत्र डांगे इत्यस्य गृहे भाटकप्रकोष्ठेषु केचिद् अध्ययनार्थमागताः विद्यार्थिनः निवसन्ति स्म। तेषामेवाश्रयेण वर्णेकरमहोदयोऽपि न्यवसत्, तत्र तेषामिच्छानुसारमेव निवासः करणीय आसीत् तथा तेन कृतम्। उत्तरमाध्यमिक-परीक्षायाः शुल्कं ३५ रु० आसीत्। यथाकथञ्चित् अन्तिमदिनपर्यन्तं ३० रूप्यकाणां व्यवस्था जाता। शेषस्य तत् पितृव्यपुत्रेण व्यवस्था कृता। यदि तानि पञ्चरूप्यकाणि प्राप्तानि न अभविष्यन् तदा वर्षद्वयं व्यर्थमभविष्यद् इति अति कृतज्ञतया श्री वर्णेकर-महोदयः कथयति अद्यापि।

अग्रेऽपि अध्येतव्यमासीत्। परन्तु धनं नासीत्। निवासार्थं स्थानमपि नासीत्। अस्मिन् समये श्रीगो० नी० दाण्डेकरस्य मात्रा, संघस्य भिशीकरेण तथा अन्यजनैः च अतीव साहाय्यं कृतम्। १९२७ वर्षे संघेन सह यः सम्बन्धः प्रारब्धः स अद्यापि प्रचलति। विगत ६२ वर्षेभ्यः संघस्य प्रार्थनायाः व्रतं तेन कदापि न त्यक्तम्। पू० हेडगवारमहाभागैः यदा संघस्य स्थापना कृता तदानीमपि श्रीवर्णेकरमहोदयः 'आद्यः शिशुस्वयंसेवकः' अभवत्। अग्रे अध्ययनार्थं यदा वर्णेकरमहोदस्य अतीवकठिना स्थितिः आसीत् तदा तस्य कृते संघः एव महान् आधार आसीत्। जीवने तीव्रतमं काठिन्यं किं भवतीति वर्णेकरमहोदयेन विद्यार्थिदशायामेव अनुभूतम्।

प्रथमा काव्यरचना-संस्कृत-मंगलाष्टकानि। संस्कृत-काव्यतीर्थपरीक्षावसरे एव वर्णेकरमहोदयेन कालिदास-भर्तृहरि-भवभूतिप्रभृतीनां काव्यानि कण्ठस्थीकृतानि आसन् अतः तस्य कवित्वशक्तिः पल्लविता जाता। एतेषां कवीनां संस्कारैः सा पुनरपि परिपक्वा जाता। वयसः चतुर्दशे वर्षे वर्णेकरमहोदयः निर्दोषसंस्कृत-रचनां कर्तुं प्रारभत। परं लक्ष्यसमाकर्षणयोग्या इति तस्य प्रथमा संस्कृतरचना नाम संस्कृतमंगलाष्टकम् एव। तस्य मंगलाष्टकस्य प्रशंसा म०म० मिराशीसदृशैः विद्वद्भिः कृता आसीत्। रावबहादुरवाडेगांवकर-महोदयैः तत्र केचन व्याकरणदोषाः प्रदर्शिताः। तेषु एकत्र स्तुन्वन्ति इति प्रयोग आसीत्। वाडेगांवकर-महोदयानाम् अभिप्रायः अयम् आसीद् यत् तत्र स्तुवन्ति इति शुद्धः प्रयोगः नतु स्तुवन्ति इति। झटित्येव वर्णेकरमहोदयः 'यं ब्रह्मा वरुणेन्द्ररुद्रमरुतैः स्तुन्वन्ति[1] दिव्यैः स्तवैः' इति श्लोकं श्रावितवान्। एवमेव केचन अन्येऽपि दोषाः तेन वारिताः। तेन वाडे-गांवकरमहोदयाः अतीव प्रसन्ना जाताः तथा वर्णेकराय शिक्षणदानस्य उत्तरदायित्वं तैः स्वयमेव स्वीकृतम्।

तदनन्तरं वर्णेकरमहोदयः प्रतिदिनं रावबहादुर-महाशयानां गृहं प्रति सिद्धान्तकौमुद्याः अध्ययनार्थं गन्तुं प्रारभत। तस्मिन् समये बालशास्त्रीहरदास-महोदयः करंबेलकरमहोदयश्च तेषां गृहे अध्येतुम् आगच्छतः स्म। वाडेगांवकरमहाभागाः तदानीं पार-भाषेन्दुशेखरे भाष्यं लिखन्तः आसन्।

तस्मिन्नेव समये कर्नलकुकडेमहोदया अपि वर्णेकराय पुस्तक-पुस्तिकार्थं प्रतिमासं १० रूप्यकाणि ददति स्म। इत्थमेव एम० ए० पर्यन्तम् अध्ययनम् सम्पन्नम्। तस्मिन् एव प्रसंगे कमलाताई महाभागायाः

१. 'स्तुन्वन्ति' इति प्रयोगः गणविपर्ययेण शुद्धः भवितुमर्हति।

संस्कृताध्यापनस्यापि अवसरः प्राप्तः। यद्यपि तस्याः संस्कृतं दृढं नासीत् तथापि वर्णेकरमहोदयस्य श्रमेण सा उत्तीर्णा अभवत्। अनन्तरं सा एव तस्य सहधर्मिणी अपि जाता। कालान्तरेण वर्णेकरमहोदयेन नागपुरधनवटे-नेशनल-कालेज इत्यत्र प्राध्यापकस्य स्थानं प्राप्तम्।

### डॉ० वर्णेकराणां साहित्यम्

डॉ० वर्णेकराणां कृतिषु—'रामकृष्णपरमहंसीयम्' इति काव्यं सर्वोत्तमं निर्मितमिति स्वत एव वर्णेकरमहोदयाः कथयन्ति। पं० जवाहरलालनेहरूमहोदयानां जीवन-विषये—'जवाहरतरंगिणी' स्वा० सावरकर विषये—'विनायकवैजयन्ती' श्रीकृष्णस्य बाललीलाविषये—'वात्सल्यरसायनम्' एवमेव–'मन्दोर्मिमाला', 'कालिदासरहस्यम्', इत्यादीनि खण्डकाव्यानि, 'विवेकानन्दविजयम्' इति महानाटकम् शिवराज्योदयम्' इति महाकाव्यम्, 'शिवराजाभिषेकम्' इति नाटकम् इत्यादिकम् अतीवप्रसिद्धम् अस्ति। अर्वाचीनसंस्कृतसाहित्यस्येतिहासः (अर्वाचीन संस्कृत साहित्य चा इतिहास) इति ग्रन्थः डी० लिट्० इत्यस्य कृते प्रस्तुतः, अभङ्गधम्मपद (धम्मपदस्य अभंगे रूपान्तरणम्) एवं नूतनतया अभङ्गाः रचिताः। 'संस्कृतवाङ्मयकोशः 'इति अधुनैव सम्पादितः' गीर्वाणगीतार्चना', 'श्रीरामसंगीतिका', 'तीर्थभारतम्' इत्येतानि गेयकाव्यानि इत्यादयः कृतयः अन्याश्च स्फुटकविताः एवमन्याः कृतयस्तेन रचिताः। वर्णेकरमहोदयस्य एताः सर्वाः रचनाः सुयशस्तया संस्कृतवाङ्मये तस्य स्वतन्त्रं स्थानं सूचयन्ति।

संस्कृतभाषायाः दुरवस्थया सः खिन्नः भवति। परन्तु चिन्ताकरणं विवेचनाकरणं वा तस्य स्वभावो नास्ति। अतः अतीव आशावादि-वृत्या संस्कृतस्य पुनरुज्जीवनाय मार्गं सूचयति। संस्कृतस्य कार्यं सार्वजनिकं सांस्कृतिकञ्च भवितव्यम्। कार्यकर्तृणां तथा विदुषां संस्कृतस्य कृते आवश्यकताऽस्ति। ग्रामे ग्रामे प्रायः लक्षजनेषु वा एकः संस्कृतविद्वान् भवितव्यः इति वर्णेकरमहोदयस्य भावः वर्तते। दूतावासे, न्यायपालिकायाम् एवम् एतादृशेषु विशिष्टेषु स्थानेषु संस्कृतस्य पदं स्थापनीयमिति अपि तस्य परामर्शः विद्यते।

रचनागुणविषये रमणीयतमसृष्टौ वर्णेकरस्य तुलनैव नास्ति। तैः स्वीयरचनायां कदापि शब्दपरिवर्तनं न क्रियते। शब्दचयनं तेषां सुदृढं भवति। स्वकवित्वविषये वदन्तः ते कथयन्ति—'मम हस्तेन अतीव सहजगत्यां शब्दसम्पन् जन्म गृह्णाति इति अयं स्फुरणस्य भागः मया स्वकाव्यनिर्मितेः अतीव महत्त्वपूर्णः मन्यते'।

अस्मिन् प्रसङ्गे कस्यापि स्मृतिपथे आनन्दवर्धनाचार्यः आगच्छति। प्रत्यक्षं जन्मदातुः कवेरपि कदाचित् 'इदं मया कथ रचितम्' इति आश्चर्यं भवति तदा रचना उत्कृष्टा अस्तीति मन्तव्यम् इति आनन्दवर्धनाचार्यस्याभिप्रायः। अयं विषयः वर्णेकरविषये पूर्णतया योग्यः लगति।

### डॉ० वर्णेकराणां संस्कृतवक्तृत्वम्

यद् हि तेषां काव्यविषये कथितं तत् तेषां वक्तृत्वविषयेऽपि सत्यं वर्तते। भाषणावसरे यः शब्दप्रयोगः तैः क्रियते तत्र उत्स्फूर्ततायाः भागः अत्यन्तं महत्त्वस्य भवति। अतएव संस्कृतसदृशभाषायामपि निरन्तरं वदन्नपि स्वां सहजतां कदापि न त्यजति सः। अत्रापि सः शब्दावृत्तिं कथमपि न करोति। स्वमातृभाषामराठीवद् यदा सः संस्कृतेऽपि भाषते तदा संस्कृतानभिज्ञा अपि श्रोतारः सहजतया मन्त्रमुग्धाः जायन्ते। अद्यावधि तेन शताधिकानि भाषणानि दत्तानि सन्ति। इदानीमपि च दीयन्ते एव। अस्मिन् देशे संस्कृतवक्तृषु ये विशिष्टाः सन्ति तेषु वर्णेकरमहाभागः अग्रेसरः अस्ति। प्रवाहमयानि, ओघमयानि, ऊर्जस्वलितानि, सहजस्फूर्तिमन्ति नर्मविनोदयमयानि च वर्णेकराणां संस्कृतभाषणानि नागपुरविश्वविद्यालयेन ध्वनिमुद्रितानि कर्तव्यानीति अस्मिन् प्रसङ्गे मया सूचना करणीया इति प्रतिभाति।

अद्य वयसः ६० तमे वर्षे डॉ० वर्णेकरमहाभागः पूर्णतया कृतार्थः, प्रसन्नचित्तः निश्चिन्तः च अस्ति। सोऽयं गुरुस्माकं चिरयस्मासु कृतानुग्रहस्तिष्ठतु इति परमेश्वरं प्रार्थये।

मराठीतः संस्कृतरूपान्तरकारः
राजाराम शुक्लः
स० सं० विश्वभाषा

# भारतीय-भाषा-परिषद्

## प्रशस्ति-पत्र

भारतीय भाषा परिषद् की प्रकाशन-योजना को प्रकृष्ट प्रभा प्रदान करने वाली प्रशस्त रचना "संस्कृतवाङ्मयकोश" के प्रणम्य प्रणेता डॉ० श्रीधर भास्कर वर्णेकर की कार्यनिष्ठा एवं निष्काम सेवा-भावना के प्रति कृतज्ञता प्रकट करना परिषद् अपना परम कर्तव्य समझती है। संस्कृत साहित्य तथा भारतीय संस्कृति के महारथी एवं वाक्सारथी डॉ० श्रीधर भास्कर वर्णेकर लगभग पिछले तीन-चार दशकों से अकुंठित दीक्षा से संस्कृत तथा संस्कृति की सत्यनिष्ठ सेवा में तत्पर रहे। साहित्य अकादेमी से पुरस्कृत आपका संस्कृत काव्य "शिवराज्योदयम्" तथा कालिदास पुरस्कार से सम्मानित आपकी रचना "श्रीरामसंगीतिका" संस्कृत साहित्य को समृद्धि प्रदान करने वाली स्पृहणीय रचनाएँ हैं। इनके अतिरिक्त लगभग ३५ रचनाओं से सुरभारती को सुशोभित करने वाले डॉ० वर्णेकर के कृतित्व की कीर्ति-पताका है—"संस्कृतवाङ्मयकोश" जिसको प्रकाशित करने का सौभाग्य भारतीय भाषा परिषद् को प्राप्त है। गीर्वाणी के गरिमामय ज्ञान को जनवाणी के माध्यम से जन-मानस में संप्रसारित करने वाली यह रचना रचनाकार को ऋषिऋण से मुक्त करती है और साथ ही परिषद् को प्रज्ञा के परिषेचन का प्रशस्त अवसर प्रदान करती है।

इसी परिप्रेक्ष्य में डॉ० श्रीधर भास्कर वर्णेकर को अपनी विनम्र कृतज्ञता ज्ञापित करने के लिए भारतीय भाषा परिषद् ने उनके सम्मान में यह अभिनन्दन-समारोह आयोजित किया है। डॉ० वर्णेकर को सम्मानित करने में परिषद् अपने को ही गौरवान्वित अनुभव करती है और भगवती वाङ्मयी से प्रार्थना करती है कि वह अपने वरद पुत्र को परम वरणीय सुख-संपदा प्रदान कर लोक-कल्याण की साधना में उनकी प्रज्ञा को प्रयोजनवती बना दे।

| भगवती प्रसाद खेतान | प्रतिभा अग्रवाल | पाण्डुरंग रॉव | परमानन्द चूड़ीवाल, कुसुम खेमानी |
|---|---|---|---|
| अध्यक्ष | उपाध्यक्षा | निदेशक | मंत्री |

७ जनवरी १९८९

## श्री श्री सीतारामदास-ओंकरनाथ-संस्कृत-शिक्षा-संसद्

## पण्डितप्रकाण्ड-सारस्वतमूर्धन्य—डॉ० श्रीधरभास्कर-वर्णकर-महोदयं प्रति वाक्यपुष्पोपहारः

अस्तु स्वस्ति प्रथितयशसे श्रीमते प्रीतिभाजे
श्रद्धापूर्वं चरितमहते तुभ्यमर्घ्यं प्रदाय ।
संवर्ध्य त्वां बुधवरमहो धीमतां मेलनेऽस्मिन्
श्रद्धार्घ्यं भो वयमिह सुधीः सादरं ज्ञापयामः ॥

जातो ब्रह्मकुले सुकीर्तिमहिते विद्यार्थिसंसेवितः
दीप्तस्त्वं च महत् स्वकीर्तिललितः सत्कर्मणां नायकः ।
विद्याकीर्तियुतं स्वभावललितं श्रौतादिशास्त्रंगमं
धीमंस्त्वां हि सुमुग्ध-मानस-मुदा संवर्धयामो वयम् ॥

रम्या या देवभाषा ललितरसमयी श्रौतशास्त्रादिमूर्ता
कल्पे कल्पे प्रकामं जगति वितनुते ज्ञानधर्मप्रचारम् ।
तां वाणीं ब्रह्मविद्यां व्रतचरणपरः सेवमानो वरेण्यः
कीर्तिं भो लब्धवांस्त्वं दिशि दिशि विमलां सुप्रतिष्ठो नरेषु ॥

विद्याम्बुधिर्महाचार्यः माधुर्य-प्रेम-सागरः ।
श्रीधर-भास्करस्त्वं वै दीप्यतां शाश्वतीः समाः ॥
वर्णकरो महाभागः सुवर्ण-रचने पटुः ।
वाग्ब्रह्मवित् तपोनिष्ठः संजीव शरदां शतम् ॥



# मदीया संस्कृतकाव्यप्रवृत्तिः

डॉ० श्री भा० वर्णेकरः

(नागपुरम्)



१९३९ तमे ख्रिस्ताब्दे स्ववयसः १३ तमे वर्षे गुरुवर्याणां हनुमन्त[1]शास्त्रि-केवले-महाभागानाम् अनुग्रहेण संस्कृत-भाषया सह मम प्रथमः परिचयः सञ्जातः। तदाप्रभृत्येव रुचिरार्थ-सुभाषितानां कण्ठस्थीकरणे मम स्वाभाविकी प्रवृत्तिरासीत्। कालिदासीय-सर्गाणां गानावसरे तादृक् श्लोकविरचने काले काले प्रेरणा समुदेति स्म। परं सामर्थ्याभावाद् उत्पत्त्यनन्तरं सा प्रेरणा दरिद्र-मनोरथवत् स्वयमेव व्यलीयत।

तेषु दिवसेषु श्रीसमर्थरामदासस्य कमपि चरित्र-ग्रन्थम् अहम् अपठम्। श्रीरामदासविरचितस्य दासबोधग्रन्थस्य पारायणं च प्रत्यहं स्नात्वा परमश्रद्धया अकरवम्। एवं श्रीरामदास-श्रद्धा-परवशतया रामदासस्तुतिविषयकः कोऽपि संस्कृत-श्लोकः मया एकस्मिन् दिने अनायासमेव विरचितः। एवं मम संस्कृत-कविता-रचनारम्भः श्रीरामदासस्तुतिपद्येन समभवत्।

स्वातन्त्र्यप्राप्त्यर्थं राष्ट्रधुरन्धरैः प्रवर्तितः संघर्षः तेषु दिवसेषु शुष्केन्धनाग्निवद् यथाक्रमं प्रवर्धमानः आसीत्। लोकभावनोत्तेजनार्थं शिवराजस्य वीर-चरितं स्थाने स्थाने प्रगीयते स्म। तेषां वीरगीतानां भूयः श्रवणेन उन्मनस्क इवाहम् आसम्। यथावसरम् अहमपि तानि वीरगीतानि मराठीभाषीयाणि वयस्यमण्डले उच्चैरगायम्।

१९२७ तमे ख्रिस्ताब्दे, नागपुरे अंकुरितेन राष्ट्रीय-स्वयंसेवकसंघेन सह मम संबन्धः समजायत। संघधुरीणानां व्याख्यानेषु शिवाजिचरित्रविषयाः नानाविधाः कथा आख्यायिकाश्च मयाऽश्रूयन्त। मम व्यायामगुरुः श्री अण्णा सोहनीनामधेयः शिवचरित्रानुबद्धा, नानाविधाः वीराद्भुतकथाः यथावसरं बालकानां भावनोत्तेजनार्थं कथयति स्म।

नागपुरे दादाशास्त्री-कायरकरनामधेयः कश्चन सुविश्रुतः कीर्तनकलाकोविदः तेषु दिवसेषु महाराष्ट्रेतिहासगतानि व्याख्यानानि अतीव रोचकतया वर्णयति स्म। तत्र च शिवचरित्रसंबन्धीनि विविधानि आख्यानानि भृशं खलु मह्यमरोचन्त। नैकवारं श्री दादाशास्त्रिणः कीर्तनानि श्रावं श्रावं मया श्रीशिवराज-चरित्ररसपानं बाल्ये वयसि कृतम् आसीत्। शिवचरित्रविषयकम् एकं मराठीपुस्तकं मया १९३० तमे संवत्सरे पठितम् आसीद् इति स्मरामि।

शिवचरित्रसंबद्धानि शिवनेरी-सिंहगड-रायगड-प्रतापगड-प्रमुखानि दुर्गस्थानानि समक्षं द्रष्टुं तीव्र-

१. अयं शब्दः हनुमत् शब्दस्य अपभ्रंशशब्दः। न तु संस्कृते शुद्धः।

प्रेरणा मम मनसि काले काले उदभवत्। परं स मे मनोरथः क्षुद्रतरंगवद् उदितमात्रोऽस्तम् अगच्छत्। चित्रपटगृहे शिवचरित्र-दर्शनावसरे तानि वीरतीर्थीभूतानि स्थानानि कदाचन अवालोक्य शुक्तिकादर्शनेन रजतदर्शनस्य इव आनन्दो मया अनुभूतः।

एवं भूयः श्रवण-मनन-वाचनादिभिः बाल्ये एव वयसि काचन आध्यात्मिकी शिवराजसमीपता मया समासादिता। तदैव शिवचरित्र-रचन-प्रेरणाऽपि हृद्मूलेव वल्लरी क्रमशोऽन्तःकरणे प्रावर्धत। १९३६ तमे ख्रिस्ताब्दे शालान्तपरीक्षाम् उत्तीर्णस्य मे मनसि शिवकाव्य-लेखनप्रेरणा कामपि तीव्रताम् आप। तदा संस्कृतकाव्यरचनासमर्थतया स्वमातृभाषयैव कानिचन शिवचरित्रविषयाणि पद्यानि मया व्यरच्यन्त। एतावता कालेन संस्कृतभाषाध्ययनेन साकं संस्कृतकाव्यग्रन्थननैपुण्यम् अपि क्रमशः मयि प्रावर्धत। षोडशवर्षदेशीयस्य शालान्त (मेट्रिक) परीक्षोत्तीर्णस्य मे प्रसंगविशेषोचित-संस्कृतकाव्यग्रन्थन-कौशलं, चकिता इव ज्ञानवयोज्येष्ठाः केचन महानुभावाः भृशं प्राशंसन्। एतेषु प्रशंसकेषु गुरुवर्य-महामहोपाध्याय डॉ० वा० वि० मिराशी, आचार्य-सरस्वतीप्रसादचतुर्वेदी, वैयाकरणधुरीण-राव-बहादुर-नारायणवाडेगावकरसदृशानां मत्पूजनीयानां विद्वद्वरेण्यानां परितोषवचनैः नितान्तं द्रढिमानं भजमानो मामकीनः संस्कृत-कवित्व-विश्वासः संस्कृत-काव्यकलोपासनायाम् एव मदन्तःकरणम् अरमयत।

अतः परं वर्षद्वयात्मकः कालः मया महता क्लेशेन यापितः। अर्थाभावेन मम अध्ययनमपि कुण्ठितम् आसीत्। १९३८ तमे ख्रिस्ताब्दे मम संस्कृत-काव्य-निर्माण-प्रेरणा सहसैव प्रदीपिता इव आसीत्। नानाविधानि मुक्तककाव्यानि मया अयत्नेनैव विरचितानि। तेषु शिवराजस्तवनं नाम शार्दूलविक्रीडितच्छन्दोनिबद्धम् एकं स्तोत्रकाव्यमपि आसीत्। १९४१ ख्रिस्ताब्दपर्यन्तं विरचितानि सर्वाणि सुभाषितप्रायाणि मुक्तककाव्यानि मन्दोर्मि-मालाख्ये मम प्रथमप्रकाशिते काव्यसंग्रहे विद्यन्ते।

अतः परम् अतिदीर्घकालपर्यन्तं नानाविधकार्य-व्यापृतमनस्कतया संस्कृतकाव्यलेखनोद्यमो मे सर्वथा खण्डितोऽभवत्। किं बहुना संस्कृताध्ययनेऽपि कुण्ठितत्वम् इव आपतितम्। इच्छन्नपि काव्यरचनां कर्तुं तदानीं नापारयम्। अथ १९५८ तमे ख्रिस्ताब्दे नागपुरविश्वविद्यालयस्य तदानींतनेन कुलगुरुणा श्रीमंगलमूर्तिमहाशयेन पण्डितजवाहरलालनेहरू-महाभागानां जन्मदिनोत्सवनिमित्तं किमपि लघीयः संस्कृतकाव्यं रचयितुम् अयं जनः समादिष्टः। श्रीजवाहरलाल-नेहरूभागानाम् अनन्यसामान्यं श्रेष्ठत्वं जानन्नपि तद्विचारप्रतिकूलतया इदं काव्यरचना-दायित्वं कथं निभालयेयम् इति चिन्ताकुलचेता अहम् आसम्। कवित्वप्रवीणोऽपि कश्चिद् नाश्रद्धेयं विषयम् अधिकृत्य सरसकाव्यरचनां कर्तुं प्रभवतीति मम विश्वासः। एवं च नेहरूविषयकं संस्कृतकाव्यं कर्तुं नाहं शक्नुयाम् इति निश्चयेऽपि परमास्थया तद्विषयकं ग्रन्थजालम् आलोड्य तदीयं जीवितं च सौहार्देन हृदि निध्याय कतिपयैरेव अहोभिः जवाहरतरङ्गिणी नाम शतश्लोकं खण्डकाव्यं मया विरचितम्। काव्यनायकसुहृद्वर्यैः लोकनायक-बापूजी अणे महाभागैः तत् खण्डकाव्यम् अधिकृत्य परम-सन्तोषेण द्राघीयसी आंग्लभाषीया प्रस्तावना विलिखिता। काव्यस्यास्य आंग्लभाषानुवादश्च मया स्वयं कृतः आसीत्। काव्यनायकेन श्रीजवाहरलाल-नेहरूमहाभागेनापि आत्मविषयकं काव्यमिदं पठित्वा दीर्घपत्ररूपेण स्वसन्तोषः प्रकटीकृतः।

एवं विगतविंशतिवर्षेषु विलयमिवगता मदीया कवित्वशक्तिः अनेन निमित्तेन मां प्रत्यागता इति अनुभूय महान् खलु सन्तोषो मे समजायत। अस्याम् एव मनोऽवस्थायां स्वातन्त्र्यवीरशतकम्, रामकृष्ण-परमहंसीयम्, कालिदासरहस्यम्, वात्सल्यरसायनम् इत्यादीनि प्रत्येकं शताधिकश्लोकानि कतिपयखण्ड-काव्यानि आशुकविनेव मया अल्पीयसा कालेन विरचितानि। रामकृष्णपरमहंसीयं तु नागपुर-दिल्ली-प्रवासकाले रेलयाने स्थितेन मया विरचितम्। जगद्गुरुशंकराचार्य-श्रीभारतीकृष्णतीर्थ-प्रमुखैः विद्वद्-

रसिकवरेण्यैः मदीयानि एतानि खण्डकाव्यानि नितरां प्रशंसितानि। तदेवं विदुषां परितोषेण विजृम्भितात्मकवित्वविश्वासस्य मे बाल्यादेव अंकुरितः शिवच्छत्रपतिचरित्रविषयकमहाकाव्यलेखनसंकल्पः प्रवर्षणोद्वृत्तसरित्प्रवाहवत् सहसैव प्रबलोऽभवत्। अथैकदा मद्विरचितस्य स्वातन्त्र्यवीरशतककाव्यस्य प्रकाशनोत्सवः सुहृज्जनैः समायोजितः। तत्र भाषणावसरे गुरुवर्यमहामहोपाध्याय-पद्मभूषण—डॉ० मिराशीमहोदयैः तथा च अस्मत्सुहृद्वर्यैः महामहोपाध्याय-बालशास्त्रिहरदासमहाशयैः स्वीये भाषणे वर्णेकरमहाशयैः अतःपरं शिवाजिचरित्रविषयकं महाकाव्यं लिखितव्यम् इति समादिष्टम्। चिराय स्वहृदि निहितम् आत्मसंकल्पम् एवम् अकस्माद् एव अन्यजनमुखाद् विनिःसृतम् आकर्णयन् अहं साश्चर्यम् आनन्दितोऽभवम्। तत्रैव सभायां महाकाव्यलेखनम् अद्यैव समारप्स्ये इति मनसि निश्चित्य अहं गृहं प्रत्यागच्छम्। रात्रौ भोजनानन्तरं लेखनीं कर्गजं च आदाय विलिखितुं प्रवृत्तस्य मम लेखनीतः—

**"श्रीमदूर्जितमुदग्रमैश्वरं सर्वदुःखविपदोघसंहरम्।**
**धाम शैवमथवाऽस्तु वैष्णवं मन्महे मनसि तन्निरन्तरम्॥"**

इति मंगलाचरणम् आरभ्य सत्याद्रिवर्णनात्मकः प्रथमः सर्गः पूर्वं हृदयगत इव सहसैव सन्तततया बहिर्निःसृतः। अथापरेऽह्नि तं सर्गं पठित्वा स्वयम् अहम् अपि किमपि आश्चर्यं हृदये अन्वभवम्। सोऽयं प्रथमः सर्गः केभ्यश्चित् सहृदयेभ्यः श्रावितः। तेषां परितोषेण प्रोत्साहितेन मया अग्रिमाः द्वित्राः सर्गाः तथैव आशुकवितया सम्पूर्णतां नीताः। एषु दिवसेषु शिवराजचरित्रविषयाणि कानिचिद् नूतनपुस्तकानि मराठीभाषीयाणि मया पठितानि। यथाक्रमं १९५९ तमख्रिस्ताब्दस्य सप्तेम्बरमासारम्भे १७ तमः सर्गः समाप्तिम् अगच्छत्। ततः परम् अफझलखानवधप्रकरणवर्णनार्थं प्रतापदुर्गदर्शनस्य आवश्यकता मया अनुभूता। अदृष्ट्वैव तं युद्धकेन्द्रभूतं दुर्गम् अग्रिमा काव्यरचना न संभवतीति मया अनुभूतम्। एवं प्रतापदुर्गदर्शनाभावेन महाकाव्यलेखनं स्थगितमिव आसीत् सर्वथा। तदनन्तरं यथावसरं तं दुर्गं साक्षात्कृत्य प्रत्यागतेन मया अष्टादशसर्गतः समारभ्य पुनरपि काव्यारम्भः कृतः। अतः परं काव्यनिर्माणं निर्विघ्नतया आन्तम् अखण्डितं प्रवर्तताम् इति भावनया अष्टादश-सर्गारम्भे द्वितीयं मंगलाचरणं विलिखितम् :—

**"सच्चित्प्रमोदमयमात्मनि जृम्भमाणम्**
**आत्मानुभूदिविषयं विषयातिरिक्तम्।**
**सत्साहितीमुकुरबिंबितमुज्ज्वलाभं**
**सारस्वतं किमपि तत्त्वमुदेतु चित्ते॥"**

काले काले महाकाव्यमिदं कस्यचित् संस्कृतकाव्यमर्मज्ञस्य पुरस्ताद् अहम् अवाचयम्। सर्वैरेव सहृदयैः महानुभावैः महाकाव्यरचनाप्रयाणो मे प्रीतेन मनसा प्रशंसितः।

आरम्भत एव राज्याभिषेकान्तं शिवराजचरित्रं वर्णयामि इति मे संकल्प आसीत्। चिरादस्तमितः विक्रमार्जितस्वायत्तराज्याभिषेक एव महापुरुषस्यास्य अद्भुतरमणीये वीरचरिते परमोत्कर्षस्थानम्। अतः राज्याभिषेकान्तमेव च्छत्रपतिशिवराजचरितं शिवराज्योदये महाकाव्ये ६८ सर्गोपनिबद्धैः द्विपंचाशदधिक-अष्टशताधिक-त्रिसहस्रमितैः (३८५२) विविधच्छन्दोयुतैः श्लोकैः दशहायनमिते काले विरचय्य प्रकाशतां नीत्वा, काऽपि कृतकृत्यता मया अनुभूता। १९७३ तमे ख्रिस्ताब्दे साहित्यअकादमी-पुरस्कारेण सुसम्मानितो मे समुद्योगः पुनरपि कामपि नवतां दधार। १९७४ तमे ख्रिस्ताब्दे महाराष्ट्रशासनेन शिवराजाभिषेक-त्रिशताब्दी-महोत्सवः सर्वत्र समायोजितः। तन्निमित्तं "शिवराजाभिषेकं" नाम सप्ताङ्कं नाटकं मया विरचितम्। तच्च महाराष्ट्रशासनानुदानेन तस्मिन् महोत्सवे प्राकाश्यत। तथा च "अध्यात्मशिवायनम्" नाम सप्ताध्यायात्मकं संक्षिप्तं शिवराजचरित्रं तिलकविवेकानन्दसंवादात्मकं मया सुहृद्वरस्य कस्यचित् प्रार्थनां बहुमानयितुं विरचितम्।

## विवेकानन्दविजयं महानाटकम्

छत्रपति शिवराजवत् स्वामी विवेकानन्दोऽपि बाल्याद् आरभ्य मम श्रद्धाभाजनम् अभवत्। माध्य-

मिकच्छात्रावस्थायामेव मया स्वामिनः विवेकानन्दस्य विविधा मराठीभाषीयाः ग्रन्थाः सुष्ठु पठिता आसन्। ततश्च आंग्लभाषीयं तदीयं हृदयंगमं चरित्रमपि पठितम्। खण्डकाव्यरचनावेगे रामकृष्णपरमहंसीयम् नाम मन्दाक्रान्तावृत्तोपनिबद्धं शतककाव्यं मया नागपुर-दिल्ली प्रवासावसरे रेलयाने लिखितम् आसीत्। अस्य काव्यस्य मानं मुंबापुर्याम् एकस्यां विद्वत्सभायां श्रुत्वा एकेन अभिनयकलाकुशलेन संस्कृतमनीषिणा उक्तम् "विवेकानन्दस्य अभिनयं कर्तुम् आकांक्षामि। भवान् विवेकानन्दविषयकं संस्कृतनाटकं लिखतु।" ततः प्रभृति तादृशं नाटकं लिखितुं संकल्पो मम मनसि अंकुरितः। स च कन्याकुमारीय-विवेकानन्दशिला-स्मारकसमाप्तिकाले विवेकानन्दविजयं नाम दशाङ्क महानाटकं लिखित्वा मया सफलतां प्रापितः। एतद् हि महानाटकं जयपुर-जबलपुर-हैद्राबाद-विश्वविद्यालयेषु पाठ्यपुस्तकत्वेन अध्याप्यते अधीयते च। अस्मिन् नाटके श्रीपादशिलानाम्नि अंके विवेकानन्देन प्रगीतं भारतमातुः प्रदीर्घं स्तोत्रं मदीयं स्थायिभावं द्योतयति। प्रायः सर्वेषु मम काव्येषु देशभक्तिः राष्ट्राभिमानः स्वधर्मपरम्पराभिमानः वा स्थायित्वेन आविर्भूतोऽस्ति।

## गीतिकाव्यानि

संस्कृतकाव्यरचनारम्भत एव मम गीतिकाव्यरचनायाम् प्रवृत्तिः नासीत्, यद्यपि गीतगोविन्दकाव्ये महती मे आस्था अभूत्। परं केनापि निमित्तेन गीतिकाव्यरचनार्थे प्रेरितोऽहम्। १९७४ तमे ख्रिस्ताब्दे मम माननीयैः सुहृद्वर्यैः श्रीएकनाथ रानाडे महोदयैः कन्याकुमारीयविवेकानन्दकेन्द्रस्य संचालकत्वे भारतस्य ईशान्यदिगन्तस्थिते अरुणाचलप्रदेशे गिरिवनवासिनां किशोराणां संस्कारार्थम् एकं योगशिविरम् आयोजितम्। अहं नागपुरस्य-योगाभ्यासिमण्डलस्य अध्यक्षतया तस्य योगशिविरस्य संचालनार्थं नियोजितः। श्रीरानडेमहाभागानाम् आदेशानुसारं शिविरस्थान् गिरिवनचरान् किशोरान् संस्कृतम् अध्यापयितुम् अहं प्रयत्नम् अकरवम्। परं तेषां संस्कारविहीनतया सुभाषितादिमाध्यमेन संस्कृतपाठनं निष्फलं खलु आसीत्। तेषां च वनेचराणां गीतिकाव्यगाने स्वाभाविकीं प्रवृत्तिं दृष्ट्वा अहं गीतिकाव्यरचनार्थे प्रवृत्तोऽभवम्। मई-मासस्य चतुर्थे दिने, **"शूरा वयं, धीरा वयं, वीरा वयं सुतराम्। गुणशालिनो बलशालिनो नयगामिनो नितराम्। ध्रु०।** इत्येतत् समूहगानोचितं किशोरगीतं मया विरचितम्। अपरेद्युश्च, **"उत्तिष्ठत उत्तिष्ठत वीरा, जाग्रत जाग्रत रे समागता रिपुसेना सहसा चलत चलत समरे। ध्रु०।** इतीदं द्वितीय गीतं विरचितम्। एवं प्रतिदिनं एकैकं गीतं रचयित्वा पाठितम्। एवं योगशिविरे गीतिकाव्यरचनायाम् उन्मुखीभूता मम प्रतिभा। तदानीं भारतवर्षीयाणि विविधानि तीर्थक्षेत्राणि तत्रत्यानि दैवतानि, बुद्ध-महावीर-शंकर-प्रतापसिंह-शिवाजि-गान्धि-प्रभृतीन् पुण्यपुरुषान् अधिकृत्य सार्धशताधिकानि गीतिकाव्यानि मया विरचितानि। एतानि सर्वाणि गीतिकाव्यानि मदीये 'तीर्थभारतम्' इत्याख्ये गीतिमहाकाव्ये मुद्रितानि सन्ति। संगीतैकनिष्ठेन मम एकेन सुहृद्वरेण (श्रीपुरुषोत्तम सामंक नामधेयेन) दृढप्रयत्नेन ३० मितानां पद्यानां श्रुतिमधुरस्वर-रागयोजनां कृत्वा बहुत्र कार्यक्रमेषु एतानि मदीयानि गीतिकाव्यानि संस्कृतसंगीतरसिकानां परिषत्सु नैकवारं श्रावितानि।

बाल्यात्प्रभृति शास्त्रीसंगीताध्ययने मम महती उत्कण्ठा आसीत्। परं जन्मकुण्डलीग्रहाणां प्रातिकूल्यात् कदापि संगीताध्ययनार्थम् अवसरो नैव लब्धः। १९७६ संवत्सरस्य मकरसंक्रमणदिवसाद् आरभ्य स्ववयसः ५८तमे वर्षे मया सा-रे-गम-प-ध-नी सा-स्वरोच्चारणं संगीताचार्यस्य शिष्यत्वेन प्रथमतः कृतम्। चतुर्भिर्वर्षैः यत् किमपि लेशमात्रं स्वर-रागज्ञानं समधिगतं तदाधारेण सर्वेषां स्वरचितानां गीतिकाव्यानां रागयोजना मया महता प्रयासेन विलिखिता। स च मे रागस्वरात्मकः गीतिकाव्यग्रन्थः महान्तं धनव्ययं प्रकाशनार्थम् अपेक्षते इति कृत्वा हस्तलिखितावस्थायां सीदति। यथावसरं सोऽपि भगवत्कृपया मुद्रणसंस्कारं लभेत इति बाढम् आशासे।

तीर्थभारतविरचनानन्तरम् अपि अकुण्ठिता मम गीतिकाव्यरचना प्रेरणा गीतिकाव्यान्तरलेखने मां भृशं प्रैरयत्। तस्मिन्नेव काव्यावेगे (१) श्रीरामसंगीतिका तथा (२) श्रीकृष्णसंगीतिका इत्याख्यं गीतिनाट्यद्वयं मया विलिखितम्। श्रीरामसंगीतिका जयपुरे भारती-प्रकाशनसंस्थया १९८० तमे ख्रिस्ताब्दे प्रकाशिता मध्यप्रदेश-संस्कृत-अकादम्या १९८१ तमे ख्रिस्ताब्दे अखिलभारतीय-कालिदास-पुरस्कारेण सम्मानिता च। श्रीकृष्णसंगीतिका च इदानीमपि मुद्रणसंस्कारं प्रतीक्षमाणा तिष्ठति। अस्य संगीतिकायुगलस्य च रागस्वर-योजना मया विलिखिताऽस्ति।

तीर्थभारतग्रन्थे प्रतिगीतम् अधस्तात् रागनाम-मेलः वर्ज्यस्वराः, आरोहावरोहौ, मुख्यागं, वादी-संवादी इत्यनेन क्रमेण गीतगानार्थं रागस्वरपरिचयः संगीतशास्त्रग्रन्थानुरोधेन निर्दिष्टोऽस्ति। गीतानां सार्वत्रिकं सारूप्यं सामरस्यं वा संरक्षितुम् अयं संगीतनिर्देशो मया कृतः।

## नवगीता

संस्कृतसुभाषितेषु शरीरश्रममाहात्म्यप्रतिपादकानि सुभाषतानि प्रायो नैव विद्यन्ते। गान्धिमहात्मना मानवोद्धारार्थम् यानि एकाशतव्रतानि समादिष्टानि तेषु शरीरश्रमव्रतम् अस्ति। नागपुरवासिना एकेन स्थापत्यतन्त्रविशारदेन मम सुहृद्वरेण श्रम-माहात्म्यप्रतिपादकानि सुभाशितानि मत्सकाशाद् अपेक्षितानि। तदर्थं विचिन्तनपरेण मया श्रमगीता विरचिता यत्र गान्धी-महात्मा भारतोत्कर्षार्थं श्रमस्य महिमानं बहुधा सुभाषितमयैः अनुष्टुप् श्लोकैः प्रति-पादयति।

संघगीता नाम अन्या गीता च मया विरचिता यत्र, संघप्रणेता श्रीगुरुजिः समाजसंघटनस्य महत्त्वं प्रतिपादप्रति। अस्याः संघगीतायाः अनुवादा मलयालम्-कन्नड-आंग्ल-हिन्दी-भाषासु प्रकाशिताः। संस्कृत-साहित्ये संघटनमहत्त्वप्रतिपादकानि सुवचनानि पूर्वतनेषु ग्रन्थेषु नोपलभ्यन्ते अतएव मया इयं रचना कृता। वर्षद्वयात् पूर्वं 'ग्रामगीतामृतम्' नाम द्विसहस्रश्लोकात्मकः ग्रन्थो मया विलिखितः। अयं हि ग्रन्थः राष्ट्ररत्न-श्रीतुकडोजी महाराज विरचितायाः मराठीग्रामगीतायाः सारानुवादात्मकोऽस्ति। अतः पूर्वम् अनुवादात्मको ग्रन्थः मया न लिखित आसीत्। ग्रामोद्धारविषयम् अधिकृत्य भारतीयभाषासु कस्यामपि भाषायाम् एतादृशः ग्रन्थः नास्ति अस्य ग्रन्थस्य अपूर्वतां ज्ञात्वा मयाऽयम् अनुवाददात्मकः ग्रन्थः लिखितः प्रकाशितश्च। अस्य ग्रामगीतामृतस्य तेलुगुमलयालम् उर्दू असमिया भाषासु अनुवादान् लिखितुं तत्र-तत्र प्रदेशे लेखकाः प्रयतन्ते।

## गद्यलेखाः

१९५० तमे ख्रिस्ताब्दे मया संस्कृतभवितव्यम् नाम्नः संस्कृतसाप्ताहिकपत्रस्य प्रारंभः नागपुरे कृतः। प्रतिसप्ताहम् अत्र मया विविधलौकिक-राजनैतिक-विषयेषु संपादकीया अग्रलेखाः लिखिताः। तथा च अन्यानपि बहून् महत्त्वपूर्णान् सांस्कृतिकविषयान् अधिकृत्य लिखिता मदीया निबन्धा अत्र पत्रिकायां पंचमवर्षाणि अविरतं प्राकाश्यन्त। एतादृशाः संग्रहीचिताः सार्धशताधिकाः सरलसुबोधभाषया लिखिताः ग्रन्थाकारेण प्रकाशयितुम् इच्छामि। न जाने कदाऽयं मे संकल्पः फलद्रूपो भविष्यतीति।

कथा-आख्यायिका-उपन्यासरचनासु मम अभिरुचिः नास्ति। तादृशं साहित्यं सति अवसरे पठामि, परं स्वयं तथा लिखितुम् अन्तःप्रेरणां परप्रेरणां वा कदापि न प्राप्नुवम्।

# क इह 'शिव'कारे न रमते ?

डॉ० ग० बा० पळसुले

७४३ सदाशिवपेट, पुणे—४११०३०

लोकभ्रमाः अशिक्षितेष्वेव वर्तन्ते इति न भ्रमितव्यम्। सुशिक्षितेष्वपि ते वर्तन्ते। केवलम् अन्ये अशिक्षितानां लोकभ्रमाः, अन्ये सुशिक्षितानाम्, इत्येव। एतेषां सुशिक्षितानां लोकभ्रमानाम् अन्यतमो नाम—जगन्नाथपण्डितान्तं संस्कृतमिति। जगन्नाथोत्तरं संस्कृतम् अम्रियत्, इति। इमं भ्रमं भीमप्रहारेण शतखण्डं कुर्वतां पराक्रमिणां संस्कृतसारस्वताग्रणीनाम् अग्रेसराः नाम डॉ० श्रीधर भास्कर वर्णेकराः। इदं च कार्यं तैः प्रकारद्वयेन कृतम्। संशोधनेन (Research), स्वयं च संस्कृतभाषाया भाषणलेखनयोः प्रयोगेण। एकतस् तावत् तैः संशोध्य संशोध्य आधुनिकस्य जगन्नाथेत्तरस्य संस्कृतसाहित्यस्य इतिहासं विरचय्य, नैकाः कृतीश्च प्रकाशं नीत्वा सुस्पष्टं प्रदर्शितम् यत् नास्ति संस्कृतं मृतम्। नास्ति संस्कृतमन्दाकिनी त्रिपथगेव विनशने, विलोपबालुकायाम् अन्तर्धानं गता। प्रत्युत सा अद्ययावत् लब्धनवनवप्रवाहा अव्याहतं प्रवहत्येव। अन्यतश्च तैः मौलिकीः काव्यनाटकादिकृतीः स्वयं विरचय्य, संस्कृतं नियतकालिकं संचाल्य, व्याख्यानेषु पत्रव्यवहारे च साग्रहं संस्कृतं प्रयुज्य, अन्यैश्च तैस्तैः प्रकारैः न केवलं संस्कृतं रक्षितम्, अपि तु दत्तनवरूपं ततु कतिचित् पदानि अग्रेसरीकृतम् इत्यत्र न मे कोऽपि संदेहः। कविः यत् सत्यं महाकविः, अनुवादकः, संशोधकः, वक्ता, पत्रकारः, गीतकारः, सुभाषितकारः, नाटककारः इत्यादिभिस् तैस्तैः प्रकारैः क्वचिदेव अन्येन केनापि पुरुषेण इत्थं सुविपुला, गुणाढ्या च संस्कृतसेवा समनुष्ठिता स्यात्।

## आधुनिकं संस्कृतम्

वर्णेकराणां भाषा सुन्दरी एवं विपुलाङ्गी सत्यपि न स्थूलाङ्गना। सालंकृताऽपि न भाराक्रान्ता। क्वचिद् अलसगमना सत्यपि दर्शयति सा आत्मनः विद्युल्लताचापल्यम्, यत्र तद् अपेक्ष्यते। संप्रति हि नैके लेखकाः नैकप्रकारकं संस्कृतं प्रसुवते। अहो मनोरञ्जनम्। कश्चिद् मध्ययुगीने काले सुप्त्वा अद्यैव उत्थित इव अद्यापि 'अमन्दानन्दसन्दोहतुन्दिलः' एव आस्ते। न कदापि सः 'प्रमुदितः' 'आनन्दितः' वा भवति। इतश्च कश्चित् वाक्यस्य काण्डं काण्डं खण्डनेनैव इयम् अमृतवाणी 'नैव क्लिष्टा न च कठिना' इति सिध्येद् इति क्लैश्यग्रहग्रस्तः एकशब्दं संस्कृतं लिखति—'पूण्यपत्तनम्। शनवारवाडा। महती सभा।....' इत्यादि। (कार्तज्ञ्यम्, निश्चप्रचम् इत्यादयः प्रयोगास्तु क्षन्तव्याः)। कश्चित् संस्कृतभाषायाः दुर्बोधतया तस्याः व्याकरणमेव निमित्तं मन्यमानः (अथवा अनभिज्ञ एव व्याकरणस्य) सर्वानपि व्याकरणनियमान् पादप्रहारेण दूरमुत्सार्य अनर्गलं मुक्तं च संस्कृतं निःसंकोचं लिखति। यथा तु लभय, गायस्व, स्वरूपः, भवती....क्षामाऽसि, सत्यवान्....चलितुम् अशक्यः, इत्यादि। कश्चित् संस्कृतिं संस्कृताश्रितां विस्मृत्य भगवत्याः सीतायाः विषयेऽपि 'पुरुषायितमग्ननाकविलासिनीव' इति उपमानं निर्लज्ज प्रयुङ्क्ते, 'डिस्को' गीते च 'शुक्रच्युतिं कुरु रे' इति वारनारीका नग्नशब्दैः गापयति! अन्येषां बहूनां लेखनं नैवं नग्ननृत्यायते। वराकाः सात्त्विकं 'साज्ज्वलं' च लिखन्ति। किं तु सर्वं भेण्डी-दुग्धादनम्। न तत्र सौन्दर्यम्, न सामर्थ्यम्। धृतं शरीरेण, मृतं तद् जीवति।

## जीवितप्रयोजना वर्णेकर-कला

अस्यां पृष्ठभित्तौ वर्णेकराणां संस्कृतरचना कामपि तादृशीम् उत्तुङ्गां महात्मतां भजति, या अन्यैः मनसाप्यगम्या। मन्येऽत्र द्वयं हेतुभूतम्—एकम्, तेषां साहित्यस्य ध्येयार्पितत्वम्। द्वितीयम्—ईश्वरदत्ता,

अयत्नप्रसादिता प्रसाधिता च प्रतिभा। नेदं द्वयं विना कोऽपि कविः लोकोत्तरो भवति। वर्णेकराणां साहित्यम् उपर्युपरि पर्यालोचयतापि पुरुषेण द्रष्टुमिदं सुशकम्, यत् सर्वोऽपि तेषां लेखनीव्यापारः सहेतुकोऽस्ति। न कलामात्रप्रयोजना तेषां लेखनकला। किंतु जीवितप्रयोजना। जीवितोन्नतिकामा। जीवितबलाधानकामा। वैयक्तिकस्य राष्ट्रियस्य च जीवनस्य उन्नयनम्, तस्य च साफल्यापादनमेव तस्याः प्रधानं प्रयोजनम्।

वर्णेकरा अस्तिकाः सन्ति। भगवति तेषां प्रगाढा श्रद्धा। 'प्रभो तव कृपां विना तृणकणोऽपि न स्पन्दते' इति ते तेषां [1]मन्दोर्मिमालाख्ये प्रथम एव काव्यसंग्रहे दृढं विश्वासं प्रकटयन्ति। अतस्ते निजं प्रतिभाविलासमपि ईश्वरस्यैव कृपाप्रसादं यदि गणयन्ति, तर्हि किमत्र आश्चर्यम्? (न संगच्छते अयं विनयातिशयः सुविदिताभिः 'वयमेव, नान्ये' 'सारं तु सारस्वतं जानीते····मुरारिः कविः (एव)' इत्यादिभिः संस्कृतकवीनां दर्पोक्तिभिः, एवं तु?) यथा साक्षात् परमेश्वरः, तथैव राष्ट्रमपि तेषां भक्तिभाजनम्। 'राष्ट्रदेवो भव' इति हि तेषां रचनानां स्थायी भाव इव। यथा चेदं दैवतद्वयं, तथैव तस्य भक्तोत्तमा अपि वर्णेकराणां पूजनीयाः। एकतः प्राचीनकालाद् आरभ्यः यैः भारतं तीर्थीकृतं ते ऋषिमुनयः, साधु'सन्ताः'[2], सत्पुरुषाः, भक्ताग्रगण्याश्च, अन्यतश्च ये राष्ट्रसेवार्थं धारातीर्थे पतिताः, बलीकृतनिजजीविताः; तृणीकृतनिजसौख्याश्च राष्ट्रभक्ताः—उभयत्रापि समेनैव भक्त्युन्मेषेण तेषां प्रमाणाञ्जलिर् निपतति। 'मम त्वेता वाणीं गुणकथनपुण्येन भवतः। पुनामि····' इति बुद्ध्या प्रेरितैरेव तैः अद्य यावत् सर्वमायुः ईश-राष्ट्रयोः भक्तशिरोमणिनां गुणसंकीर्त्तनेन नीतम्।

'अशोकश्चन्द्रगुप्तश्च विक्रमः शालिवाहनः' इत्यारभ्यमाणं तेषां पारंपरिकस्य प्रातःस्मरणस्य आधुनिकं कालोचितं पूरणम् 'विभूतिवन्दनं' नाम 'तीर्थभारत'स्य द्वितीयं तीर्थमपि अन्तर्भवति' 'जवाहरतरङ्गिणी' 'विनायकवैजयन्ती' 'रामकृष्णपरमहंसीयम्' इति खण्डकाव्यानि (शतककाव्यानि), 'विवेकानन्दविजयम्' तथा च 'शिवराजाभिषेकम्' इति नाटकद्वयम्, अन्ते च समस्तवर्णेकरवाङ्मयमौलिभूतं 'श्रीशिवराज्योदयम्' (अन्यानि च शतशः देवतासु, नदीमातृषु, देवतात्मनि हिमालये (सह्याद्रावपि), तीर्थराजे प्रयागे (आळन्द्यादिस्वपि), राष्ट्रध्वजे, भारतराष्ट्रे, न्यायदेवतायां अन्यासु चैवंविधासु विभूतिषु वीतीर्णानि स्तोत्रकुसुमानि, एतानि सर्वात्मना पर्याप्तं प्रमाणयन्ति तेषां विभूतिवन्दनप्रवणताम्।

वर्णेकराः रा० स्व० संघस्य स्वयंसेवकाः। तेषां मनःपिण्डः तत्र घटितः। तस्य तत्त्वज्ञातं तेषां रक्तगतमस्ति। अतः किमत्र चित्रं यदि तेषां कृतिषु हिन्दुत्वस्य गौरव-गर्जितं स्यात्? भारतीयसंस्कृतेश्च अभिमानः ओतश्च प्रोतश्च दृश्येत? यथा तेषां जीवनं हिन्दुत्वस्य रक्षणाय वर्धनाय च, तथा तेषां कविता अपि। हिन्दुसमाजः सुसंस्कारितः बलवांश्च भवतु, स वैभवस्य परां कोटिं गच्छतु, विश्वस्य संमानभाक् भवतु। किंतु एवं वैभवारूढस्यापि तस्य, भारतीयसंस्कृतेः प्राणभूतौ त्यागसंयमौ अविस्मृतौ तिष्ठताम् इति हि तेषां मनीषा। तेषां अस्य तत्त्वज्ञानस्य एकैकोऽशः, बहवो वा, तस्यां तस्यां कृतौ उपलभ्येरन्। किं तु सर्वे एव अंशाः तेऽपि प्राचुर्येण, यदि एकस्था द्रष्टव्याः स्युः, तर्हि श्रीशिवराज्योदयम् पठितव्यम्। परमेश्वरकृपया प्राप्ताः सर्वेऽपि कविगुणाः, सर्वापि प्रतिभासंपद् तैः मुक्तहस्ताभ्याम् अत्र विकीर्णाऽस्ति। को वाऽस्ति संस्कृतरसिकः य इह 'शिवकारे' न रमते?

## इयमपि 'श्री'च्छा

वस्तुतः इतः पूर्वं संस्कृतभाषायां शिवप्रभुविषयकं चरितं नासीत्, इति न। स्वयं शिवप्रभौ जीवति कवीन्द्राचार्येण विरचितं 'शिवभारतम्' प्रसिद्धमस्ति।

---

१. 'मन्दानाम् ऊर्मीणां माला' इत्यर्थकम् इमं शब्दं ते स्वयं परिहासे 'मन्दस्य ऊर्मिमाला' इति व्याचक्षते।

२. अयं शब्दः हिन्दी-मराठी इत्यादिभाषासु रूढतया अत्र गृहीतः।

अद्यापि केचन तद् अधीयते। किं तु केवलम् इतिहासकाराः जानन्ति सामान्यजनेषु तु न तत् लब्धप्रवेशम् अभवत्। अम्बिकादत्तव्यासमहोदयेन लिखितः शिवराजविजयः सालंकृतस्य प्रौढसंस्कृतस्य कश्चिद् आदर्श इव। पदे पदे तद् बाणभट्टं स्मारयति। किं तु कदाचित् अस्मादेव करणात्—तदपि विद्वत्सीमितम् अतिष्ठत्। अन्यच्च शिवचरितस्य रहस्यं यादृक् वर्णकरैः तादात्म्यमिव आपाद्य, एकैकं स्तरं लघुहस्ततया अपनीय, मर्मज्ञतया प्रकटीकृतम्, तादृक् प्रकटीकरणं पूर्वत्र अस्त्येव इति न शक्यते निश्चयेन वक्तुम्। अतः कारणात् सरससरसस्य, अबालवृद्धम् आवाहनक्षमस्य, भव्यदिव्यशैलीकस्य, सर्वात्मना प्रकटितसंस्कृतसौन्दर्यस्य, प्रदर्शितौजःसामर्थ्यस्य च कस्यापि अभिनवस्य शिवचरितस्य आविष्काराभिलाषः अतृप्त एवासीत् गीर्वाणसरस्वत्याः। सोऽयम् अभिलाषः वर्णकरैरेव पूरणीयः इत्यपि 'श्री'च्छा इवासीत्।

### महाकाव्यस्य महारम्भः

महाकाव्यस्य सर्वमेव महत् भवति। दृह्यतां 'शिवराज्य'स्य अयम् उत्तुङ्गगम्भीर आरम्भः—

**अस्ति दक्षिणदिगेकमण्डनं नातितुङ्गशिखरावलीमयम्।**
**भारतस्य परमप्रियं महाराष्ट्रमित्युचितनाम मण्डलम्॥**
**भाति तत्र शिखरावलीमधौ पुष्पितव्रततिजालकावृता।**
**पुष्पबिल्वदलपुञ्जपूजिता स्थाणुलिङ्गशतमालिकेव सा॥**

'अस्ति'-शब्दादि इदं काव्यम्, यथा कुमारसम्भवः। सह्यवर्णनं चास्य मङ्गलाचरणम्, यथा हिमालयवर्णनं 'कुमार'स्य। किं तु नेयं काव्येऽस्मिन् पर्वतारम्भप्रवृत्तिः काचित् नवतरकवेरिव अनुकरणमात्रमूलिका। अस्ति हि तत्र औचित्यम्। अयं सह्यः खलु स महान् रङ्गमञ्चः, यत्र असह्यविक्रमस्य शिवप्रभोः तद् रोमहर्षणं जीवितनाट्यम् अघटत। अनन्तरश्लोके एव एका भावगम्भीरा उपमा अस्मान् कीलयति। सह्यपर्वतेऽस्मिन् स्थाने स्थाने दृश्यमाना उन्नमितमस्तका, सपर्णपुष्पाच्छादिता शिखरराजिः कवेः बिल्वपुष्पार्चिता शिवलिङ्गमालिकेव प्रतिभाति! अहो प्रतिभा! अहो सूक्ष्मेक्षिका! अस्या उपमायाः यथार्थतां कश्चित् आकाशगामी वैमानिक एव अधोविसृष्टदृष्टिः प्रतीयात्। अत्र काव्ये यत्र तत्र विकीर्णाः शतशः एवं प्रकारा उपमोत्प्रेक्षाः काव्यस्यास्य कामपि अभिख्यां जनयन्ति। यथा च कश्चित् सिद्धकण्ठो गायकः प्रथमस्मिन् समावतरणे एव श्रोतृमनांसि आवर्जयति, एवं वर्णकरा अपि अनया प्रथमयैव उपमया यत् वाचकं वशीकुर्वन्ति तद् अपुनर्मोचनायैव। वर्षाकाले च पर्वतशिखरे पतितं जलं यथा महता वेगेन अधोदेशं प्रति धावत् समुद्रप्राप्तिं यावद् अविरम्य प्रवहत् तिष्ठति, एवमेव सह्यशिखरेषु एषु सकृत् प्रवृत्ता इयं शिवकथा तैस्तैः प्रयाणप्रतिप्रयाणकैः—पित्रोः विवाहमङ्गलम्, शिवजन्म, बाल्यं शिक्षा च, मातृसंस्काराः, विजापुरगमनम्, प्रतिज्ञा, तोरणाग्रहणम्, पितृबन्धनं मोचनं च, चन्द्रराववर्मदनं, अफझुल्लवधः[1], शास्ताखानशासनम् इत्यादिभिः—राज्याभिषेकरूपं गन्तव्यस्थानं यावत् दुर्निवारेण वेगेन अग्रेऽग्रे धावति। तत्पश्चाच्च अगतिको वाचकः। अहो एकैकस्या भाषायाः स्वभावविशेषः! बाल्याद् आरम्भ शतशः मातृभाषया श्रुता शिवकथा गैर्वाण्यां किमपि नवीनमिव रूपं धृत्वा पुरतः उपतिष्ठति। यथा यथा च वाचकः काव्यमिदं पठन् अग्रतो याति, तथा तथा च इदं त्रितयम् अधिकाधिकं स्पष्टतरं भवति—शिवप्रभोः चरितरेखा, तद्द्वारा प्रकटीभूता भारतीया आदर्शजीवनसरणिः, एतयोर्द्वयोश्च पर्याप्तम् उपस्थापनक्षमा वश्यवाचां वर्णकराणां काव्यशक्तिः।

### स्वधर्मार्थं स्वराज्यम्

शिवसंभवो हि स्वराज्यसंस्थापनाय। तद्धि शिवाजेः उग्रं महाव्रतम्। पितृपैतामहक्रमेण दृढमूलस्य परकीयराज्यस्य उत्पाटनं नाम न कापि शिशुक्रीडा। अस्य महाव्रतस्य निर्व्यूढ्यै इह जगति शिवाजि सृष्टवत्या नियत्या तदर्थम् आवश्यिका गुणसंपदपि साधन-

१. अफझलखाँ।

# जन्म या मृत्यु

## जब आपके परिवार में हो तो अपने स्थानीय रजिस्ट्रार के यहां रजिस्टर कराएं

### क्योंकि

जन्म प्रमाण-पत्र
उम्र का सबूत है :
* स्कूल में प्रवेश के लिए
* रोजगार के लिए
* मताधिकार प्राप्त करने के लिए
* ड्राईविंग लाइसेंस प्राप्त करने के लिए
* पासपोर्ट प्राप्त करने के लिए
* बीमा पालिसी प्राप्त करने के लिए

मृत्यु प्रमाण-पत्र
आवश्यक है :
* सम्पत्ति के उत्तराधिकार के लिये
* बीमा राशि वसूल करने के लिए
* सम्पत्ति के दावे निपटाने के लिए

## समय पर रजिस्टर कराएं और प्रमाण-पत्र निःशुल्क प्राप्त करें

जन्म और मृत्यु रजिस्ट्रीकरण कानूनन जरूरी है ।
विलम्ब रजिस्ट्रीकरण की भी अनुमति है ।



## महारजिस्ट्रार, भारत

त्वेन तस्मै प्रदता आसीत् । वर्णकरैः विचित्य विचित्य प्रसङ्गे प्रसङ्गे एते गुणाः संकीर्तिताः सन्ति । शिवाजिः प्रकृत्या धीर आसीत् । न च केवलं दूरदृक्, अपितु गूढस्वरन्ध्रोऽप्यासीत् । न केवलं नीतिमर्मज्ञः, अपितु अधिराजो हि धूर्तानाम् । क्रोधावेशेऽपि विमृश्यकारी । तावांश्चास्य आत्मविश्वासः, यत् पराभवविकल्पना तस्य मनसि स्वप्नेऽपि नोदेति । तथा चास्य संयमः, यद् अनिष्टं शृण्वतोऽप्यस्य भ्रूभङ्गमात्रेणापि नान्तर्गतो विकार ऊह्यः । कार्याकार्यविवेकिनी च तस्य प्रज्ञा 'मनुष्याणां सहस्रेषु क्वचिदेवावलोक्यते'। किंतु यत् सत्यम्, नास्यां गुणावल्यां किमपि आश्चर्यम् । यदि तस्य समीपे इयती गुणसंपत् नाभविष्यत्, तर्हि शिवाजिः स्वराज्यसंस्थापको नाभविष्यत् । तस्य आश्चर्यवहा गुणसंपत्तिः अन्यैवास्ति, यां वर्णकराः अधोरेखितां कुर्वन्ति । शिवाजिः न कस्मादपि मर्त्यात्, अफझुल्लखानाद् अन्यस्माद्वा बिभेति । स बिभेति एकतः श्रीरामचन्द्रात्, अपरतश्च पापाचरणात् । तस्य उच्चैः शिरो यवनराजपुरतो न नमते इति सदृशमेव एतत् तेजस्विनः स्वातन्त्र्यवीरस्य, तत्तु निःसंकोचं गुरुराजपदाम्बुजे सुनम्रं भवति इति तु सदृशतरं भारतीयस्य राजर्षेः । भगीरथप्रयत्नैः, अविश्रान्तैः परिश्रमैः, महता च त्यागेन संपादितं राज्यं शिवाजिः अयं 'वदान्यशिरोमणिः', मनागपि अविकृतः तृणीकृत्य गुरुदक्षिणीकरोति—अयमेव भेदः भोगार्थं स्वराज्यसंस्थापकस्य, धर्मार्थं च स्वराज्यसंस्थापकस्य ।

## अतिमानवे मानवत्वम्

शिवजीवितगतेन वर्णकरवर्णितेन एकेन प्रसङ्गेन गृहीकृतमस्ति मम मनः । वैयक्तिके कौटुम्बिके च सुखे अङ्गारं न्यस्यैव देशसेवाया महाव्रतं स्वीकर्तव्यमस्ति । एकस्मिन् क्षणे मनुजसुलभायाः कोमलभावनायाः आविर्भावः, अनन्तरे च क्षणे कठोरनिग्रहपूर्वकं तस्य दमनम्, इति नूनं कोऽपि विरलः प्रकारः महापुरुषजीवितेषु । अफझुल्लेन सह युद्धार्थं सुविधाकरत्वात् राजगडं विहाय प्रतापगडाय प्रस्थितः शिवाजिः 'को नु वेद, कदाचित् अन्तिम एवायं सहवासः स्यात्' इति चिन्तयन्निव मातुश्चरणयुगलं वन्दित्वा आबाल्यतः सखीभूतायाः पत्न्याश्च प्रणामनतायाः मस्तकं संस्पृश्य, तस्याश्च हस्तात् स्तनंधयं पुत्रमादाय तं मुहुर्मुहुः चुम्बति । क्षणमात्रम्—क्षणमात्रमेव—इष्टजनसहवासः तं निरुणद्धि । तस्य चरणं कष्टेनेव प्रवर्तते । उत्तरक्षणे तु—

प्रियतमजनसंनिकर्षसक्तं क्षणमेनं शिवमुग्रकर्मनिष्ठा ।
रणमखविषये प्रतापदुर्गं प्रति गन्तुं त्वरयांचकार सद्यः ॥

धन्यः स शिवाजिः ! धन्यश्च स कविः यः शिवप्रभोः मानवत्वम् अतिमानवत्वं च एवं युगपद् एकस्मिन् श्लोके साक्षारम् अकरोत् ।

## रम्याणि शब्दचित्राणि

एतावता वर्णकराणां परिचयः, विशिष्य अदत्तोऽपि, वाचकस्य स्यादेव इति मन्ये । नेदं शिवचरितम् गुरुचरितवत् आस्तिक्यमात्रबुद्ध्या पठनीयम्, न वा केवलं संस्कृतमयम् इत्येव कौतुकास्पदतां नेयम् । अस्ति तत्र काचित् कवित्वशक्तिः या तादृशमपि वाचकं विलोभयेत्, यस्य केवलं संस्कृते रुचिः, न शिवचरिते । काचिद् अन्यादृश्येव तेषां प्रभुता संस्कृतभाषायाम् । ते हि तां यथेष्टं प्रभवन्ति नमयितुम् । बाणवाणीव सापि द्विरूपा—वर्णने गौडी, संवादे च वैदर्भी । अस्ति काचित् शब्दचित्राणां निर्माणशक्तिः अस्मिन् कवौ यया मम चेतसि किमपि दृढं पदं कृतमस्ति । नैकवारम् अत्र विषये उद्धृतानां केषांचन श्लोकानां पुनरपि उद्धारमोहम् अप्रभुरस्मि नियमयितुम् । दृश्यताम् अयं रामदासवर्णनपरः श्लोकः—

पदस्थपादुकायुग्मोत्थितैश्चटचटायितैः ।
निर्दिशंस्तीर्थसंचारे धर्मस्य त्वरितां गतिम् ॥

श्लोकपठनवेलायाम् एवं भाति यत् स्वयं रामदासः चटुलगत्या अस्मत्पुरतः तीर्थयात्रार्थं संचरतीव । अस्य श्लोकस्य सौन्दर्यं सहृदयानां स्वसंवेद्यम् । के वयं तद् उद्घाटयितुम् ?

तुकाराम-रामदासौ नाम शिवकालीनस्य महाराष्ट्रनभसः चन्द्रसूर्यौ । सन्ति हि साधवः स्वरूप-

मापन्नाः अपि प्रकृतिभेदभिन्नाः । तुकारामस् तावत् नवनीतादपि नवनीततरः नयने सदैव विट्ठलप्रेम्णा अश्रुक्लिन्ने ।

**विट्ठलस्मृतिमात्रेण निर्यन्नीरं यदक्षिजम् ।**
**हृदये नीरसस्यापि भक्तिवल्लीमवर्धयत् ।।**

एतादृशः सः ।

रामदासस्तु—श्रूयतां कीदृशी तस्य वाणी !
**धगद्धगद्-विनिर्गच्छत्-प्रलयंकरदाहभृत् ।**
**ज्वालेव सूर्यसत्रस्य यद्वाणी रणकर्कशा ।।**

### वश्यवाक् वर्णेकरः

अत्र प्रतिपाद्यां रामदासवाणीमपि अतिशेते इव कवेः अङ्गारवर्षिणी वाणी । विरलो ह्यन्यत्र ध्वन्यर्थयोः एवम् अन्योन्यसंवादः । मन्ये इयं संस्कृतभाषापि वर्णेकरहस्ते काचित् चिक्कणा मृत्तिका संपद्यते, या तं तमाकारं गृह्णाति, यं यं कविरच्छति । नानेन कविना शब्दाः प्रार्थनीयाः। प्रत्युत ते एव बद्धाञ्जलयः अस्य पृष्ठानुपृष्ठं ससंभ्रमं धावन्तीव ।

नास्त्यन्तः उदाहरणानाम् । तथापि एकमेव अन्तिमम् उदाहरणं निर्दिश्य उपसंहरामि । शिवाजिः, तस्य सहकारिणश्च स्वातन्त्र्यसंगरम् उद्घोषयन्तो भगवन्तं रोहिडेश्वरं श्रद्धाधैर्यादिकां गुणसंपदम्, तस्य च अनुग्रहं प्रार्थयन्ते । तत्रत्या एते चत्वारः आदिश्लोकाः—

**स्वातन्त्र्यसङ्गरदीक्षिताः त्वच्चरणशरणागताः ।**
**वयमविचलनिश्चयाः 'हर हर हर महादेव' ।।**
**उद्दामवेगपुरःसरा एते वयं गिरि निर्झराः ।**
**ध्येयार्णवं समपेयुषो 'हर हर हर महादेव' ।।**
**श्रद्धा हिमाद्रिसमाचला शक्तिर् नृसिंहनिभाऽतुला ।**
**आविर्भव तु अस्मासु सा 'हर हर हर महादेव' ।।**
**वज्रः शिरसि यदि निष्पतेद् वह्निर्वपुषि यदि सविशेत् ।**
**न हि निश्चयो नः प्रस्खलेद् 'हर हर हर महादेव' ।।**

एतद्-रणगीतविषये यन्मया पूर्वं लिखितम्, तदेव केवलम् अनुवदामि—'घनीभूत इवात्र आवेशः। मूर्तमिव चैतन्यम् । देहबद्धमिव ओजः' ।

### देशभक्तिरसः वर्णेकरोपहारः

अन्ते, अस्यैकस्य विषयस्य निर्देशं विना लेखोऽयम् अपूर्ण एव तिष्ठेत् । स नाम वर्णेकराणां संस्कृतसाहित्याय उपहारः, प्रदानं, योगदानं वा । किं नाम तैः संस्कृतसाहित्याय अनन्यसाधारणतया प्रदानीकृतम् इति चेत् 'राष्ट्रभक्तिरसः' इत्यस्य निःसंशयम् उत्तरम् । न तत्पूर्वं केनापि इयत्या मात्रया, इयता च औत्कट्येन स्वीयेसंस्कृतवाङ्मये देशभक्तेः एवं सरससरसः आविष्कारः कृतः । युगोचितस्य अस्य देशभक्तिरसस्य इदं प्रथमतया वर्णेकरैः कृतस्य परिपोषणस्य उदाहणत्वेन दृश्यन्तां एते कतिपये श्लोकाः—

**युद्धमुक्तं भगवता स्वर्गद्वारमपावृतम् ।**
**तत्स्वराष्ट्रहितार्थं चेत् मुक्तिद्वारं मतं मम ।।**
**योगिभिश्चापि कालेऽस्मिन् युद्धयोगेन साध्यताम् ।**
**आत्ममुक्तिं तिरस्कृत्य राष्ट्रमुक्तिर्महीयसी ।।**
**न सम्मानकामो न वा वित्तलोभो**
**न च स्वार्थमोहो न शक्त्युन्मदो वा ।**
**मनस्यस्तु वो राष्ट्रसेवाव्रतानां**
**सखायः कदाचित् कुतश्चित् कथंचित् ।।**

शृङ्गारम् अपसार्य वर्णेकरैः संस्कृतसाहित्ये देशभक्तिरसस्य या केनापि अकृतपूर्वा प्रतिष्ठापना कृता तत् खलु तेषां संस्कृताय अनितरसाधारणं प्रदानम्, तच्च तेषां क्रान्तिकरम् ऐतिहासिकं कार्यम् इत्यसंशयं भावी इतिहासकारः स्वनिर्णयम् उद्घोषयिष्यति ।

अस्य विंशतितमस्य शतकस्य उत्तरार्धस्य को वा सर्वोत्तमः संस्कृतकविः इति पृष्टं चेत् अहं झटिति प्रतिब्रूयाम्—

**'कविर्वर्णेकरो वर्णेकरो वर्णेकरः कविः' ।**

# मया दृष्टो डॉ० वर्णेकरमहोदयः

डॉ० के० रा० जोशी
नागपुरम्

डॉ० श्रीधर-भास्कर-वर्णेकरमहोदयः प्रज्ञा-भारती, महाकविः इति संस्कृतजगति विश्रुतकीर्तिः भवति महाराष्ट्रप्रदेशस्य अभिमानभूमिः। अतीतानि चत्वारि वर्षदशकानि तत्रभवन्तमहं जाने। उपचत्वारिंशेभ्यो वर्षेभ्यः पूर्वं नागपुरे नेशनलकॉलेज इत्यत्र आसीत् कश्चित् तरुणः प्राध्यापकः यः खलु आत्मानम् एम्० ए०, काव्यतीर्थं—इत्युपाधिभ्यां सर्वदा सगौरवं समुदलिखत्। नागपुरे तदानीं प्रायः सर्वेऽपि संस्कृतप्राध्यापकाः एम्० ए० इत्युपाधिधारिण एवाभवन्। ततः काव्यतीर्थेति संनिर्दिशन् अयं महाशयः प्राच्यविद्योपाधिधारिणां जनानाम् अभूत् स्नेहास्पदम्।

### स्वराज्यलक्षणं हि संस्कृतविद्याप्रसारः

ख्रिस्ताब्द १९५० मितवर्षीयः स कालः। राष्ट्रिय-स्वयंसेवक-संघविषया निषेधाज्ञा तदानीं विरता आसीत्। भारते स्वातन्त्र्यप्राप्तेरनन्तरं नवजागरेण स्वदेश-स्वभाषा-स्वधर्मविषये किमपि स्वयं विधातुं पुरःसर्तव्यम् इति नवचेतना समाजमनसि समभवत्। अस्मिन् देशे स्वराज्येन सह संस्कृतविद्याप्रसारस्य भवति खलु चिरन्तनः संबन्धः। ख्रिस्ताब्दीये चतुर्दशे शतके विजयनगरसाम्राज्ये सुप्रतिष्ठिते वेदभाष्यादि-निर्माणं सम्राजा प्रोत्साहितं तत एव शोभते। तदनु पुण्यश्लोक-शिव-च्छत्रपतिनाऽपि स्वराज्ये संस्कृत-विद्या-जागरणं प्रारब्धम् इति वयं स्मरामः। संस्कृत-विद्यामञ्जूषामयी संस्कृतवाणी तु अस्य भारतदेशस्य अनादिकालादारभ्य भवति नाम नैसर्गिकी राष्ट्रभाषा। भारते संप्रति लोकव्यवहारे समुपयुज्यमानाः हिन्दी-मराठी-बङ्गला-तेलुगु-कानडी-प्रभृतया लोकभाषाः नूनं तत्तत्प्रदेशोचितानि संस्कृतरूपाणि। साक्षात् संस्कृतं तु अद्यापि सर्वस्मिन् भारते बहुसंख्यकसमाजे आगोपा-लाङ्गणं जन्मविवाहनिधनादिनिमित्तेषु धर्मकार्येषु, मन्दिरादौ पुराणप्रवचनादिषु, भिन्नभाषिविद्वत्सभासु चर्चाप्रसङ्गे च जागर्ति।

प्रथम-भारतमहामात्येन पं० जवाहरलालनेहरू-णापि संस्कृतं, तद्गतसाहित्यं च दायक्रमागता सर्व-श्रेष्ठा नः राष्ट्रिया सम्पत्तिः इति समुद्घोषितम्। तेषु दिवसेषु भूतपूर्वे[1]मध्यप्रदेशराज्ये राज्यपालपदे समभवत् संस्कृतात्मा डॉ० पद्मश्रीसीतारामय्यामहोदयः।

### संस्कृतभवितव्यपत्रस्य जन्म

संस्कृतविद्यानाम् अध्ययने नवव्यवस्थानिर्माणात्-पूर्वम् नवकालानुरूपं संस्कृतभाषास्वरूपं लोकाभिमत-प्रकाशने क्षमं नियतकालिकपत्रिकारूपेण लोकानां पुरतास्तिष्ठतु इति समाजमनसि स्थिता भावना एकदा राज्यपाल—डॉ० पद्मश्रीसीतारामय्यामहा-भागेन राजधान्यां नागपुरे राजभवने तदानीन्तनानां संस्कृतज्ञानां पुरतो निवेदिता पुरस्कृता च। ततो लब्धबलः संस्कृतप्रेमी, संघटनकुशलः, स्थिरधीः मितवाक्, संप्रति दिवंगतः श्रीसदाशिव-नारायण-कुलकर्णीमहोदयः, आप्पासाहेब नाम्ना परिचितेषु सुविदितः, संस्कृतज्ञानां संभूय समुत्थानं विधातुं सर्वेषां सहकार्येण संस्कृत-भाषा-प्रचार-सभां कार्तिक सुदि प्रबोधिन्याम् एकादश्यां शके १८७२ मित (दि० २०-११-१९५०) समस्थापयत्। तदनन्तर सं० भा० प्रचारिसभायाः प्रमुखसचिवपदम् अधि-तिष्ठता तेन अपूर्वं कार्यसंघटनकौशलं समुपयुज्य चैत्रे सुदि वर्षप्रतिपदि शके १८७३ मिते संस्कृत-भवितव्य-साप्ताहिकपत्रं प्रकाशयितुं संकल्पितम् पर तत्र अपेक्षितः आसीत् पत्र-सम्पादकः।

१. पूर्वं किञ्चित्कालार्थं नागपुरं मध्यप्रदेशस्य राजधानी आसीदतः अत्र भूतपूर्वे इति शब्दप्रयोगः।

### सम्पादकपदे प्रा० वर्णेकरस्य योजना

प्रायः संस्कृतज्ञाः संस्कृतेतरभाषासु संस्कृत-विषये शोभावाक्यानि तु बहु वदन्ति, परं न ते संस्कृते वदन्ति, न वा लिखन्ति। केचन इच्छन्तोऽपि तदा न कमपि अवसरं लभन्ते। अतः संस्कृतभाषणे, संस्कृतलेखने च क्षमं जनम् अन्वेषयितुं प्रयतमानाः समाधिकारिणः तरुणं प्रा० श्रीधर-भास्करवर्णेकरमहोदयं संस्कृत-भवितव्य-सम्पादकपदे न्ययुञ्जन्।

तदानीं किल मराठीभाषायां राष्ट्रशक्ति-साप्ताहिकपत्रस्य सम्पादने लब्धानुभवः श्रीमान् नागपुरे नैशनलकॉलेज इत्यत्र संस्कृतप्राध्यापकः अभवत्। बाल्यात् प्रभृति राष्ट्रिय-स्वयंसेवक-संघस्य विचारैः संस्कृतात्मा, संघकार्येण च नितरां सम्बद्धः,, राष्ट्रकल्याणहेतुकं संस्कृतोत्थानं समभिलषता सम्प्रति दिवंगतेन रा० स्व० संघस्य सुचिरं किल अखिल-भारतीय-बौद्धिक-प्रमुखेन श्रीमता उमाकान्त-केशव-आपटेमहाशयेन पौनः पुन्येन संस्कृत-कार्येषु प्रेरितः प्रा० वर्णेकरमहोदयः संस्कृतभवितव्यसम्पादकपदम् अधितिष्ठन् अनितरसाधारणेन उत्साहेन स्वयं प्रवर्तमान अन्यांश्च प्रैरयत्।

### नागपुरस्थं संस्कृतवाग्विलसमण्डलम्

स्मरामि तदानीन्तनान् दिवसान्। नागपुरपूर्व-भागः तदानीं संस्कृतप्रणयिनां किमपि केन्द्रमासीत्। नागपुरे संस्कृत-वाग्विलास-मण्डलं तेष्वेव दिवसेषु भोसला-वेदशास्त्र-महाविद्यालये लब्धनवयोगं प्रावर्तत। आदौ नागपुरपूर्वभागे निवसता श्री स० ना० कुल-कर्णीमहाभागेन सं० वाग्विलास-मण्डलस्य प्रतिसप्ताहं शनिवासरे चर्चाधिवेशनं समुपक्रान्तम्। प्रतिशनि-वासरं रात्रौ अष्टवादनतः एकहोरापर्यन्तं संस्कृत-भाषणमभ्यसितुकामास्तत्र सममिलन्। संस्कृतं विहाय नान्या भाषा प्रयोक्तव्येत्यासीत् स्वयं स्वीकृतो निर्बन्धः। प्रासङ्गिकवार्तानिवेदनं, कथाकथनं, विविधविषयचर्चा, संस्कृतकाव्यविवरणादि चेत्यासीत् तत्रयं कार्यस्वरूपम्, संस्कृतभाषणे अनभ्यस्तानामितरे सहायकाः अभवन्। दादाशास्त्रि-गाडगे-पं० शंकरशास्त्रि आर्वीकर पं० दादा देशपांडे-दादारोडो-पं० नानाजी-पानुरकर न० ना० भिडे (संप्रति पुणेवासी) गु० वा० पिंपलपुरे—आप्पासाहेब कुलकर्णी—पं० अम्बादास-शास्त्रिपाण्डे प्रभृतयः प्राय उपविंशा जनास्तत्र सम-गच्छन्। आप्पासाहेब कुलकर्णी महाशयस्य प्रेरणया प्रस्तुतनिबन्धलेखकः मण्डलसचिवस्य कार्यभारं प्रथम-पञ्चवर्षाणि ( शासनसेवावशेन मुम्बापुरीगमनावधि ) निरवहत्। स्वयं प० पू० गोळवलकर गुरुजी—बाबा-साहेब-आपटे प्रभृतयः नैकवारं संस्कृतप्रयोगस्यास्य परीक्षार्थं स्वयंग्राहप्रणयेन उपतिष्ठन्। गुरुपूर्णिमा-मकरसंक्रमण - वर्षप्रतिपद्-शिवच्छत्रपतिजयन्त्युत्सवाः संस्कृतोपयोगेन तदानीम् आयोज्यन्त। संस्कृतभाषया आधुनिकविषयेषु नागरिकाणां प्रकटा वादाः संपूर्णे महाराष्ट्रे (बहुधा भारतदेशे) नागपुरे संस्कृतवाग्-विलासमण्डले आरब्धा इति वयं सगौरवं लक्षयितु-मर्हामः। नागपुरस्थाः प्रायः नवाः संस्कृत-कार्यकर्तारः, संस्कृतलेखकाः, संस्कृतवक्तारो वा सं० वा० मण्डलतो लब्धसंस्काराः सन्ति। तैः नागपुरवर्ति संस्कृतजगत् किमपि सेवितम्।

### संस्कृतभाषणशैल्याः विकासः

एतेष्वेव संस्कृत-वाग्विलास-मण्डलकार्यक्रमेषु आरम्भे एकदा प्रा० श्री० भा० वर्णेकरमहाशयः सार्व-जनिके वादविवादे आमन्त्रितः संस्कृते भाषणमकरोत्। सप्तमिनिटात्मके नियते कालावधौ तु पञ्चमिनिटैरेव स्वभाषणं समाप्नोत्। वादविजयः आसीत् 'संस्कृत-साहित्याध्ययनं राष्ट्रहानिकरम्'। पक्षविपक्षयोः प्रमुखत्वेन शुद्धललितसंस्कृतभाषणे क्षमौ प्रा० स० गो० सामलवार-गुरुवर्य शं० गो० सहस्रबुद्धेमहाभागौ प्रौढौ वाग्मिनौ अभवताम्। तदनन्तरम् एकदा प्रा० वर्णे-करमहाभागेन तत्रैव मण्डले मकरसंक्रमणोत्सवे प्रधानभाषणमपि कृतम्। मन्ये (यद्) अत्रत्यः संस्कृत-भाषणानुभवः शुभफलः अभवत्। तदनन्तरं यत्र कुत्रापि संस्कृतं विना नैव भाषेयम् इति दृढसंकल्पं निर्वहता प्रा० वर्णेकरमहोदयेन प्रसादपरिपूर्णे ललित-परिहासमण्डिते सुदीर्घभाषणे किमपि पाटवम् अधि-

गतम्। तदीयः सं० वा० मण्डलगते प्रथमभाषणे प्रकटः संस्कृतवागङ्कुरः नातिस्फुटः पररूपाद् यादृशं विकासं प्राप्नोत् तं वयं जानीमः। संस्कृताध्यापनं, संस्कृतलेखनं, संस्कृतभाषणम् इत्यादिभिः प्रयोजनैः वृद्धिगतं संस्कृतपरिचयदार्ढ्यं वर्णेकरमहाशयस्य श्रेयसे अभूत्।

## उन्नति-सोपान-परम्परा

संस्कृतभवितव्यम् साप्ताहिक-पत्रस्य संपादकरूपेण संस्कृतजगति परिचयस्य अभिनवः अवसरः प्रा० वर्णेकरमहाशयेन सफलः कृतः। रा० स्व० संघस्य संबन्धेन विविधेषु स्थलेषु संस्कृतभाषणैः लोकसंग्रहः अवर्धत। ततो मध्यप्रदेशशासनेन संस्कृतकार्यगौरवेण मानसेवि-संस्कृतप्रचारकत्वेन (डा०) प्रभुदयाल अग्निहोत्रि-महाशयेन सह प्रा० श्री० भा० वर्णेकर-महाभागोऽपि नियुक्तः। तदर्थं प्रथमः प्रकाशः जनताकृतः संमानः संस्कृतवाग्विलासमण्डले म० म० वा० वि० मिराशीमहोदयानाम् अध्यक्षत्वे आयोजितः आसीत्।

परतः १९५४ मिते ख्रिस्ताब्दे वि० व० संस्कृतपरिषदः आयोजनप्रसङ्गे सहकार्यवाहपदे प्रा० श्री० भा० वर्णेकरमहाशयस्य योजना अभवत्। तत्रत्यं कार्यं दृष्ट्वा प्रसन्नेन विश्वसंस्कृतपरिषदः सूत्रधारेण श्री-कन्हैयालालमुन्शीमहोदयेन परिषत्कार्यार्थे वर्षद्वयं यावत् प्रा० वर्णेकरमहाभाग युयोजिषितः। स खलु तदर्थं नेशनलकॉलेज-संस्थायाः अनुमतिं लब्ध्वा नवनियोगं स्वीचकार। तन्निमित्तं भारतदेशव्यापिना सञ्चारेण महती अनुभवसंपत् प्रा० वर्णेकरमहाशयेन अर्जिता। तस्यैव किमपि फलम् अर्वाचीन-संस्कृतसाहित्येतिहासविषयकेण तदीय-प्रबन्धेन नागपुरविश्वविद्यालयेन डी०लिट्० उपाधिना मण्डितेन प्रकटितम्।

## नागपुरविश्वविद्यालये नियोगः

१९५८ मिते ख्रिस्ताब्दे प्रा० श्री भा० वर्णेकरमहाशयः नागपुरविश्वविद्यालये स्नातकोत्तर-संस्कृतविभागे अधिव्याख्यातृत्वेन नियुक्तिमलभत। क्रमेण प्रपाठकपदं प्राप्तः प्रथम-संस्कृत-विभागाध्यक्षस्य सुगृहीतनामधेयस्य डॉ० ग० त्र्यं० देशपाण्डेमहाशयस्य सेवानिवृत्तेः अनन्तरं १९७२ तः १९७९ मित-ख्रिस्ताब्दस्य जूनमासान्तं यावत् संस्कृतविभागाध्यक्षपदं मण्डितवान्।

## प्रस्तुतलेखकेन संबन्धः

संस्कृतभवितव्यसंपादकपदे कार्यं कुर्वता प्रा० श्री० भा० वर्णेकरमहाशयेन सह साप्ताहिकपत्रस्य प्रथमवर्षतः आरभ्य लेखकरूपेण प्रस्तुतनिबन्धकारस्य सम्बन्धः क्रमशो वृद्धिगतः। परस्तात् ख्रि० १९६० तः ख्रि० १९७५ पर्यन्तं संस्कृतभवितव्यस्य संपादकत्वं, संस्कृतभाषाप्रचारिसभायाः प्रमुखकार्यवाहकत्वं (१०७० तः १९७६), संस्कृतभवितव्यस्य प्रकाशकत्वं (१९७० तः १९७६) च अनेन जनेन ऊढम्। अतः संस्कृतसाप्ताहिकपत्रस्य सम्पादने, प्रशासकीये व्यवहारे च स्थितं क्लेशजातं स्वानुभवेन जानामि। परं सौभाग्येन देवगिरः, उद्ध्वस्तप्रायं सभाकार्यं ख्रि० १९७० तः पुनरपि सुचारु प्रवर्त्य लोकशक्तेः उपयोगेन संस्कृतभवननिर्माणं, संस्कृतमुद्रणालयप्रवर्तनं, संस्कृतपुस्तिकानां पुनः प्रकाशनं, प्रचारपरीक्षायोजनेत्यादिभिः संस्कृतभाषा-प्रचारिसभायाः नवयोगस्य विधानम् अस्मिन् कालखण्डे संस्कृतज्ञानां संस्कृतप्रणयिनां च साहाय्येन सिद्धिं नीतम्। किं बहुना, चत्वारिंशति वर्षेषु विदर्भप्रदेशे संजातैः विश्वजनीनैः संस्कृतकार्यैः सातिशयं सम्बद्धस्य मे डॉ० वर्णेकरमहाशयस्य उपयोगः सुविदितः।

## डॉ० वर्णेकरमहोदयस्य कार्य-पद्धतिः

ख्रि० १९७० तः पूर्वं संस्कृत-भाषा-प्रचारिसभायाः कार्यकारिण्यां कतिपयवर्षाणि सदस्यत्वं धारयति स्म डॉ० वर्णेकरमहाशयः। नागपुरस्थे भोसलावेदशास्त्रमहाविद्यालये तु स खलु पञ्चदशवर्षाणि अध्यक्षपदम् अभजत्। महाराष्ट्रशासन-नियुक्तायाः स्थायि-संस्कृतसमितेः सदस्यता अपि डॉ० वर्णेकरमहाशयं वृतवती। बहुश्रुततामण्डितम् उक्तिचातुर्यं भवति डॉ० वर्णेकरमहाभागस्य वैशिष्ट्यम्। प्राप्ते अवसरे युक्तिचातुर्यमपि ततः बोधन्ति कार्यकर्तारः।

# गाँधीमहाभागानां स्वप्नः साकारः

## ग्रामान् यावत् सत्ता

❀ प्रधानमन्त्रिणः श्री राजीवगान्धिमहाभागस्य प्रखरनेतृत्वे तथा मुखमन्त्रिणः श्री नारायणदत्त-तिवारिमहोदयस्य निर्देशने राष्ट्रपितुः पंचायतीराज्यस्य परिकल्पनां साकारयितुम् उत्तरप्रदेशेनानैकानि महत्त्वपूर्णानि पदानि प्रक्षिप्तानि ।

❀ नवीन-पञ्चायती-राज्यस्य विधेयकानुरुपं ग्रामपंचायतेभ्यः नवीनाः अधिकाराः नवीनम् उत्तरदायित्वं दास्यते ।

❀ पञ्चायती-राज्य-संस्थानां नियमितरूपेण निर्वाचनं कारयितुं व्यवस्था सुनिश्चिता क्रियते, येन मूले लोकतन्त्रं दृढं स्थानीयनेतृत्वं च विकसितं भूयास्ताम् ।

❀ राज्यसर्वकारस्य तथा सार्वजनिकेषु उपक्रमेषु अनुसूचितजातीनाम् अनुसूचितजनजातीनां च आरक्षितस्थानानि (कोटा) पूरयितुं विशेषरुपेण अभियानं चालितमस्ति ।

❀ विगतवर्षे ७३,९१४ ग्रामपञ्चायतानां निर्वाचनं सम्पादितम् । इदानीं ३० प्रतिशतं महिला-प्रतिनिधीनां निर्वाचनं शीघ्रं सम्पत्स्यते ।

❀ ग्रामेषु ग्रामविकासकार्याणि ग्रामसभाद्वारैव सम्पादयितुं करग्रहणस्याधिकारः ताभ्यः एव दत्तः वर्तते ।

❀ विकासकार्येषु ग्रामसभानाम् अंशदानम् ५० प्रतिशतस्य स्थाने अधुना १० प्रतिशतं कृतम् । शेषं ९० प्रतिशतांशदानं सर्वकारस्य भविष्यति ।

❀ प्रथमवारं ग्रामसभायै करग्रहणस्याधिकारः ।

❀ ग्रामीणक्षेत्रेषु सार्वजनिकवितरणप्रणाल्याः संचालनस्य दायित्वं ग्रामसभाया उपरि दातुं निर्णयः ।

❀ 'जवाहररोजगारयोजनां' प्रवर्तयितुमपि उत्तरदायित्वं ग्रामपञ्चायतेभ्य एव दत्तमस्ति । एतदन्तर्गतं ५१७ कोटिरुप्यकाणि व्ययीकरिष्यन्ते तथा ११.५६ कोटिमानवदिसाः सृजिता भविष्यन्ति ।

❀ ७९९८० ग्रामेषु पेयजलस्य सुविधा दत्ता वर्तते । हरिजन-पेयजल-योजनाया अन्तर्गतं ५४१५१ कूपाः २१,३५४ हस्तनलाः (हैण्डपम्प) तथा ५०७१ डिग्गीआदयः निर्मिताः ।

## सूचना तथा जनसम्पर्क-विभागः, उत्तरप्रदेशः

अतः सम्बद्धायाः संस्थायाः कार्यकर्तारः अधिकारिणः यथा तेषां सद्गुणजातस्य उपयोगे क्षमेरन् तथा संस्थाया लाभो भवेत्। डॉ० वर्णेकरमहाभागः स्वतः न क्वापि अधिकारप्रयोगं कृत्वा संस्थाहिते सञ्चालने नियमने वा पुरः सरति। अस्याः कार्यपद्धतेरयं गुणो यद् इतरे संस्थाधिकारिणः संस्थाकार्येषु स्वबुद्धिकौशलोपयोगे अपरतन्त्राः कार्यं कुर्वन्ति। निर्णयप्रमादेन विपरीतदशायां तुं संस्थाकार्येषु उत्पन्नाः दोषाः अन्ततः अध्यक्षं स्पृशन्ति, भोसला-वेदशास्त्रि-महाविद्यालयः अस्य भवति निदर्शनम्।

### डॉ० वर्णेकरमहोदयस्य उपयोगे यशः

तदीयसद्गुणानां समुपयोगेन लाभः कथं भवतीति वयं जानीमः। इतः नागपुरविश्वविद्यालये स्नातकोत्तर-संस्कृत-विभागे अध्यक्षत्वं डॉ० वर्णेकरमहाशयस्य विभागप्रमुखपदतः सवानिवृत्तेः पश्चात् ख्रि० १९७९ तः ख्रि० १९८८ मिते अवकाशे प्रस्तुतनिबन्धरचयित्रा निर्व्यूढम्। अस्मिन् काले एम्० फिल्० उपाध्यर्थे पाठ्यक्रमप्रवर्तनम्, एम० ए० (भागः २) परीक्षायाः कृते साहित्यशास्त्रेण सह यथाछात्रप्राथनं दर्शन-वेद-संकीर्णवर्ग विषयाणां विशेषाध्यापनं च विभागे प्रवर्तिते। अहिन्दीभाषिराज्येषु विद्यमानाः संस्कृतशिक्षासमस्याः (१९८२), स्वातन्त्र्योत्तरं रचितं नवसंस्कृतसाहित्यम् (१९८५) इत्यनयोः विषययोः विश्वविद्यालय-अनुदान-आयोग-साहाय्येन अखिल-भारतीय-चर्चापरिषदा नागपुर विश्वविद्यालये-यथोचितम् आयोजनं, तदर्थं संस्कृतभाषया **उपायन-नवोदय** 'स्मरणिकयोः' निर्माणं, परिषदो निबन्धविशेषणोपबृंहितस्य कार्यवृत्तान्तस्य ग्रन्थरूपेण संस्कृतविभागद्वारा प्रकाशनं, शारीरिकभाष्यविषयकस्य स्वतन्त्रविश्वविद्यालयीयशोधप्रकल्पस्य सफलं निर्वहणं, शासकीय-शोध-शिष्यवृत्ति-वितरणेन पी-एच्० डी० कृते, पी-एच्० डी० उपाध्युत्तर-शोधप्रकल्पस्य प्रारम्भणं, संस्कृतार्थे लघुपाठ्यक्रमनिर्धारणेन प्रौढजनताशिक्षणस्य प्रयोगः, लोकसाहाय्येन शिक्षाविभागस्य दृक्श्राव्य-शिक्षासामग्री-सज्जतासाधने प्रयासः, संस्कृतानुकूलायाः लोकशक्तेः जागरणं संघटनं चेति नैकानि प्रायःपूर्वम् विभागे अननुष्ठितानि कार्याणि अतीतैः अष्टभिर्वर्षैः विहितानि।

सानन्दं निर्दिशामि, यत् एतेषु कार्येषु डॉ० वर्णेकरमहाशयस्य साहाय्यं यदा यदा आवश्यकं तदा तदा संस्कृतविभागेन प्रीतिसान्द्रं लब्धम्। सेवानिवृत्त्यनन्तरमपि समाहूतो डॉ० वर्णेकरमहाशयः नैकानि वर्षाणि अध्यापनभारम् अंशतः स्वीकृत्य विभागस्थान् छात्रान् बोधितवान्। तदीयेन स्नेहेन विश्वासेन च अयं जनः सर्वदा अनुगृहीतस्तिष्ठति। अहिन्दीराज्यीय-संस्कृत-शिक्षा-समस्या-परिषदः आयोजनावसरः अद्यापि मदीयस्मृतौ उपस्थितस्तिष्ठति। मनोरथाः भूयांसः, सामग्री अत्यल्पा, विघ्नशतानि पुरतः स्थितानि, सहायकाः च निरनुभवाः। इत्यासीत् अस्मदीया तदानीं स्थितिः। धनकार्श्येन तु संस्कृतपरिषद् केषाचित् उपहासविषयः आसीत्। परम् अविगणय्य इदं, कुलगुरु-प्रा० गुलाबरावकदममहाशयाधिष्ठिता स्वागतसमितिः विरचिता। परं न तावता कार्यसिद्धिः। जनतासहाय्यम् आवश्यकम्। डॉ० वर्णेकरमहाशयेन सह कृतो विमर्शः। एवं कार्यक्षेत्रे साक्षात् प्रवृत्तिः डॉ० वर्णेकर-कार्यगौरवेण अस्मासु स्नेहातिशयेन च डॉ० श्री भा० वर्णेकरमहाशयः पुरस्सृतः। तदानीम् अध्यक्षरूपेण डॉ० शि० द०-जोशी महाशयः पूर्वविश्वविद्यालयस्य प्रगतसंस्कृताध्ययनकेन्द्रप्रमुखः परिषदि उपस्थितः आसीत्। तदानीं परिषदायोजनेन नागपुरे सोत्साहं निर्दैन्यं संस्कृतमयं निरस्तविरोधं वायुमण्डलं दिनत्रये निर्मातुं वयं समर्था अभवाम। अतो डॉ० वर्णेकरमहाशयस्य सद्गुणानाम् उपयोगेन संस्कृतकार्ये कीदृशी सिद्धिः अर्जिता भवति, मार्गारब्धाः सर्वयत्नाः कथं फलन्ति इति सप्रत्ययं जानामि। द्वितीयपरिषदि अपि अयम् अनुभवः नवीकृतः।

'संस्कृतभवितव्य'-सम्पादकत्वे, स्नातकोत्तर-संस्कृतविभागप्रभुत्वे च तदीयः पूर्वसहकारी तदनु उत्तराधिकारी इति डॉ० वर्णेकरमहाशयस्य स्वक्षेत्रे

सफलां कार्यशैलीम् अतिनिकटतः द्रष्टुं लब्धावसरेषु विरलेषु जनेषु प्रस्तुतलेखकः भवति ।

### वाङ्मयसंपदः स्वरूपम्

कश्चित् कार्यकर्ता स्वलक्ष्यैकदृष्टिः कर्तव्यत्वेन विविधेषु गणनीयेषु कार्यजातेषु सत्स्वपि स्वमर्यादां निश्चित्य तत्र अम्भसि पद्मपत्रमिव आत्मानं स्थापयित्वा कथं स्वयशः सम्पादयतीति द्रष्टुं डॉ० वर्णेकरमहाशयः निदर्शनमेकम् । तत एव महाकाव्य-नाटक-लघुकाव्य-संगीतिकामयीं विपुलां वाङ्मयसम्पदं निर्मातुं तेन अवसरो लब्धः । इयं वाङ्मयसम्पद् द्विविधा, काचन स्वेच्छाप्रारब्धा अन्या तु परेच्छाप्रारब्धा । संस्कृतविषये, स्वदेशविषये, गुणज्येष्ठानां श्रेष्ठानां विषये कथञ्चित् निमित्ते उपस्थिते डॉ० वर्णेकरमहाशयः स्फुरत्प्रतिमाविशेषेण मण्डित-रचनाजातं विना अन्तरायं सहजेन प्रेम्णा लिखति । सद्गुणेषु रतिः इति एतस्याः वाङ्मयसम्पदः स्थायिभावः । श्रीशिवराज्योदय - विवेकानन्दविजय - श्रीशिवराजाभिषेक-कालिदासरहस्य–रामकृष्णपरमहंसीय-जवाहरतरङ्गिणी-विनायकवैजयन्ती इत्यादयो रचनाविशेषास्तत्र उदाहरणानि । ग्रामगीता, ज्ञानेश्वर्यनुवादः, संस्कृतवाङ्मयकोषः, इत्यादयस्तु परेच्छा-प्रारब्धवाङ्मयसम्पदः निदर्शनपरम् उभयत्रापि यद्-यत् श्रीमद्-ऊर्जितं विभूतिमद् वर्तते तस्यैव वर्णने कविना भरः कृतः इति दृश्यते ।

### उत्तमः लोकसंग्रहः

राष्ट्रिय-स्वंयसेवक-संघपरिवारेण भवान् सम्बद्ध इति भारते संघमित्राणां बहूनां परिचितः परं संस्कृतप्रेमबन्धनेन नैके गणनीयगुणाः दिवंगत-चिं० द्वा० देशमुखतः आरभ्य अच्युतरविपटवर्धन-दिवंगत-एकनाथजीरानडे-प० पू० जयेन्द्रसरस्वतीस्वामि-वसन्तसाठे-प्रभृतयः तस्मिन् तस्मिन् अवसरे डा० वर्णेकरमहोदयेन संलग्ना अभवन् । अयं महान् सन्मित्रपरिवारः डॉ० वर्णेकरमहाशयस्य नूनं धनम् । तं ते महता प्रेम्णा सर्वात्मना रक्षन्ति । श्रीमता प्राप्तं किंचिदपि पत्रं नैवानुत्तरितं तिष्ठति । तन्मतेन पत्रं नाम अपूर्वं साधनं येन अनुपमो लाभः हस्तसाद् भवति ।

### यशस्वी गृहस्थाश्रमः

पुत्रपौत्रसम्पन्नं तदीयं गृहं भवति अभ्यागतानां प्रीतिहेतुः । तत उत्पन्नं गृहकार्यभारम् अनुगुणा सुविधा गृहिणी, सौ० कमलादेवी छायावत् सर्वत्र डॉ० वर्णेकरमहाशयमनुसरन्ती, अभिन्नहृदया, यथोचितं निर्वहति । यः कोऽपि गृहे उपस्थितः अतिथिः आदौ डॉ० वर्णेकरमहाशयस्य प्रीतिस्निग्धैः वचनैः कर्णयोः, सौ० कमलादेव्याः आतिथ्येन उदरे च तृप्तः निवर्तते । तत्र—

'न क्रोधो न च मात्सर्यं न लोभो नाशुभा मतिः ।
भवन्ति कृतपुण्यानां भक्तानां पुरुषोत्तमे ॥'

इति वचनं स्मृतिपथं समुपसर्पति ।

डॉ० वर्णेकरमहोदयस्तथा पुण्यवान् भवति । दत्तो हि स खलु राष्ट्रसंघटनविद्योपज्ञस्य प्रथमसुरसंघचालक—डॉ० केशव-बलिराम-हेडगेवार महोदयस्य, स्वयं परममान्येन श्री गोळवलकरगुरुजी महाभागेन यथार्थतया पुरुषोत्तमत्वेन सगौरवं निर्दिष्टस्य आबाल्यात् भक्तिमान् भवति । स वदति यत् किल मया लब्धं तत् 'प्राप्तं प्राप्तमुपासीत' इति न्यायेन सेवितम् । न ततः कस्मैचित् क्रोधः क्रियते, नापि वा मत्सरः धार्यते, नापि वा काचन तृष्णा अवलम्ब्यते, न वा कस्यचन विषये अशुभं चिन्त्यते । अतएव डॉ० वर्णेकरमहाशयः जगन्मित्रम् । अतः अविरोधेन व्यवहारे कृतमतिः, सूनृतवादी, संस्कृतभक्तानां किमपि बलं, डॉ० श्री० भा० वर्णेकरमहोदयः सौ० कमलादेवीसनाथः निरामयेन पुरुषायुषेण मण्डितः शुक्लेन्दुवद् वर्धिष्णुयशः सर्वविधम् अर्जयतु इति कामये ।



# गीर्वाणभाषा-कविवर्याणां वर्णेकरमहोदयानां भाषाशैली

**डॉ० मो० दि० पराड़कर :**
४/११ शाह बिल्डिंग माहीम मुम्बई—४०००१६

डॉ. श्री० भा० वर्णेकरमहोदयानां नाम विदितमेव सर्वेषां संस्कृतानुरागिणां संस्कृतसाहित्यपारावारे सानन्दमवगाहनं कुर्वाणानां नदीष्णानां च। ख्रिस्ताब्दस्य १९६१ संवत्सर एव राजधान्यामायोजिते भारतीय-कवि-सम्मेलने कविवर्याणामेतेषामाकाशवाणीद्वारा गीर्वाणभाषाकवित्वमुद्घोषितमासीत्। वर्षद्वयानन्तरं 'अर्वाचीनसंस्कृतसाहित्य' नामकं ग्रन्थं मराठीभाषामाश्रित्यैतैर्महाभागैर्विरचितः, संस्कृतसाहित्यानुरागिणां भृशमुपकारः कृतः, स्वीयं गीर्वाणवाणीविषयकं प्रभुत्वमाविष्कृतं, संस्कृतप्रसारविषये स्वीया निरतिशयाऽऽस्था सुष्ठु प्रकटीकृता।

नात्र चित्रं यदनेन कविपुङ्गवेनाद्यावधि चतुर्दशाधिकानि शतककाव्यानि प्रणीतानि, कालिदासरहस्याख्यं खण्डकाव्यं विरचितं 'शिवराजाभिषेक' सदृशानि नाटकान्यपि लिखितानि, 'प्रश्नावलिविमर्श' सदृशं पुस्तकमुपस्थाप्य गीर्वाणभाषामाश्रित्य चिरकालिकं महत्त्वं धारयन्तः स्वीयाः विचारा अपि प्रकटीकृताः। अत एवैषाम् भाषाशैली सुष्ठु विवेचनीयेति मे मतिः। अत्रैतेषामसंख्याकानि भाषणान्यपि सन्ति यत्रैतेषां प्रभावपूर्णा संस्कृता वाणी समुल्लसतीति सत्यं किन्तु नैतानि भाषणानि संगृहीतानीति विचिन्त्य न तेष्वाविष्कृता शैली वर्ण्यते। तत्रापि 'सागरसमीपं सागरतुल्यं भारतीयविद्याभवनं गीर्वाणवाण्याः केन्द्रमभिमानास्पदमस्माकम्' इत्येतादृशी शब्दयोजना कवित्वं प्रकटीकरोतीति वक्तुं शक्यते।

प्रथमं तावत्प्रश्नावलीविमर्शः विचारणीयः। गद्यबहुले विचारपरिप्लुते चास्मिन् संसारे गद्यमेव प्राथम्यमर्हति। संस्कृताध्ययनस्य दुरवस्थामालोक्य तदुद्धारोपायाणां सूचनार्थं ख्रिताब्दस्य सप्तपञ्चनवैकमिते संवत्सरे कश्चन विद्वत्सदस्य-आयोगः भारतसर्वकारेण नियुक्त आसीत्। तस्मिन् काले वर्णेकरमहाभागाः नागपुरे 'संस्कृतभवितव्य' नामकस्य साप्ताहिकपत्रस्य सम्पादका आसन्। तत्र स्वीये पत्रे विस्तृतां लेखमालां लिखित्वा आयोग-निर्मित-प्रश्नावलीस्थाः विविधाः प्रश्नास्तु महाभागैरेतैः सविस्तरं चर्चिताः। ते लेखा एव 'प्रश्नावली-विमर्शः' इत्यत्र पुस्तकरूपेण प्रकाशिताः। अस्मिन् पुस्तके लेखकस्य 'प्रास्ताविकम्' सम्प्रत्यपि पठनीयमिति मे प्रतिभाति। तस्मिन् काले संस्कृताध्ययनस्य या दुरवस्थाऽऽसीत्तत्र कीदृशी दुःखावहा वृद्धिः सञ्जातेत्यपि सुनिपुणं बोधनीयमेव। तत्र 'यदि कश्चित् केनापि कारणेन संस्कृतं पठति तमन्ये तत्सुहृज्जनाः उपहसन्ति' इति यल्लिखितं तदेव सम्प्रति सत्यमेव सञ्जातमित्यत्र न कोऽपि सन्देहः। तत्रैकः प्रश्न आसीत् 'संस्कृताध्ययनं प्रति भवदीये प्रदेशे कीदृशी जनानां साधारणी प्रवृत्तिः'। अस्य उत्तरं वर्णेकरमहोदयैर्दत्तम्—"न कोऽपि संस्कृताध्ययनं प्रति विरोधं दर्शयति। सर्वे एव संस्कृतोद्धारं शासनमाहात्म्येन वाञ्छन्ति। संस्कृताध्ययनमध्ययनक्रमे आवश्यकं कृतं चेत् सर्वेषामानन्दाय कल्पेत। परं तदभावे स्वप्रेरणया न कोऽपि किमपि कर्तुमुत्सहते। न केवलमस्माकं विदर्भप्रदेशे एव जनानामीदृशी प्रवृत्तिरपि तु भारतवर्षे सर्वत्र सैव प्रवृत्तिरनुभूयते। गद्ये विचाराणां संगतिः स्पष्टता चेतरान् गुणानतिशेते सा तूत्तरेऽस्मिन् सुस्पष्टा एव। संस्कृतभाषां प्रत्यनुरागमादरं च समुत्पादयितुं संस्कृताध्ययनं चोत्कर्षयितुमत्र ये विविधा उपायाः वर्णेकर-

महोदयैरुपन्यस्ताः तत्रैतेषां सुस्पष्टता अप्रियस्यापि सत्यस्य प्रतिपादने समर्था भाषाशैली सर्वत्र दृश्यते। सत्यमेवैतत् यदेतैस्तत्र लिखितं शासनसाहाय्याभावे संस्कृतस्य पुनरुत्थानं साम्प्रतमन्यथा प्रयत्नगतैरपि सुतरां न सम्भवतीति यो निष्कर्ष एतैर्महोदयैः प्रतिपादितोऽऽसीत् स एव सम्प्रत्यपि साधीयानेव।

'शिवराजाभिषेकं' नाम सप्ताङ्कं नाटकं वर्णेकरैः प्रणीतमस्ति। वैदर्भोऽयं कविः वैदर्भीं रीतिमनुसरतीति न किमपि चित्रम्। नाटके वार्तालापस्तु प्रधान एव। तत्र वार्तालापे समीचीना सरला च सरणिरङ्गीकर्तव्येति विचिन्त्य नाटककारेणानेन नटीसूत्रधारयोः संवादः लिखितः। "नटी-आर्यपुत्र, सर्वथा अद्य खलु हरिश्चन्द्रायसे प्रथमत एवानेन सत्यवचनेन। सूत्रधारः-(सस्मितम्) तत किं शिवराजिनिमित्तं शिवव्रतपरायणास्य पौलस्त्यपुर-महिलामण्डलस्य दर्शनार्थम्? नटी-(सरोषमिव)-अलं दैवतोपहासेन। प्रथमं श्रूयतां तावत्श्रवणपेयः वृत्तान्तः। अत्र नर्मयुक्तोपालम्भोऽपि रामणीयकमादधात्यत्र कः सन्देहः। नाटकेऽस्मिन् स्थाने स्थाने कविकृताः नवोपक्रमाः पाठकानां हृदयान्यावर्जयन्ति। शिवराजविषयके नाटके लोकाचार-कुलाचार-विषयिण्यः महाराष्ट्र-संस्कृति-च्छटाः सर्वत्र समुल्लसन्ति। एषैव सूक्ष्मावगाहिनी कविदृष्टिरिति वक्तुं शक्यते। **त्रिविष्टपोच्छलत्-स्खलत्-सुपर्व-वर्ग-निर्झरी-दृढप्रपात-कुण्ठनोज्जटा-कटाह-मण्डनम्**"इत्यादि अष्टपद्यात्मकं महाबलेश्वरस्तोत्रं रावणविरचितं शिवताण्डवस्तोत्रं स्मारयति। छायानाटकाख्यः प्रथमाङ्कः भवभूतेः उत्तररामचरिते समाविष्टस्य च्छायाङ्कस्य स्मृतिमावहति।

'पाण्डित्यं च कवित्वं च द्वयमेकत्र राजते।
प्रतापश्च प्रकाशश्च पूर्णाम्बरमणाविव॥'

सहस्रेषु पद्येषु प्रसादः स्फुटतामेति। नाटकेऽस्मिन् प्रसङ्गानुसारेण क्वचित् सुप्रसन्ना शब्दावली पाठकस्य स्वान्तः-समुन्मीलने सहायिका भवति, अन्यतः गम्भीरार्था अल्पवृत्तिः गाम्भीर्यं जनयति, क्वचिच्च समासबहुला शैली पाठकस्य पुरतः आयाति, अन्यत्र च ओजःपूर्णा नृत्यत्पदावली पाठकस्य प्रमोदं जनयति। शिवराजाभिषेककाले वैदिक-सम्प्रदायानुगतां परम्परामनुसरन्ती कर्म-पद्धति-प्रक्रिया कवेरस्य श्रोत्रियत्वं प्रकटीकरोति। अत एव वक्तुं शक्यते अयं वर्णेकरमहोदयः कविः, गीतकारः, साहित्यशास्त्रज्ञः, श्रोत्रियश्च।

यद्यप्येतत्सत्यं तथापि कर्णेकरमहाभागोऽयमधीतानेकशास्त्रोऽपि मुख्यतया कविरेवेत्यत्र न वैमत्यं सम्भवतीति मन्ये। कवेरस्य प्रतिभा मन्दोर्मिमालायामाविर्भूता वात्सल्यरसायने दर्शनरगोचरतामापन्ना, जवाहरतरङ्गिण्यामाविष्कृता कालिदासरहस्ये पूर्वसूरिभिः कृतवाग्द्वारैः सुष्ठु प्रदर्शिता, दशहायनाधिकायनमहाकाव्य-प्रणयन-व्यवसाये सुनिपुणमुपपाद्यतां गतेत्यत्र न सन्देहलवोऽपि। 'वात्सल्यरसायने' कविनानेन श्रीकृष्णस्य बाललीलाः श्लोकशतकमाश्रित्य वर्णिताः। इदं श्रीकृष्णलीलाशतपत्रमनेन प्रणतेन कविना पितृभ्यां समर्पितं वर्तते। अस्मिन् प्रसादगुणसमन्विते शतककाव्ये कवेरस्य काव्यनिर्माणचातुरी वाचकमनांसि चमत्करोति, अप्रतिहतजपं प्रविशति च। कविनोक्तं—

श्रीदेवकी नयननीरपरिप्लुताङ्गः
आलिङ्गितश्च वसुदेवहृदम्बुजेन।
कारागृहात् कथमपि ह्यपनीयमानः
हृत्पङ्कजे मम सदाऽस्तु नवार्भकोऽसौ॥

श्लोकेऽस्मिन् प्रथमे चरणे कृता शब्दयोजना सुकोमलेनानुप्रासेन समन्विता। "दध्योदनस्य कवलं तव रे गृहाण। नो चेत्समित्यपहरेत् कविरेक एषः" इत्यत्र कविरयं गोपीजनप्रियेण मुकुन्देन साधं वार्तालापं कुर्वन्निव दृश्यते। एतेषां मन्दोर्मियालया श्रीद्विजेन्द्रनाथशास्त्रिसदृशाणां 'संस्कृतसाहित्यविमर्श' रचयितॄणां मानसे काप्यपूर्वाऽमन्दानन्दोर्मिमाला समुल्लसितेत्यत्र न किमपि चित्रम्।

कविकुलगुरोः कालिदासस्य कवितासौन्दर्यरहस्यमनेन निपुणेन कविना 'कालिदासरहस्यम्' इत्यत्र

कयाप्यभिनवरीत्या प्रकटीकृतम् । कालिदासशब्दैरेव तत् काव्यरहस्य स्पष्टीकरणस्यायं प्रयत्नः नितान्त-माधुर्योत्पादकः । शिष्टकविसम्प्रदायमनुसृत्य नमः-क्रिया रूपमंगलं कथमाचरितमित्यवेक्षणीयमेव—

श्री कालिदास ! त्वदमूर्तमूर्ति
मनःपथे मे सहसा स्फुरन्तीम् ।
सद्भावना वाक्-कुसुमैः किरन्ति
ह्याचारलाजैवरिव पौरकन्याः ॥

चतुर्थचरणे श्लोकस्य दृष्टान्तार्थं कालिदासोक्तिमेव समुद्धृत्य चातुर्यं कविना सुष्ठु प्रदर्शितम् । अस्मिन् काव्ये प्रतिश्लोकं वर्णेकरमहाभागानां न केवलं कालिदासकृतीनां व्यासङ्गः अधीतस्योपस्थितिश्च नयनपदवीमायात्यपि तु योजनाचातुर्यं च सुष्ठु प्रतीयते ।

समर्प्य गुर्वीं त्वयि काव्यशक्तिं
सौन्दर्यसारग्रहण - प्रवृत्तिम् ।
अवन्ध्ययत्नः स बभूव वेधाः
क्रिया हि वस्तूपहिता प्रसन्ना ॥

इत्यस्मिन् श्लोके वर्णेकराणां प्रतिभा कालिदास-सरस्वत्यां सुष्टु स्नाता तदाभरणैरलङ्कृतेति सुस्पष्टमेव । अस्य रहस्यस्य तृतीयप्रकरणे इन्दुमतीस्वयंवरसमारोहे मिलितानां राज्ञां शृंगारचेष्टावर्णनपराणि रम्याणि पद्यानि कवेः सूक्ष्मावलोकनं दर्शयन्ति ।

'जवाहरतरङ्गिणी' नामकं नवकाव्यं विरचय्या-नेन महाभागेन 'गङ्गातरङ्गगति-कम्पितपद्मशोभि' 'सुवर्णमुक्तं' च काव्यसोपानं रसिकाणां मोदाय समर्पि-तम् । भारतरत्नभूतानां जवाहरमहोदयानां बालसदृशीं सरलतां वर्णयितुकामेनानेन कविवर्येण लिखितम्—

गिरिवनचरमुग्धैर्नृत्यसि प्रेमबद्धः
विहरसि पुरबालैश्चालनेनासमेन ।
उपविशसि न याने वेगसम्प्रस्थितेऽपि
परिणतवयसा ते नाहृतो बालभावः ॥

सुष्ठु चित्रमप्येषा शैली । नीराजनाविषयकामु-त्तुङ्गां कविकल्पनामालोकयन्तु भवन्तः—

ज्योतिर्मयी भ्रमति ते तनुरन्तराले
सा व्योमयानशुभपात्रगता यदा हि ।
नीराजनाविधिमहं लभते तदानीं
ब्रह्माण्डमण्डलमयं जगदीशलिङ्गम् ॥

शश्वन्महाजटिल-कार्यशत-प्रसक्तचितस्य जवाहर-महाभागस्येयं प्रार्थनाऽपि रामणीयकमादधाति—

खेदापनोदसुभगत्वमियं प्रयातु -
सम्प्रार्थयामि कवितादुहितेन्दिरेव ।

अत्र कवितादुहिताऽपि इन्दिरा प्रियदर्शिनीव नितरां प्रेमास्पदा भविष्यतीति न शङ्कनीयम् ।

'श्रीरामकृष्णपरमहंसोयम्' नामकं काव्यं श्रीविवेकानन्दगुरवे समर्पितोऽर्घ्य एव । श्रीरामकृष्ण-परमहंसमहाभागैर्मेघरूपे श्रीकृष्णदर्शनं कथं प्राप्तं कादम्बिन्यां कालिदर्शनं कथमधिगतमित्यादीनां नाद-समन्वितं सुमधुरं चाविष्करणमत्र सञ्जातम् । 'सानन्दोऽभूत् प्रथितयशसा यस्य नाम्ना विवेकः' इत्यत्र श्रीविवेकानन्दानामादराञ्जलयः कवेरस्य भाषा-प्रौढिविषयकममोघं नैपुण्यं प्रदर्शयन्ति । एतादृशं नैपुण्यं कविनानेन विनायकवैजयन्त्यामपि प्रकटीकृत-मेव । अस्मिन् शतककाव्ये स्वातन्त्र्यवीराणां भारत-मातृपूजनं वर्णयन्नयं कविरलिखत्—

श्वशोणितैरेव महाभिषेकः
स्वशीर्षपद्मैश्चरणोपहारः ।
नीराजना च प्रदहत्स्वदेहैः
येषां स्व-भू-पूजन-रीतिरेषा ॥

क्रान्तिकाराणामेषा पूजरीतिरपि मानसं प्रेरयतोति नात्र सन्देहलेशोऽपि । अत्रापि 'शूलाग्रकोटिप्रविलम्बि-देहप्रतैर्यदीयैः खलु जीवबाणैः''''इत्यत्र भिन्नेऽर्क-बिम्बे ददृशेऽभियन्त्रैः वैज्ञानिकैर्हन्त कलङ्कजालम्' या कल्पना सा निस्सन्देहं काव्यपूर्णा इति स्मारयति च 'अङ्कं केऽपि शशाङ्किरे जलनिधेः पङ्कं परे मेनिरे' एतेषां काव्यपङ्क्तिम् ।

डॉ० वर्णेकरमहोदयेन स्वीयेषु काव्येषु भारतोयानां या सनातनी संस्कृतिः तत्रस्थानि यानि शाश्वतिकानि

मूल्यानि तेषां विषये श्रद्धा समुत्पादिता। अतएवैषां श्रोत्रियत्वं कलानैपुण्यं चास्मद्दृशानां कृते नितरामनुकरणीयमित्यत्र न स्तोकोऽपि सन्देहः। किन्तु धुरीणाग्रेसरनरकेसरिषु निस्सन्देहमग्रगण्येन पुण्यश्लोकेन शिवच्छत्रपतिना स्वीयैः वीरता-साधुता-चातुरी-सर्वजनक्षेमपरताप्रभृतिभिः गुणविशेषैः कर्णमागत्यायं महाकविः चापलायाष्टषष्टिसर्गात्मक-महाकाव्यस्य प्रणनाय प्रचोदित इति महान् खलु लाभः संस्कृतानुरागिणां कृते। अस्मिन् महाकाव्ये महाराष्ट्रप्रीतिः समुल्लसति, भारतीयसंस्कृतेर्नेत्रदीपकोऽऽविष्कारो दृश्यते, कवेरस्य वीररसात्मकः, घनीभूतश्चावेशः पुरतः आयाति सरसरसः देशभक्तिरसः कमप्युत्कर्षं प्राप्नोति, कवेः शब्दप्रभुत्वं च नितरां चकास्ति। सत्यं नायकस्यौन्नत्यं, सच्चरितस्य भव्यता इत्येतदावश्यकं किन्तु न तदेव महाकाव्ययशसे अलम्। निर्विचारं घटनानां पत्रार्पणं कथं रसाय कल्पेत ?

दिष्ट्या महाकाव्यस्यास्य रञ्जकता न मनागपि न्यूनतां प्राप्ता। न हीदं शिवचरित्रं पुराणवत् श्रोतव्यं नापि संस्कृतविषयिणीं श्रद्धामाश्रित्य पठितव्यमपितु प्रेयश्रेयोऽर्थिभिश्चानुकरणीयम्। वर्णेकरमहाभागाः जानन्ति कुत्र वा संक्षेपः कर्तव्यः कुत्र वा विस्तारः समाश्रयणीयः। जिजामात्रा बालशिवाजेः संस्कारकरणम्, तस्य बिजापुरगमनम्, रोहितेश्वरमन्दिरे प्रतिज्ञाकरणं, शहाजेः कारावासः तस्य च मुक्तता, अफझुल्लखानवधः इत्यादीनां प्रधानघटनानां विस्तरेण वर्णनं कृतं गौणघटनानां दिक्मात्रसूचनं कृतमिति विवेकः प्रशंसामर्हति।

शब्दचित्राण्यत्र कुत्रासनया समाविष्टानि मानवलम्ब्यवैरस्यं न भवति। "मध्ये वैष्णववीराणां वीणादण्डधरःसदा। तर्जयन्निव चास्तेयं ददृशे स तदग्रणीः"॥ सदृशः श्लोकः तुकारामं सुष्ठु वर्णयति। 'आपत्सु रामः समरेषु भीमः दानेषु कर्णश्च नयेषु कृष्णः' इत्यत्र शिवच्छत्रपतेः आदर्शमालां पाठकानां पुरतः समुपस्थाप्यते। शिवजन्मानन्तरं शिवाजेर्नाम विश्वजिह्वाग्रनर्तकमभूदिति वर्णयन् 'कुटीरे कुटीरे प्रसन्नान्तराणां शिशूनां च यूनां च सीमन्तिनीनाम्। ननर्तैव जिह्वाग्रमन्येऽभिधानं शिवाजिः शिवाजिः शिवाजिः शिवाजिः' इत्येतादृशी त्वरापूर्णा रचना कृता किन्तु शिवाजी-अफझुल्लयोः समागमवर्णने प्राचीना विदग्धशैली समाश्रिता [धर्मोऽह्यधर्मेण नयोऽनयेन सुसेयमः क्रोधभरेण किं वा····]

महाकाव्येषु यद् वर्णनपरत्वं तदपि रोचकं भवितुमर्हति। अस्मिन् विषयेऽपि सफलोऽयं कविः 'जराजीर्णविग्रहो विग्रहोत्सुकः' ( ११-२१ ), हृद्गतस्य तव नाथ हृद्गतम् ( ६-३० ) सदृशान् शब्दचमत्कारानपि आविष्करोति। शिवाजिमुखेन राष्ट्रभक्तेः यः सरससरसोऽविष्कारः कविना संस्कृतसाहित्ये कृतः स सत्यमदृष्टपूर्व एव। तत्कृते संस्कृतजगदेतेषामधमर्णं स्यादिति यल्लिखितं तत्सत्यमेव। महाकाव्येऽस्मिन् सूक्तिशतानि सर्वत्र दृश्यन्ते। 'किं किं न खलु जानन्ति राजानः शास्त्रचक्षुषः' 'अरातिपक्षाश्रितमप्यकस्माद् न ब्राह्मणं कञ्चन जातु हन्मि', 'त्यागेन पुण्यं मुनयो विदन्ति' 'न शोषितव्यः खलु देवशत्रुः' ऐतादृशानि सुभाषितान्यपि तत्र न विस्मर्तव्यानि। 'श्रमगीतां' विरचय्यानेन कविना स्वीया युगानुसारिणी दृष्टिः प्रकटीकृता।

अतएव ब्रवीमि 'कृती वर्णेकरसूरिरयमेनमाश्रिता वैदर्भरीतिः समुल्लसति पदे पदे। यथाह कविरेकः- 'अनभ्रवृष्टिः श्रवणामृतस्य सरस्वतीविभ्रमजन्मभूमिः। वैदर्भरीतिः कवीनामुदेति सौभाग्यतामप्रतिभूर्जनानाम्।

१. श्लोकस्य उत्तरार्धः चिन्त्यः।



५

# श्रीवर्णेकरपण्डितानाम् अर्वाचीन-संस्कृतसाहित्यसेवा

प्रा० सौ० उमा देशपांडे

संस्कृत-पालि-प्राकृतविभागः म० स० विश्वविद्यालयः, वटपत्तनम् ।

पंडितवर्याणां श्रीवर्णेकरमहोदयानां निरंतर-प्रयासस्य सन्निष्ठकार्यतपसः असाधारणप्रज्ञाप्राचुर्यस्य सरसं ज्ञानरत्नमयं पुस्तकफलं विद्यते—अर्वाचीन-संस्कृतसाहित्याभिधानं मराठीभाषायाम् ।

विगतशतकत्रयकालावधौ संस्कृते ये ये साहित्य-प्रकाराः सञ्जाताः तेषां यथोचितं यथारूपं किन्तु सर्वाङ्गिणम् आलेखनं कृतं विद्वद्वर्यैः वर्णेकरमहोदयैः । अस्मिन् ग्रन्थे एकत्रिंशत् प्रकरणानि सन्ति । अन्ते च संदर्भग्रन्थानां लेखकानां च सूचिद्वयं प्रदत्तमस्ति । संपूर्णे आसेतुहिमाचले भारतवर्षे प्रकाशिता अप्रकाशिता वाऽपि ये ये संस्कृतग्रन्था लेखकेन संदृष्टा ज्ञाता वा तेषां समीक्षणं ग्रन्थेऽस्मिन् यत्कृतं तत्कथं महत्त्वपूर्णं संस्कृतज्ञोपयोगि च तत्सर्वं वर्णितमस्ति प्रथमे प्रकरणे ।

अर्वाचीनलेखकपंडितकवीनां लेखनप्रयोजनं बहुविधमस्ति । केषांचित् संस्कृतश्रद्धा गैर्वाणीप्रेम तान् लेखनकर्मणे प्रचोदयति । अन्येषां मते समाजहितं लोकजागृतिः छात्रकल्याणं च जायते संस्कृतलेखनेन । नूतनपदपद्धतेः प्रवर्तनार्थं, नवनवभाषाशैलीप्रदर्शनार्थं वा कैश्चित् संस्कृतज्ञैः ग्रन्थनिर्मितिः कृता वर्तते ।

अद्यतनसमये विविधकविपुङ्गवैः लिखितानि महाकाव्यानि, क्लिष्टकाव्यानि, शतकपद्यानि, दूतकाव्यानि, गेयगीतानि, सुभाषितानि च सहस्रसंख्यात्मकानि सम्यक् वर्णितानि, निर्दिष्टानि वा सन्ति लेखकमहाशयेन ।

"वाङ्मयी कृष्णमूर्तिः" नामिका अतीव सरसा सुमधुरा श्रीभद्भगवद्गीताप्रशस्तिरूपा स्तोत्रकविता कविवर-श्रीवर्णेकरविरचिता—पृ० १३६

मतिकृतिकरणाश्वान् भोगमार्गप्रवृत्तान्
सुविहितनिजकर्मप्रेरणावाक्यतोत्रैः ।
रथिनमिव हि पातुं देहिनं प्रेरयन्ती
जयतु जयतु गीता वाङ्मयी कृष्णमूर्तिः ॥११॥

भारतवर्षस्य भूतपूर्व-अर्थमन्त्रिणः चिं-द्वा-देशमुख-महोदयाः रसिकपंडिताः कविवर्याः आसन् । एषा तेषां काव्यदक्षिणा शान्तिनिकेतनस्थिताय कवीन्द्राय रवीन्द्रनाथाय—पृ० १४४

उपस्थितोऽहं तव दर्शनाय,
कवीश किं ते गुरु कल्पयेऽर्घ्यम् ।
मन्दप्रबोधस्तमसावृतौजा,
रवीन्द्र मृत्पात्र इव प्रदीपः ॥३॥

"सुभाषितरसं दृष्ट्वा सुधा भीता दिवं गता ।" एतां सूक्तिं प्रमाणोकर्तुं बहवः प्रबन्धा विनिर्मिताः । उदा० स्वकीये मन्दोर्मिमालाव्यग्रन्थे पं० वर्णेकर महोदयैः विविधानि सुभाषितानि संलिखितानि । तेषां मते प्रतिष्ठितलोकानां लक्ष्यमित्थम्—पृ० १६६

ते राजवल्लभाः खलु प्रतिष्ठितास्ते गुणैर्विना लोके ।
लाङ्गूलचालनकला प्रकटयितु यैः प्रदर्शिता प्रतिभा ॥

अस्माकं गुर्जरप्रदेशः समलंकृतः बहुविधैः पंडितैः साहित्यशास्त्रिभिः, कथाकारैः कावशादुलैश्च । तेषां मध्ये अनंताचार्यः झाला-परीख-बदरीनाथशास्त्रिणः प० वासुदेवानन्द-आत्मानन्द-भगवदाचार्यमहाशयाः श्रीरंग-अवधूत-भूदेवशुक्ल-मणिशङ्करउपाध्यायाः प्रामुख्यं भजन्ते । अस्माभिः यस्य साङ्गोपाङ्गम् अध्ययनं समीक्षितपाठभेदसहितं च कृतं तद् रसिकविनोदं नाम नाटकं कमलाकरभट्टविरचितं तत्रभवतां श्रीगोकुल-

नाथानां महिमानं तथा तेषां भक्तानां प्रपत्तिप्रचयं च वर्णयति । उदा०

सत्सौष्ठवेन निजगौरवयोग्यगत्या
नत्या गुरोश्च धृतिधामविशिष्टमत्या ।
बालः शशीव नभसस्तलमेतदुच्चैः
स स्वं कुलं समनयत्किमपि प्रकाशम् ॥२.२१॥

श्रीदत्तात्रेयस्य एकनिष्ठउपासकाः, दैवीसंपत्संपन्नाः, परमानन्दनिरताः लोककल्याणपराः तत्रभवन्तः प०पू० वासुदेवानन्दसरस्वतीस्वामिनः अलौकिकप्रतिभावन्तः सन्त 'श्रेष्ठाः' । पृ० ४१९

तैः विरचिते श्रीदत्तपुराणान्तर्गते वेदनिवेदनिस्तोत्रे भगवन्तं परमात्मानम् एवं प्रशंसन्ति ते पदसिद्धपंडिताः–

विजय तेऽज यते जयते[1] यते-
रिह तमो हतमोहतमो नमः ।
हृदि कदाय पदाय सदा यदा
तदुदयो नदयो न वियोनयः ॥१.६.१३॥

भवति भावभवोवभवो यदा
भवति कामनिकामहतिस्तदा ।
भवति मानवमानवदुत्तमे
भवतिरोधिरतो विरतोत्तमे ॥१५॥

अज नमोऽजनमोहनमोह नः
प्रिय नियोजय तेन यतेन ते ।
य इह वेदनिवेदनि वेद वे-
त्यजपदं जपदन्तपदं परम् ॥२०॥

तेषां सर्वतोभद्रं स्तोत्रं निर्देशयति परमेश्वरस्य सर्वकल्याणकारकम् आनन्दविभुस्वरूपम्—

| | | | |
|---|---|---|---|
| सा | का | र | ता |
| का | पि | सा | र |
| र | सा | य | मे |
| त | र | मे | य |

1. प्रयोगोऽयम् आर्षत्वात् सह्यः ।

भारतमातृभूमेः महामहिमशालिनीं बहुरत्नां वसुंधरां समुद्दिश्य लिखिताः बहवः गद्यपद्यमयाः प्रबन्धाः । "मातृभूलहरी" इत्याख्ये स्वकीये प्रासादिके काव्ये कविपुङ्गवः वर्णेकरमहोदयः एवम् वर्णयति भरतभूमिम्—पृ० ३७०

किरीटः सद्रत्नप्रभव इति गीतो नगपतिः
समुद्रोऽसौ रत्नाकर इति मतो वल्गुवलयः ।
अजस्रं सम्पन्ना पुरुषमहिलारत्ननिवहैः
अहो राजत्येषा भुवनतलरत्नं भरतभूः ॥३॥

अस्माकं राष्ट्रध्वजः समस्तभारतीयजनानां सर्वश्रेष्ठो मानदण्डः । कविताचतुरः रामकृष्णभट्टः तमेवं सभाजयति—पृ० ३४१

त्रिवर्णरुचिरो मतः प्रियकरश्चतुर्णां च यो
रथाङ्गसहितोऽपि नो मुररिपुर्यशोवाहनः ।
दिगम्बरगतिः सदा न तु मृडोऽपि दण्डी यतिः
न चेत्यनुपमस्थितिर्जयति सोऽद्य राष्ट्रध्वजः ॥४॥

प्रतिपच्चन्द्रलेखेव वर्धिष्णुर्नित्यवन्दिता यस्य मुद्रा भद्राय राजते स्म सः शिवाजीराजा संस्कृतस्य संस्कृतेश्च महान् परिरक्षकः आसीत् ।

कविः परमानन्दः तं राजेश्वरं स्तौतिः–पृ० ४६०

यः शास्ति वसुधामेतां राजा राजगिरीश्वरः ।
तुलजायाः प्रसादेन लब्जराज्यो महातपाः ॥
विष्णोरंशो विशेषेण लोकपालांशसम्भवः ।
मनस्वी सुप्रसन्नात्मा प्रतापी विजितेन्द्रियः ॥

अनेन शिवप्रभुणा लोकानां भाषाशुद्ध्यर्थं व्यवहारस्य सुखबोधाय च प्रार्थितः पं०रघुनाथहणमन्तेमहोदयः राज्यव्यवहारकोशं विनिर्मितुम् ।

कोशेऽस्मिन् म्लेच्छभाषापदपर्यायाः गीर्वाणभारत्यां प्रदत्ताः सन्तिः—पृ० १००

राजा ज्ञेयः बादशाहः स्वामी साहेब ईरितः ।
अन्तःपुरं तु दरुनीत्याहुर्यवनभाषया ॥
युवराजः परिज्ञेयो वलीयहदनामकः ।
शाहजादा राजपुत्रः प्रधानः पेशवा तथा ॥

एवं संस्कृतभाषायाम् अर्वाचीनकविवर्यैः स्तोत्रसाहित्यं नाट्यवाङ्मयं, विविधशास्त्रनिबन्धनं, दूतकाव्यलेखनं इत्यादि यद् यद् वाङ्मयसर्जनं कृतं तत्सर्वं सन्मान्यैर्वर्णेकरमहोदयैः अस्मिन् ग्रन्थे सम्यक् प्रतिपादितम्।

ग्रन्थस्थं हास्यरसनिरूपणं सुतरां मोदप्रदम् उद्बोधकं च।

इयं शास्त्रवादिनां व्याख्या :—पृ० ३२०

अर्थाहरणकौशल्यं किं स्तुमः शास्त्रवादिनाम्।
अव्ययेभ्योऽपि यैरर्था निष्कास्यन्ते सहस्रशः॥

"प्रोफेसराः" कीदृशाः ? कलिवृत्तादर्शपुराणे वाटवेशास्त्रिणः कथयन्ति—पृ० ३२३

सुधारकेषु ये मुख्याः सभालेक्चरझोडिणः।
पण्डितास्ते ब्रुवन्त्येवं वयं प्रोफेसरा इति॥

"चहागीता" एवम् "कौफीशतकम्" अस्मान् बोधयति :—पृ० ३२४

यत्र पेयेश टी-देवो यत्र कप्पधरा नराः।
तत्राल्पायुर्विपद्रोगा ध्रुवाऽनीतिर्मतिर्मम॥

तथा

यानि कानि च पापानि जन्मान्तरकृतानि च।
तानि सर्वाणि नश्यन्ति कौफीपानात् पदे पदे॥

स्वकीये "मन्दस्मितम्" समाख्ये शतककाव्ये पंडितवर्णेकरमहोदयैः समुचिता व्याख्या प्रदत्ता कतिपयजीवनोपयोगिवस्तूनाम् :—पृ० ३३१

उदा० आकाशवाणी :—

देवानामपि वक्त्राणि त्रीणि चत्वारि पञ्च षट्।
आकाशवाणी वक्तॄणां सन्ति तानि गृहे गृहे॥

ध्वनिमञ्जूषा (Radio) :—

पुरा समाधिविघ्नायागच्छन्ति स्म दिवोऽङ्गनाः।
इदानीं ध्वनिमञ्जूषाः प्रतिवेशिग्रहे स्थिताः॥

चहा (Tea) :—

कुम्भकर्णप्रबोधाय कृतः किल महान् ध्वनिः।
चहा सिद्धेति किं नोक्तंमहो मूढा हि राक्षसाः॥
वेदकालेऽमृतं सोमस्ततो दुग्धं ततः सुरा।
इदानीं शतके विंशे चहा हि परमामृतम्॥

वृत्तपत्रम् (Newspaper) :—

चौर्यमृत्युबलात्कारदाहवातपिरा नराः।
प्रातः प्रथममिच्छन्ति वृत्तपत्रस्य दर्शनम्॥
यः पठति वृत्तपत्रं नवचित्रनाट्यमनुदिवसम्।
सर्वत्र विजयतेऽसौ विविधासु ग्राम्यचर्चासु॥

एवम् अर्वाचीनसंस्कृतसाहित्यस्य सर्वकषं सर्वप्रकारकं विवेचनं समुपलभ्यतेऽस्मिन् ग्रन्थरत्ने।

यः कश्चिज्जनः समीहते दिने दिने वर्धमानं मनोहरं स्फूर्तिप्रदं संस्कृतसरित्प्रवाहं ज्ञातुं तेन सुकृतिना द्रष्टव्योऽयं ग्रन्थविशेषः। देवीशारदाया अयं नूतनः अक्षराविष्कारः नव्यं वाङ्मयस्वरूपम् एषा रमणीया साहित्ये मूर्तिः सर्वेषां रसिकानां संस्कृतज्ञानां विद्वद्वर्याणां हृदयेषु चिरं निवसतु इति परमेश्वराय सप्रश्रयं प्रार्थना। □

---

# श्रीधराभिनन्दनम्

**—ज्ञानेश्वर साधु**, चण्डीगढ़

**व्याप्ता भारतभूः स्वकीययशसा**
**यः कालिदासानुगः**
**भाषा लुप्तप्रभा पुर्नाविरचिता**
**या गद्यपद्यावृता।**
**साधूनां चरितं शिवप्रभुयशः**
**काव्यात्मकं वर्णितं,**
**सेवा लोकहिताय राष्ट्रपतिना**
**यस्यास्ति सम्मानिता॥४**

**वक्तृत्वं सहजं सुशब्दललितं**
**विद्वन्मनोहारि यद्,**
**भाषा बोधवती स्वभावमधुरा**
**गंगौघतुल्या खलु।**
**नैपुण्यं नवकाव्यनाटचकृतिभिः**
**यः सिद्धहस्तः स्वयं,**
**प्रज्ञा संस्कृतभारतीमधुयुता**
**समृद्धये कल्पते॥८**

**काव्यश्री वृणुते स्वयंवरपरायं श्रीधरं सत्कविम्।**
**दीर्घायुः विजयो भवेत् शतसमाः यो भास्करानन्ददः॥१०**

# श्रीधरो भास्करसूनुर्वर्णकर:

सदाशिव: डांगे
'गिरनार' गोखलेमार्ग:, मुलुण्ड (पूर्व) मुम्बई ४०००८१

प्रसादमाधुर्यान्वितां तथा च सर्वभावसंवसितां लेखनशैलीं स्वकृतिषूपयोजयन् काव्यविहारी महाकविर्निरन्तररसिकमनोमानसराजहंसायमानोऽस्म-च्चिरसुहृद्, वाचामीश्वरोऽपि वागीश्वरीनिकेतनप्रदी-पायमानः (तस्यावासस्य नामापि तदेव) श्री-धरोऽपि सारस्वतो; भास्करजोऽपि हिमांशुतेजोमार्दवमादधानो वर्तते। स्मृतिपथमायान्ति ते दिवसा यदा श्रीधरः प्रथमनूतनप्राध्यापकत्वं भजमानो नातिप्रसिद्धिंगते महाविद्यालय एकस्मिन् वर्धानगरस्थिते, तत्पश्चाच्च नागपुरस्थलान्तरिते, पारिश्रमिकराशिमपि नितरा-मगणयन् विद्यार्थिनां रसिकानाञ्च सममेव सन्तोष-श्रियं बहु मन्यमानोऽध्यापनमकरोत्। बहूनि वर्षाणि यावत् संलग्न-महाविद्यालयद्वारेणैव—अध्यापनतत्र-मालम्बयता नागपुरविश्वविद्यालयेन यदा १९५९ ख्रिस्ताब्दे स्वीया स्नातकोत्तरव्यवस्था प्रवर्तिता, तदा प्रथमाधिव्याख्यातृपदे, महामहोपाध्यायानां मिराशि-महोदयानां—स्वगुरूणां—सूचनया इच्छानुसारेण च तेषां, नियुक्तिः स्वीकृता। तस्मिन् काले संस्कृत-विभागप्रमुखपदे तथा च पाठकपदे ('रीडर'-पदे) 'भारतीयशास्त्रकाराः' गणेशत्र्यम्बकदेशपाण्डे महा-भागा नियुक्ता आसन्।

कार्यान्तरेण मद्रासप्रान्ते वास्तव्यं कुर्वन् नागपुरे च गतागतिं कुर्वन्, तथैव च किञ्चित्कालं वर्धानगरी-मुपसेवमानस्तत्पश्चाच्च एम्०ए०—अध्ययनार्थं मुम्बा-पुरीमध्यधिवसानः, तत्पश्चान्नागपुरविश्वविद्यालसंलग्ने महाविद्यालये, खामगांवे वर्तमानेऽधिव्याख्यातृत्वेन कार्यं कुर्वाणः प्रस्तुतलेखकः निरन्तरं श्रीधरस्य 'सधमादः' (वैदिकशब्दप्रयोगेण यदि कथ्यते; सह-जीवनः, सहचरो वा) आसीत्। आन्तरः कोऽपि हेतु-र्बलवान् भवति। तथा नागपुरविश्वविद्यालये, स्नात-कोत्तरसंस्कृतविभागे, द्वितीयाधिव्याख्यातृपदेऽचिरा-देव लेखकस्यास्यापि नियुक्तिर्जाता। अतश्चिरसुहृदोः स्थिरपूर्वः स्नेहः सहाध्यापकत्वेन, सहवासित्वेन च, परिणतः—सोऽयमान्तरः कोऽपि हेतुरिति मन्यताम्। चिरोपचितस्नेहसारेऽस्मिन्, लेखकस्य मुंबईविश्वविद्या-लये प्रपाठकपदग्रहणेनापि नैव खण्डो जातः। नायं वैयक्तिको व्यक्तिनिष्ठश्च स्नेहोऽपितु कौटुम्बिकः। तत्रापि साधारण्यं दृश्यते। लेखकस्येव पत्नी श्रीधर-स्यापि पत्नी कमलात्वमादधाना श्रीरेवान्या, संस्कृत-विषये प्राप्तप्राविण्या विद्यते।

नागपुरविश्वविद्यालयतः संस्कृतविभागाध्यक्षपदं चिरकालमलंकृत्य १९७९ वर्षे श्रीधरः सेवाया निवृत्तः। परम् प्रख्यातोऽयं प्राध्यापको न केवलं तत्त्व-चिन्तनजडो, नैवापि केवलं रसिकहृदयग्राही महा-कविः, अपि तु वत्सलः पिता, मित्रपुत्रपुत्रीणां सहृदयः पितृव्यः, स्थिरप्रज्ञो मनस्वी हितैषी मित्रम्। अयं हि प्रियसंस्कृतभाषोऽपि संस्कृत-भाषा-प्रियकरः। संस्कृत-भाषाप्रियकरत्वमेवास्य यत् १९५० तः १९६२ पर्यन्त-मनेन संस्कृतभाषामेवोष्ठसंलग्नां कुर्वता तस्यामेव भाषायां व्याख्यानदानस्य द्वादशवार्षिकं व्रतं स्वीकृत-मासीत्। अपरं १९६३ तमे ख्रिस्ताब्दे न्यूयॉर्कविश्व-विद्यालये आयोजिते संस्कृतसम्मेलने श्रीधरोऽयं भारत-देशस्य प्रतिनिधित्वं कृतवान्। १९८८ तमे ख्रिस्ताब्दे नासिकनगरेऽखिलभारतीयसंस्कृतसम्मेलनस्याध्यक्ष्यम-प्यलंकृतवान्। मध्यप्रदेशस्थितायाः संस्कृतविश्वपरि-षदोऽपि सम्मानैकधनः ('मानद' इति प्रचलितः शब्दो न समीचीन इति लेखकस्य मतम्—व्याकरणा-नुसारेण संकल्पनानुसारेण च) प्राध्यापक आसीत् (१९५२–१९५५) तस्या एव परिषदो नागपुराधिवेशने (१९५४) कार्यवाहधुरंधरोऽप्यासीत्। नैकश्लाघ्यगौर-

वपदस्वीकारेण, पदानामपि तेषामर्हतां वर्धयन्, पूर्वापरपदग्राहिणां च मान्यानां दर्पणीभवन्स व्यराजतां प्रज्ञा पण्डा तथा चापि भारती भा-रतिस्थिरा, वशीभूता यथा ह्यस्मिन् ·तेनासौ "प्रज्ञाभारती"। अतो हि सर्वनैपुण्यसाधू राष्ट्रपतिपुरस्कारोऽपि श्रीधरं मार्गयन्, सिद्धश्च, द्वारि तिष्ठति। सत्यानन्दज्ञानपीठ (कालिकाता)—द्वारा "प्रज्ञाभारती"—पदेन गौरवितोऽयं राष्ट्रपतिपुरस्कारेण सम्मानितः श्रीधरः स्वमहाभाग्यान्महाभागत्वमाप्तवान्।

महाभागैः श्रीधरशर्मभिः विंशतिमिता ग्रन्था लिखिताः प्रसिद्धिं च गताः। तेषां केचित् संशोधनपरा यथा—**अर्वाचीनसंस्कृतसाहित्य**—इति मराठीभाषायां महाभागानां डी० लिट्—उपाधिप्रापको ग्रन्थः। तस्यैव प्रकृष्टं रूपं **संस्कृतवाङ्मयकोश** इति हिन्दीभाषायाम्। प्रकल्पस्यास्य द्वौ खण्डौ प्रसिद्धिमापन्नौ। तौ च सह १२३६-पृष्ठविस्तारौ। तृतीयश्च खण्डः सम्पाद्यमानश्चरति। केचिद् भक्तिगानविषया यथा—**श्रीगजाननस्तोत्रम्**, संस्कृतभाषायां मराठीभाषानुवादसहितम्। केचिज्जनसाधारणोपयोगिनो यथा—**ग्रामगीतामृतम्, तीर्थभारतम्** (गीतिमहाकाव्यम्), **संघगीता** (विविधभाषासु प्रसिद्धाः), **श्रमगीता** (मराठीभाषानुवादसंहिता), **रामकृष्णपरमहंसीयमि**त्यादयः। **शिवराज्योदयं** महाकाव्यं प्रथितयशस्कं साहित्य-अकादमीपुरस्कार-सम्मानितं ६८ सर्गान्वितम्। नाटकानि यथा—**विवेकानन्दविजयमि**ति महानाटकम्। तथा च **संस्कृतनाटचप्रवेशा** अपि प्रकाशिता अकष्टप्रयोगाः। विद्यते च प्रसिद्धिं गतपूर्वं इदानीं तु दुष्प्राप्यो **'मन्दोर्मिमाला'** इति स्वीयकाव्यानां संकानात्मको ग्रन्थो यस्मिन् २००० (लघुकाव्यानि सन्ति प्रोतानि) वीरपूजात्मका अपि काव्यग्रन्था वर्तन्ते यथा—**जवाहरतरङ्गिणी**ति नेहरूगौरवगुणसंवासिता। **विनायकवैजयन्ती**ति स्वातन्त्र्यवीरसावरकरस्य शौर्यगुणगायिनी। संस्कृतव्याकरणविषयः **परोक्षपाणिनीयम्** इति चापरः-शास्त्रग्रन्थः-सिद्धो वर्तते प्रकाशनकाङ्क्षी।

लघुलेखेऽस्मिन् महाभागलिखितानां सर्वेषां ग्रन्थानां सूचिं प्रदातुं न पार्यते। तथैव च तेषां व्यक्तिमत्ताया वैविध्यं सर्वंकारं वर्णयितुमपि न पार्यते। अधुना चिरन्तन-लब्धसरस्वती-स्मितिरेखोऽयं लेखकस्य सुहृद् यौवनपूर्वे वयसि 'ज्येष्ठा'-(=अलक्ष्मी)-कृपाभाजनमासीदिति तु तस्य विद्वज्ज्यैष्ठ्यं समीचीनमेव। अनन्तरं तु ज्येष्ठाभगिन्या लक्ष्म्या अपि स प्रसादभागभवत्। सिद्धं पुटपाकप्रतीकाशं सन्तुलितं व्यक्तिमत्त्वम्। अतो निरहंकारित्वं निरसूयत्वमित्यपि साधितम्। प्राप्तानेकगौरवेऽपि न व्यक्तिगुरुता, सत्कारभारेऽपि न मनोजडता, यशोदीपिकावलयेऽपि न स्व-अर्थ-प्रकाशाकाङ्क्षा।

श्रीधरमहाभागानां सन्ततिसौख्यमपि श्लाघनीयम्। ज्येष्ठा कन्या पाश्चात्यायुर्वेदविशारदा, कनिष्ठा कन्या स्थापत्यशास्त्रविशारदा, सूनुरेकः शास्त्रज्ञो, द्वितीयोऽर्थशास्त्रप्रवीणोऽपि केवलार्थार्जन-विमुखोऽरुणाचलप्रदेशे सामाजिकं कार्यं करोति। तृतीयश्च वास्तुविशारदः। सर्वं तावदिदानीं 'समृधेव पर्व' (वैदिकोक्तिप्रकारेण यदि कथ्यते) विद्यते। १९१९ तमे ख्रिस्ताब्दे स्वजन्मना वर्णकरकुलमुत्तंसयन्निदानीं पारसप्तिवर्षः "प्रज्ञाभारती"—पदविकाप्राप्तोऽयं महाकविर्विद्वान् जीवेत शरदः शतम्। जीवेत शरदः शतम्॥



---

**त्रुटि-सुधारणा—**

पूर्वाङ्के आवरणपृष्ठे (१+३) प्रकाशितयोः चित्रयोः चित्रकारः **श्रीमान् विद्याव्रतः**—अरविन्दाश्रमः, पाण्डीचेरी, वर्तते। तस्य नाम पूर्वाङ्के न प्रकाशितम्। कृपया सहृदयाः पाठकाः संशोधनं कृत्वा पठन्तु इति।

—सम्पादकः

# विश्वसंस्कृतम्

## बोर्डविद्यालयेषु संस्कृतस्य स्थानं पूर्ववदेव भविष्यति

केन्द्रीयमाध्यमिकशिक्षाबोर्डस्य विद्यालयेषु संस्कृतस्य स्थानं पूर्ववदेव स्थास्यति। सर्वकारीयसूत्रानुसारम् अयं निर्णयः सर्वोच्चन्यायालयस्य अन्तरिम-आदेशान्तर्गतं गृहीतोऽस्ति। एतत्पूर्वं बोर्डेन दिसम्बरमासस्य १६ तारिकायां पाठ्यक्रमे संशोधनं कृत्वा संस्कृतस्य ऐच्छिकविषयत्वेन निर्धारणं कृतमासीत्। बोर्डस्य अनया व्यवस्थया संस्कृतप्रेमिसमाजे अतीव क्षोभः जातः।

### ज्ञानविज्ञानभाषात्वेन संस्कृतस्य महत्त्वम्

उपराष्ट्रपति-शंकरदयालशर्मणाम् अध्यक्षतां प्रवर्तमानेन केन्द्रियसंस्कृतबोर्डेन संविधानस्य अष्टम-अनुसूचौ सम्मिलितायाः संस्कृतभाषायाः कृते कम्प्यूटर-भाषात्वेनं महत्त्वं दातुं संस्तुतिः कृताऽस्ति। बोर्डेन वैज्ञानिकतत्त्वानामध्ययनार्थं संस्कृतपाठ्यक्रमे एकरूपतामानेतुम् एकस्या परिषदः संघट्टनं कार्यमित्यपि निर्णयः गृहीतः। बोर्डः कासांचित् अन्यासामपि समितीनां स्थापनां करिष्यति। एतदन्तर्गतं—संस्कृतं राष्ट्रीयैकता च' 'संगणक (कम्प्यूटर) भाषारूपेण संस्कृतम्' 'संस्कृतभाषायां वैज्ञानिक-प्रौद्योगिकी-अभियान्त्रिकी-ज्ञानम्' 'संस्कृतभाषाया अन्यभाषाभिः सह साहित्यानुवादः' इत्यादि विषयिण्यः समितयः सन्ति।

### बृहन्मात्रायां संस्कृतस्य प्रचारः प्रसारः भविष्यति

दिल्लीप्रसाननेन संस्कृतभाषायाः साहित्यस्य च उत्थानार्थं बृहन्मात्रायां संस्कृतस्य प्रचार-प्रसार-करणार्थं कार्यारम्भस्य निर्णयः कृतः।

कार्यकारीपार्षद-(शिक्षा) श्री कुलानन्दभारतीयमहोदयेन कथितं यत् संस्कृतअकादम्याः सहयोगेन विद्यालयेषु अध्यापकाः नियोजयिष्यन्ते। तेन अग्रे उक्तं यत् संस्कृतं पुनं सामान्यजनपर्यन्तं नेतुं राजधान्यां महति स्तरे अध्ययनकेन्द्राणां स्थापनां कर्तुम् अस्यां भाषायां प्राप्तयोग्यतानां छात्राणां कृते छात्रवृत्तिः अपि दास्यते। सरलसंस्कृतकेन्द्राणाम् उद्घाटनस्य विषये तेन कथितं यत् एतद्विषये विस्तृता योजना निर्मीयते।

### संस्कृतशिक्षकाणां यू० जी० सी० वेतनमानस्य याचना

महन्त कैलाशनाथशास्त्रिणा केन्द्रसर्वकाराय राज्यसर्वकाराय च अनुरोधः कृतः अस्ति यत् देशे परम्परागतरूपेण प्रचलितेषु संस्कृतविद्यालयेषु महाविद्यालयेषु पाठयताम् अध्यापकानां कृते विश्वविद्यालयअनुदान-आयोगद्वारा निर्धारितस्य वेतनमानस्य वितरणं कर्तव्यम्।

श्रीशास्त्रिमहोदयेन आरोपः कृतः यत् शास्त्रि-आचार्यकक्षासु अध्यापयतां शिक्षकाणां यू० जी० सी० वेतनमान न दत्वा बी०ए०-एम०ए० कक्षासु च पाठयतामध्यापकाणां तादृशं वेतनमान दत्त्वा च संस्कृत-शिक्षकाणाम् अतीव अपमानः कृतः सर्वकारेण। यद्यपि सर्वत्रैव उभयोरपि उपाध्योः समानत्वं स्वीकृतमेव तथापि सर्वकारस्य अयं व्यवहारः क्षोभजनकः अस्ति।

### एतान् पण्डितप्रवरान् अभिनन्दति विश्वभाषा सानन्दम्

ऑगस्टमासस्य पञ्चदशदिनाङ्के केन्द्रशासनेन राष्ट्रपतिपुरस्कारः घोषितः। प्रा० के० टी० पाण्डुरङ्गी, पं० लक्ष्मीनरसिंह शास्त्री, पं० श्रीकण्ठशास्त्री, पं० विश्वनाथशास्त्री दातारः, डा० श्री० वा० सोहोनी डॉ० श्री० भा० वर्णेकरः चेति पण्डिताः।

# प्रतिष्ठानवार्ता

## बिहारप्रान्तवार्ता—

विश्व-संस्कृत-प्रतिष्ठानस्य बिहारशाखायाः पाटलिपुत्र-नगर-समीत्या अगस्तमासस्य २६ दिनाङ्के पटना-संग्रहालयस्य विशाल-सभागारे "संस्कृतम् राष्ट्रभाषा पद-योग्या चेत् का बाधा तत्पद-प्राप्तौ ?" इति विषयमवलम्ब्य गोष्ठ्या आयोजनं सञ्जातम्। गोष्ठ्यामस्यां ५०० मिताः जनाः समुपस्थिता आसन्। अत्र सर्वश्री हीरानन्द झा शास्त्री-रक्षपाल राकेशशास्त्री-किशोर कुणाल-निशीथकुमार तरफदार-निर्मलेश-सुश्री शशिकला-सुश्री सुधारानी-मिथिलेश झा : स्वागतगीतं गीतवन्तः। सर्वश्री अनिल कुमार चौबे-कुसुमाकर दुबे अनिलकुमार सिंहैः संस्कृते डिस्को—लोकगीतानि प्रस्तुतानि। अवसरेऽस्मिन् यवना अपि समुपस्थिता आसन्।

अनया संस्थयैव पटना विश्वविद्यालयस्य स्नातकोत्तर-संस्कृत-विभागे दशदिवसात्मकस्य संस्कृत-संभाषण-शिविरस्य आयोजनं जातम्। शिविरमेतत् सर्वश्री—मिथिलेशझा अनिलकुमार सिंह—अनिलकुमार चौबे—कुसुमाकर दुबे—मुकेशकुमार ओझा प्रभृतिभिः सञ्चालितम्। अस्य शिविरस्य समापन-समारोहः शिविरस्थले एव श्रीहीरानन्दझाशास्त्री-महोदस्य अध्यक्षतायां सम्पादितः। अधुना विभागे संस्कृतं लोकभाषारूपेण भाष्यते।

### दलाईलामा विश्वशान्त्यर्थम् नोबेल-पुरस्कारेण सम्मानितः

प्रसिद्धो महात्मा, आध्यात्मिको नेता, विश्व-शान्त्यर्थं सर्वदैव प्रयत्नशीलः १४ तमः दलाईलामा विश्वशान्त्यर्थं नोबेल पुरस्कारेण पुरस्कृतः इति सर्वेषामपि हर्षस्य अवसरः। ऐते विश्वसंस्कृतप्रतिष्ठानस्य संस्थापकसदस्येषु अन्यतमाः आसन् इति अनेक प्रसङ्गेन विश्व-संस्कृत-प्रतिष्ठानस्यापि गौरवं वर्धितम्।



प्रतिष्ठानपरिवारः तेभ्यः नैकशः शुभकामनाः प्रेषयति। एतेषां विश्वशान्त्यर्थं कृताः क्रियमाणाश्च प्रयत्नाः सर्वदा स्तुतियोग्याः।

### श्रृंगेरी-जगद्गुरुणां समाधिः

विश्वसंस्कृतप्रतिष्ठानस्य आधारप्रेरणाभूताः साक्षात् शंकरावताराः श्रीमज्जगद्गुरुश्रृंगेरीपीठाधीश्वराः श्री अभिनवविद्यातीर्थमहास्वामिपादाः समग्रे भारते आध्यात्मिकविद्यायाः प्रचारं कुर्वन्तः विगत २१-९-८९ दिनांके इह लोकम् अत्यजन्। विश्वसंस्कृत-प्रतिष्ठानं तेषां वियोगेन अतीव शोकाकुलं वर्तते।

### प्रतिष्ठानस्य केरलशाखायाः महामन्त्री दिवंगतः

प्रसिद्धः संस्कृतविद्वान् तथा विश्वसंस्कृतप्रतिष्ठानस्य केरलशाखायाः महासचिवः श्री के० एन० मेननमनंगरमहोदयः हृदयगत्यवरोधेन दिवंगतः। श्रीमेनन महोदयः ६२ वर्षीयान् आसीत्। संस्कृतव्याकरणम् इति सहितानि नैकानि पुस्तकानि तेन लिखितानि सम्पादितानि च। तस्य निधनेन प्रतिष्ठानस्य अतीव क्षतिः जाता।

# संस्कृताय समर्पितः डॉ० श्री० भा० वर्णेकरः

**डॉ० विश्वनाथवामनदेवः**
अध्यक्षः—वेदविभागे, काशी हिन्दूविश्वविद्यालयस्य

मम डॉ० वर्णेकरमहोदयेन सह परिचयः १९५१ वर्षे नागपुरे राष्ट्रीयस्वयंसेवकसंघस्य एकस्मिन् शिक्षावर्गे अभूत्। राष्ट्रीयभावनया ओतप्रोतान् हृदयस्पर्शिनः तेषां विचारान् संस्कृतमाध्यमेन तदानीं प्रथमवारमश्रौषम्। तदनन्तरं १९५४ वर्षे नागपुरे एव पं० बालशास्त्री हरदासमहाभागस्य प्रेरणया मम ऋग्वेदस्य पारायणम् सार्वजनिकरूपेण दक्षिणामूर्तिमन्दिरे समायोजितम्। एतत्पारायणं श्रोतुं ते नैकवारं समागताः। तथा एतत्सन्दर्भे 'भवितव्यम्' इति संस्कृतसाप्ताहिके चतुरो अग्रलेखानपि ते व्यलिखन् यत्र वेदानां पराम्परागतमध्यनम्, उच्चारणं, कण्ठस्थीकरणं वर्तमानयुगे उपादेयता चेति एतेषु विषयेषु स्वीया अभिप्रायाः तैः मण्डिताः तेषां लेखानाम् अतीव प्रशंसा जाता।

डॉ० वर्णेकरमहोदयानां विश्वविश्रुतस्य संस्कृतवक्तृत्वस्य मूलप्रेरणाभूताः परमपूज्याः गोलवरकरगुरुजीमहाशयाः श्री बाबा साहेब आपटे महोदयाश्चासन्। वर्णेकरमहोदयानामेव प्रेरणया राष्ट्रीयस्वयंसेवकसंघस्य अखिलभारतीयसंघशिक्षावर्गेषु संस्कृतावतरणं प्रतिदिनं प्रारब्धम् यद् अद्यापि प्रचलदस्ति। इतः ३० वर्षेभ्यः प्राक् संघस्य विभिन्नेषु शिक्षणवर्गेषु प्रातःकाले प्रातःसंस्मरणरूपेण केषांचित् रमणीयानां श्लोकानां रचना श्रीवर्णेकरमहोदयेन कृता यत्र भारतस्य सर्वेषां प्रान्तानां, पथाम्, उपपथानां, महापुरुषाणां, (पुराणकालतः आरभ्य गान्धियुगपर्यन्ताः ते एव महापुरुषा अत्र वर्णिताः येषां विचारेषु हिन्दुधर्मभावनायाः प्रवाहः सततं सञ्चरति) स्मरणं वन्दनं च कृतमस्ति। अस्य प्रातःस्मरणस्य अन्ते भारतमातुः स्तुतिः एवं कृताऽस्ति—

रत्नाकराधौतपदां हिमालयकिरीटिनीम्।
ब्रह्मराजर्षिरत्नाढ्यां वन्दे भारतमातरम्॥

तथा फलश्रुतिरित्थं वर्णिता वर्तते—

प्रातःस्मरणमेतद्यो विदित्वाऽऽदरतः पठेत्।
स सम्यग्धर्मशीलः स्यात् संस्मृताखण्डभारतः॥

एवं तैः स्वीयप्राचीनपरम्पराया अपि निर्वाहः कृतः। एतेन स्पष्टं वर्तते यत् राष्ट्रनिष्ठया साकं तेषां मनसि धर्मनिष्ठा अपि प्रखरा अस्ति।

पुरस्कारविषयिणीं वार्तां श्रुत्वा चकिताः श्रीवर्णेकराः

**१९४८ वर्षे नेहरूसर्वकारेण राष्ट्रीयस्वयंसेवकसंघस्य परःसहस्राः कार्यकर्तारः कारागृहे प्रेषिताः। तदानीं परमपूज्य-श्री गुरुजी-श्री बाबा साहेब आपटे-महोदययोः प्रेरणया तैः कारागृहे एव संस्कृतलेखन-भाषणयोः अभ्यासः विशेषरूपेण कृतः।**

भारतीय-भाषा-परिषदा-श्रीवर्णेकर-रचित-संस्कृत-वाङ्मय-कोशस्य प्रकाशनस्य विचारः यदा प्रारब्धः तदानीम् एतैः एकस्याः वैदिकपरिचर्चायाः अपि आयोजनं कृतं यत्र सर्वासां शाखानां श्रेष्ठाः विद्वांसः आमन्त्रिताः तथा तेषां वेदसेवायाः गौरवं वर्धापितं एतेन श्रीवर्णेकरमहोदयानां वेदविषयकः आदरः अपि स्पष्टं परिलक्ष्यते ।

१९४८ वर्षे नेहरूसर्वकारेण राष्ट्रीयस्वयंसेवकसंघस्य परःसहस्राः कार्यकर्तारः कारागृहे प्रेषिताः । तदानीं परमपूज्यगुरुजी—श्रीबाबा साहेब आपटे महोदययोः प्रेरणया तैः कारागृहे एव संस्कृत-लेखन-भाषणयोः अभ्यासः विशेषरूपेण कृतः ।

श्रीवर्णेकरमहोदयैः स्वरचितानि गेयपद्यानि रागतालाभ्यां संयोज्य तेषां प्रकाशनं कृत्वा महानुपकारः कृतः । एतानि स्वरचितगेयपद्यानि प्रस्तोतुं तैः तेषां पत्न्या च पर्याप्तं समयं दत्वा सङ्गीतस्यापि शिक्षा गृहीता तथा निःसङ्कोचभावेन ते स्वरचितपदानि यत्र तत्र योग्येषु अवसरेषु गातुं प्रारभन्त ।

श्रीवर्णेकरमहोदयेन समस्तभारतेन साकं नैकवारं विदेशस्यापि यात्रा कृता । अयं महानुभावः नूनमेव संस्कृतस्य आत्माऽस्ति । एतेनैव एषा भूमिः विद्वती कथ्यते । अस्मिन् वर्षे एतेन राष्ट्रपतिपुरस्कारः प्राप्तः इति समेषामप्यस्माकं गौरवं वर्धितम् । विश्वसंस्कृतप्रतिष्ठानं अस्य सम्माने स्वीयविश्वभाषायाः अभिनन्दनाङ्कं प्रकाशयति इति मोदास्पदम् एतत् । एतदर्थं प्रतिष्ठानपरिवारः साधुवादैः महीयते । अन्ते श्रीवर्णेकरस्य आयुरारोग्यैश्वर्यसम्पदं भगवतः काशीविश्वनाथस्य चरणेषु संप्रार्थ्य विरमामि ।



# चिरं जीवतु महाकविः

डा० मोरेश्वर राव पाटील
१, खोनचाल, अक्षीकर मार्ग, बम्बई

अद्यतनीये भारते ये केचन 'महाकविः'–उपाधिधारणक्षमाः गीर्वाणसाहित्यिकाः सन्ति तेषु सर्वेषु विद्वद्वरेण्यानां श्रीमतां डॉ० श्रीधरभास्करवर्णेकरमहोदयानां स्थानं असामान्यम् अग्रेसरमेव। तीर्थेभ्यः गृहीतविद्याः ते प्राचीनपद्धतिप्रवीणाः आधुनिकप्रणालीतज्ज्ञाः एव। पाणिनीयसूत्रेषु यथा ते रमन्ते तथा पी-एच्० डी० उपाधिरपि तान् भूषयति। उत्तमः छात्रः आदर्शः अध्यापकः भवति इति न्यायेन अध्यापनकुशलाः ते अध्यापकरूपेण च्छात्रेषु प्रियाः पूजनीयाः अपि।

तेषां साहित्यमेव प्रकटीकरोति तेषां साहित्यिकगुणान्। तेषां विषयानुरूपा भाषा प्रौढा अपि बालिकासदृशी निरागसा सुललिता प्रगल्भा अपि सर्वैः सुबोधा, विलासिनी, सुगमप्रवाहा, विविधालंकारप्रचुरा अपि प्रकृत्या रम्या, विभ्रमनर्तकी रसिकानां मनांसि प्रथमदर्शने एव विलोकयति। शिवराजमहाकाव्ये येषां केषांचन वृत्तानां, शब्दालंकारार्थलंकाराणां, रसानां सम्यक् दर्शनं भवति तद्दृष्ट्वा, "नैवायं सामान्यः कविः किं तु रसभावनिपुणः अलंकारशास्त्रप्रवीणः, काव्यशास्त्रमेधावी, छन्दरचनानिष्णातः साहित्यिकाग्रणी एव भवितुमर्हति" इति वाचकानां चित्तानि स्तिमितानि भवन्ति। पण्डिताः 'शुनि चैव श्वपाके च समदर्शिनः' भवन्ति इति गीतासु भगवता निर्दिष्टं तथैव डॉ० वर्णेकरमहाभागाः अपि रसानां आविष्करणे समभावदर्शिनः भवन्ति। तेषां प्रकृतिः मूलतः सात्त्विकी, समभावः तस्याः धर्मः तर्हि कथं स्वप्नेऽपि पक्षपातः शक्यः। न केवलं शृंगारे वा वीरे वा करुणे वा अपितु सर्वेषु एव रसेषु तेषां समाना रुचिः, समं लाघवं, साधारणः आदरः। "विवेकानन्दविजयम्" नाटके तेषां संभाषणसौकर्यं स्पष्टीभवति। यद्यपि विषयानुसंधानेन शान्तरसः एव अस्य नाटकस्य प्रधानरसः भवितुमर्हति तर्हि अपि अन्येषां रसनां उपस्थित्या महाकविना चातुर्यम् आविष्कृतम्।

यथा संस्कृतभाषाध्ययनाध्यापनं तेषां प्रधानः छन्दः[१] तथा तोषवहा संगीतशिक्षापि तेभ्यः अतीव रोचते। स्वयं प्रातःकाले ब्राह्मे मुहूर्ते उत्थाय



भू० पू० राष्ट्रपतिः श्री बी० डी० जत्तीमहाभागः शिवराज्याभिषेकनाटकप्रकाशनावसरे डा० वर्णेकरं सम्भावयति

१. अयं शब्दः चिन्तनीयः।

चातुर्वर्ण्यं मया सृष्टं गुण-कर्म-विभागशः ।

—श्रीकृष्णः भगवद्गीतायाम्

## सन्देशः

"अस्पृश्यतायाः लघुमहत्तायाश्च व्यवहारः सामाजिकया तथा राष्ट्रीयया दृष्ट्या सर्वथा अवाञ्छनीयः अनैतिकश्च वर्तते ।

सामाजिकसमरसतां विना राष्ट्रीयैकतायाः कल्पनाऽपि कर्तुमशक्या ।"

सौजन्येन

# सिद्धि प्लास्टिक्स

३००३ बहादुरगढ़मार्गः

भगवानसिंह मार्केट

दिल्ली—११०००६

प्रातर्विधिं समाप्य प्रथमः अल्पः संगीताभ्यासः । तदनन्तरम् अन्ये दैनन्दिनाः कार्यक्रमाः । संगीतेन मनःशान्तिः मनःस्वास्थ्यं तु सुकरं भवत्येव किं पुनः अनेकासां समस्यानां विमोचनमपि सुलभं भवति । एतेषां संगीताभ्यासः न दर्शनार्थं नवा द्रव्यकामार्थं नवा प्रसिध्यर्थम् अपि तु स्वान्तःसुखाय एव भवति । तेन मनःस्वास्थ्यं ऐकाग्र्यं शान्तिश्च प्रतिष्ठाप्यन्ते, अन्येषां सर्वेषां विचाराणां विकाराणामपि परास्तभावेन मनसः शक्तिः प्रभूतं वर्धते इति योगाभ्यासकानां मतम् ।

योगाभ्यासः अपि डॉ० वर्णेकरमदयानां कृते न अपरिचितः । तत्रभवतां नागपुरस्थानां स्वर्गीयाणां पुण्यश्लोकानां परमहंसजनार्दनस्वामिनां एते शिष्यप्रवराः शब्दे परे च निष्णाताः । यथा योगाभ्यासचतुराः तथा योगशास्त्रमीमांसकाः अपि ।

संस्कृतभाषाप्रचारप्रसारौ च तेषां प्राणप्रदः धर्मः । यदा व्याख्यानानां निमन्त्रणार्थं कः अपि अतिथिः गेहे प्रविशति तदा प्रयोजननिवेदनानन्तरं प्रथमः संकेतः ईदृशः यत्, "गीर्वाणभाषायामेव मम व्याख्यानं भवति । गीर्वाणवाणीमुत्सृज्य अन्यस्यां कस्यांचिद् भाषायां व्याख्यानं वा प्रवचनं वा कर्तुमसमर्थः अहम्" इति । उपायान्तरविमूढः सः अतिथिः स्वीकरोति एवं सङ्केतम् । तस्य मनसि तु वर्तते इदं, "कथं सफलं स्यात् एतत् सर्वम्" किन्तु कार्यक्रमानन्तरं सर्वे आश्चर्यचकिताः इव तिष्ठन्ति । यतः संपूर्णं व्याख्यानं एतावत् सुलभं, सुगमं, सुबोधं, रम्यं, रुचिरं, चित्ताकर्षकं भवति यद्, एकघण्टापर्यन्तं कथं अस्माभिः अपरिचितायां एकस्यां भाषायाम् एतद् व्याख्यानं विना काठिन्येन, सौकर्येण, क्लेशैर्विना श्रुतं, ज्ञातम् अवगतं च इति तेषां अंतःकरणानि विस्मयाकुलानि । नूनं डॉ० वर्णेकरमहाभागानां एतत् कौशलम् असामान्यं भवति । अस्मिन् प्रान्ते ते अपराजिताः अद्वितीयाः एकप्रवीराः इव भान्ति । नागालैंडप्रान्ते यदा तेषां गमनम् अभूत् तदा तत्रस्थानां युवकानां चित्रपटसंगीतविषये अभिरुचिं विज्ञाय संस्कृतभाषाप्रचारार्थम् एतैः महोदयैः मातृभूमि-संस्कृति-धर्म-आदीन् तेषाम् अभिमतविषयान् अधिकृत्य चित्रपटगीतानां गेयताम् अनुसृत्य गीर्वाणभाषायां काव्यरचनाः कृताः तेभ्यश्च पाठिताः। तत्र एतेषां गीतानाम् अर्थविशदीकरणानन्तरं एतादृशः प्रभावः संजातः यत् चित्रपटगीतानि विस्मृतानि, नूतनानि संस्कृतगीतानि एव कण्ठस्थानि जातानि । "वृक्षश्च सिक्तः पितरश्च तृप्ताः" इति न्यायेन चित्रपटगीतगेयता छात्राणाम् अभिमता इति तेषां प्रिया, संस्कृतप्रसारश्च विनासायासं साधितम् इति अस्माकं कार्यं सिद्धम् । यदा काव्याधिष्ठात्री साक्षात् शारदादेवी एव सुप्रसन्ना भवति तदा महाकवीनां कृते किमिव दुष्करम् ।

एवं बहुविधप्रकारकं व्यक्तिभावं धारयन्तः एते राष्ट्रीयस्वयंसेवकसंघस्य पुरातनाः निष्ठावन्तः स्वयंसेवकाः सुहृद्वरेण्याः डॉ० श्रीधरभास्कर वर्णेकरमहाभागाः आयुरारोग्यसन्तोषपरिपूरिताः चिरं जीवन्तु, संस्कृतभाषाप्रचारप्रसारयोः प्रभूतं योगदानम् अविरतम् अर्पयन्तु इति श्रीश्रीधरचरणारविन्दयोः सविनयं सानुनयं च विनम्रा प्रार्थना ।

डॉ० श्री० भा० वर्णेकरविषये नैकैः तत्प्रशंसकैः स्वीया रचनाः विश्वभाषायां प्रकाशनाय प्रेषिताः सन्ति । परं स्थानमर्यादाबद्धत्वात् ताः सर्वा अपि प्रकृताङ्के प्रकाशयितुं न प्रभवामः । भविष्यति यथावकाशं प्रकाशयामः ।

**—सम्पादकः**

इति शम् ।

# श्री० भा० वर्णेकररचितं श्री शिवराज्योदयम् नाम महाकाव्यम्

चौ० श्रीनारायण सिंहः
वि० सं० प्र०

मासद्वयात्पूर्वं श्रीशिवराज्योदयम् इति नामकं पुस्तकं विश्वसंस्कृतप्रतिष्ठानस्य रामगरस्थे केन्द्रियकार्यालये मम दृष्टिपथं समायातम्। छत्रपति-महाराजं शिवराजं प्रति बाल्यादेव श्रद्धाभरितान्तःकरणत्वात् तं ग्रन्थं तत्कालमेव समादाय दिनद्वयाभ्यन्तरे मूलतः आरभ्य अन्तिमाध्यायस्य अन्तिमपंक्तिपर्यन्तम् अधीत्य परमाह्लादमन्वभूवम्। कालिदासप्रभृतीनां कविपुंगवानां सरसानि काव्यानि मया बहुधा आस्वादितानि। परन्तु शिवराज्योदयाख्येऽ-

सन्ध्यादिषाड्गुणस्य यथोचितम् उपयोगः, सामादीनां चतुर्णामुपायानां समुचितः प्रयोगः, त्रिविधशक्तीनां प्रदर्शनम्, नीतिवेदिनां त्रिवर्गस्य साधनम् इत्येतेषां राजशास्त्रीयाणां विषयाणां निदर्शनं यथा शिवराज्योदयाख्ये काव्येऽस्मिन् वर्तते तथा अन्यत्र दुर्लभमेव इति निश्चप्रचम्। अत्र छत्रपतिशिवाजिवद् वर्तितव्यं ननु अवरंग-जीवादिवद् इतिकाव्यध्वनिः स्फुटतया परिलक्ष्यते।



साहित्य-अकादमी-अध्यक्षः शिवराज्योदयस्य कृते डॉ० वर्णेकराय पुरस्कारमर्पयति

स्मिन् काव्ये मया काचिद् अपूर्वा चमत्कृतिरनुभूता। साहित्यसिद्धान्तकारैः काव्यार्थं 'श्रृङ्गारवीरशान्तानामेकोऽङ्गी रस इष्यते' इति नियमनं कृतम्। महाकाव्यमिदन्तु यद्यपि वीररसप्रधानं, किन्तु अत्र किंचिद् वैलक्षण्यं वर्तते। वीररसात्मके काव्ये प्रायेण दृश्यते यत् प्रधाननायकः कस्याश्चित् मनोऽभिरामायाः रामायाः कृते स्वकीयं शौर्यं प्रकटीकरोति। परन्तु अस्य काव्यस्य धीरोदात्तगुणान्वितः नायकः सूर्यवंशीयः क्षत्रियजातीयः छत्रपतिः शिवाजिः म्लेच्छाक्रान्तं भारतं समुद्दिधीर्षुरेव दृश्यते। अत्र वर्णितः वीररसः वस्तुतः राष्ट्रभक्ति-रसरूपेण परिणतो वर्तते। तृतीयाध्यायस्य अष्टसप्ततितमे श्लोके कथानायकस्य भाविजन्मविषये स्फुटतया अभिहितं यथा—

"माद्यन्म्लेच्छगणान् निहन्तुमखिलान् त्रातुं सतीसज्जनान्,
धर्मं स्थापयितुं श्रुतिस्मृतिगतं पातुं च गोब्राह्मणान्।
दम्पत्योरनयोरखण्डितयशाः कश्चित् पुनर्जायतां,
यो दिव्याद्भुतसद्गुणैरगणितैः कुर्याज्जगन्मङ्गलम्॥

यद्यपि काव्यस्य अङ्गीरसः वीरः किन्तु श्रृङ्गारादयोऽपि अवशिष्टा रसाः यथास्थलं सन्निविष्टाः सन्ति। अङ्गरूपेण वीररसात्मके काव्ये ओजःप्रधानः गुणो भवति। प्रकृते काव्ये अष्टषष्टिसर्गाः वर्तन्ते। तेषु यत्र तत्र माधुर्यप्रसादगुणयोरपि दर्शनं भवति। किन्तु सर्वत्र ओजोगुणस्यैव प्राधान्यं वरीवर्ति। काव्यस्यास्य विरचनेन महाकविना वर्णेकरमहोदयेन निश्चयेन एका अकृतपूर्वा कृतिः सम्पादिता। इतिहासोद्भवमेव वृत्तं काव्यस्यास्य। पुराविद्भिः इतिहासगतिः द्विधा वर्णिता—

परिक्रिया पुराकल्पः इतिहासगतिर्द्विधा।
स्यादेकनायका पूर्वा द्वितीया बहुनायका॥ इति।

यस्मिन् इतिहासे एक एव प्रधानः पुरुषः नायकः भवति स इतिहासः 'परिक्रिया' इति संज्ञां लभते। अतः वर्णेकरस्य महाकाव्यमिदं परिक्रियेतिहासरूपेण परिगणितुं शक्यते। कविना यथास्थानं धर्मार्थकाममोक्षाणां चतुर्णां वर्गाणां सुष्ठु वर्णनं कृतम्। दाक्षिणात्यवृत्तिः, कैशिकी प्रवृत्तिः वैदर्भी रीतिश्च इत्येतासां प्रचुरमुदाहरणम् अत्र दरीदृश्यते किन्तु कासाञ्चित् अन्यासामपि रीतिवृत्तिप्रवृत्तीनां यथास्थानं सन्निवेशः दृश्यत एव। श्रीवर्णेकरमहोदयः सुदुर्लभया, सहजया, कारयित्र्या प्रतिभया सम्पन्नः सारस्वतो महाकविरिति, आदिमध्यावसानेषु सरसत्वात् शिवराज्योदये काव्ये सहकारपाकः परिलक्ष्यते।

निर्दुष्टशब्दार्थत्वात् गुणालंकृतत्वात् रसवत्त्वाच्च काव्यमिदम् उत्तमकोटिकस्य ध्वनिकाव्यस्य निदर्शनम् विद्यते। नायकनाम्नैव काव्यस्यास्य अभिधानं कृतम्। साहित्यदर्पणकारेण काव्येऽपेक्षितानां वर्ण्यविषयाणाम् उल्लेखः निम्नरूपेण कृतः—

नातिस्वल्पा नातिदीर्घाः सर्गा अष्टाधिका इह।
नानावृत्तमयः क्वापि सर्गः कश्चन दृश्यते॥
संध्यासूर्येन्दुरजनीप्रदोषध्वान्तवासराः।
प्रातर्मध्याह्नमृगया शैलर्तुवनसागराः॥
संयोगविप्रलम्भौ च मुनिस्वर्गपुराध्वराः।
रणप्रयाणोपगममन्त्रपुत्रोदयादयः।
वर्णनीया यथायोग्यं साङ्गोपाङ्गा अमी इह॥इति।

शिवराज्योदये काव्ये उपर्युक्तवर्ण्यविषयाणां यथास्थानं सन्निवेशं दृष्ट्वा प्रतीयते यत् महाकविना वर्णेकरमहोदयेन एकं विलक्षणं लक्ष्यभूतं वीररसात्मकं महाकाव्यं विरचितमिति।

तथा च, सप्ताङ्गस्य राज्यस्य लाभः व्यवस्थापनञ्च, सन्ध्यादिषाड्गुण्यस्य यथोचितम् उपयोगः, सामादीनां चतुर्णाम् उपायानां समुचितः प्रयोगः, त्रिविधशक्तीनां प्रदर्शनम्, नीतिवेदिनां त्रिवर्गस्य साधनम् इत्येतेषां राजशास्त्रीयाणां विषयाणां निदर्शनं यथा शिवराज्योदये काव्ये वर्तते तथा अन्यत्र प्रायेण सुदुर्लभमेवइति निश्चप्रचम्। अत्र छत्रपतिशिवाजिवत् वर्तितव्यं न तु अवरंगादिवदिति काव्यध्वनिः स्फुटतया परिलक्ष्यते॥



।। साल्लाह्नामजापं योऽल्लाहो दयी हितैष्यपि ।।

प्रभुः सर्वस्य विश्वस्य योऽल्लाहो वर्तते ध्रुवम् ।
शंसनं सर्वमप्यस्ति तदर्थम्, यः पुनर्दयी ।।

अत्यर्थञ्च कृपाशीलः, निर्णयाहस्य यः प्रभुः ।
नमामः केवलं ते वै, त्वदेव केवलादथो ।।

साह्यापेक्षा भवामश्च, दर्शयास्मान् ऋतं पथम् ।
तेषां येषु दया जाता त्वदीया, न परं पुनः ।।

तेषां ये कोपपात्राणि त्वदीयान्यभवन् अथो ।
नापि तेषां पथभ्रष्टा अभूवन् ये तु मानवाः ।।

**(सांस्कृत-कुराणतः)**

## हज़रत सय्यद् अहमद बदवी—

**जंगली पीर दर्गाह—**

**अन्यपीर दर्गाह—**

**विश्वस्त-मण्डलद्वारा शुभेच्छाः ।**

**दीपावली यथार्थे तमोनाशं करोति या ।**
**प्रकाशं वितनोति सा ज्ञानमयं करोति च ।।**

Editor : Pandit Gulam Dastagir Abbas Ali Virajadar, Jengali Pir Dargah, Worli, Bombay-400 018, Publisher-Devadutt, Published at Vishwa Sanskrit Pratishthanam, Fort Ram Nagar, Varanasi-221 008, and Printed at The Tara Printing Works, Varanasi 221010.



तृतीयवर्षस्य चतुर्थाङ्कः     गणतन्त्रदिवसाङ्कः     २६ जनवरी १९९०

# विश्वभाषा
# VISHVABHASHA

अन्ताराष्ट्रिया त्रैमासिकी संस्कृत-पत्रिका     International Sanskrit Quarterly



रामनगरदुर्गः,
वाराणसी, शिवरात्रिः

अयि सुरभारतीस्नेहिनः !
विलसन्तुतरां नः प्रणतयः ।

नाविदिता हीयमाना दशा गीर्वाणवाण्याः कस्यापि सहृदयस्य । ईदृशीयं दैन्यावस्था कस्य सुरभारतीपुत्रस्य मनसि क्लेशं न जनयति ? नैष प्रश्नः केवलं भाषायाः अपितु समग्रस्य वैदिकस्य, आध्यात्मिकस्य वाङ्मयस्य भौतिकस्य विज्ञानस्य च रक्षायाः । संस्कृतस्य ह्रासः विश्वस्य दैवसम्पद्ह्रासः । वयं मन्यामहे यत् संस्कृतस्योत्थानं विश्वस्य सर्वाङ्गीणम् उत्थानमेवेति । किन्तु इदानीं विद्यालयेषु शालासु च काचित् उत्साहदायिनी स्थितिर्न दृश्यते । सर्वत्र नैराश्यमेव लभामहे ।

परन्तु अस्मिन् अन्धतमसे नवोदयसूचिता प्रकाशरेखाऽपि वर्तते । विगतकतिपयवर्षेभ्यः संस्कृतस्नेहपूरितान्तःकरणैः संस्कृतानुरागिभिः स्वकीयैरखण्डप्रयासैः "विश्वसंस्कृतप्रतिष्ठानस्य" माध्यमेन संस्कृतसंवर्धनाय कार्यं सञ्चाल्यते यत्फलस्वरूपेण सर्वत्र भूमण्डले संस्कृतहितसाधकानाम् ऐक्यं पश्यामः ।

देवभाषाप्रसारस्य कार्यं यत् पुरतोऽस्ति नः ।
न केवलं तदस्माकं कर्तव्यं धर्म एव वा ॥
यत्सत्यं तत्तु पूर्वेषामृषीणामृणशोधनम् ।
महाफलं महत्पुण्यमिति मे निश्चितं मतम् ॥

तथापि इत्थं प्रतिभाति यत् कार्यमिदं नाल्पेन कालेन पूर्णतामेष्यति अपितु दीर्घकालिकीं योजनामपेक्षत इति । वयं संस्कृतवाणीं व्यावहारिकीं कर्तुं यत्नशीलाः । एतदर्थं प्रतिष्ठानम् कोटिमुद्रामितम् अक्षयनिधिं निर्मातुकामम् । अनेन कोषेण प्रतिष्ठानं पूर्णकालिककार्यकर्तॄणां सुदृढां सङ्घटनां रचयिष्यति तेभ्यः कार्यकर्तृभ्यश्च संस्कृतसेवायै मानधनं देयं भविष्यति, न तु वेतनम् ।

पुनश्च अस्य धनस्य उपयोगः पौरोहित्यवर्गसञ्चालनार्थं सरलसंस्कृतशिक्षणवर्गसञ्चालनार्थं च करणीय आस्ते ।

उपर्युक्तोद्देश्यं सफलं कर्तुं नेपाल-महाराजाधिराज-पञ्चश्री-वीरेन्द्रवीरविक्रमशाहदेवैः लक्षमिता मुद्राः प्रतिष्ठानाय प्रदत्ताः । एवमेव सर्वैः संस्कृतसेवकैः अस्य अक्षयकोषस्य संवर्धने सहयोगः कर्तव्यः ।

एतत् कार्यं सफलयितुं भगवान् श्रीविश्वेश्वरः अस्माकं शक्तिं प्रयच्छतु इति तच्चरणारविन्दयोः प्रार्थये । इति ।

विभूति नारायण सिंहः

विभूतिनारायणसिंहः शर्मदेवः
काशीनरेशः

---

धनप्रेषणस्थलम् :—
विश्वसंस्कृतप्रतिष्ठानम् द बनारस स्टेट बैंक लि० वाराणसी
दानं S. 80G. आयकर-विधानद्वारा करमुक्तिं लभते ।






शुल्कविवरणम्
आजीवनसदस्यता—
शुल्कम् १५०-००
वार्षिकशुल्कम् १५-००
प्रत्यङ्कमूल्यम् ५-००

मुद्रणस्थलम्
तारा प्रिंटिंग वर्क्स
कमच्छा, वाराणसी–२२१०१०

विश्वसंस्कृतप्रतिष्ठानम् तस्य मुखपत्रम्

# विश्वभाषा
VISHVABHASHA
अन्ताराष्ट्रिया त्रैमासिकी संस्कृतपत्रिका

तृतीयवर्षस्य चतुर्थोऽङ्कः गणतन्त्रदिवसाऽङ्कः

## वेदवाणी

( महर्षि-श्रीअरविन्दविरचित-अग्निमन्त्रमालातः )

अग्निः पूर्वेभिर्ऋषिभिरीड्यो नूतनैरुत ।

स देवाँ एह वक्षति ॥ २ ॥

॥ पदविन्यासः ॥

१ अग्निः । २ पूर्वेभिः । ३ ऋषिभिः । ४ ईड्यः । ५ नूतनैः । ६ उत । ७ सः । ८ देवान् । ९ आ । १० इह । ११ वक्षति ॥

॥ व्याख्या ॥

१ अग्निदेवः । २ पुरातनैः । ३ मन्त्रद्रष्टिभिः । ४ स्तुत्यः । ५ नव्यैः । ऋषिभिः । ६ अपि । ईड्यः, यतः तथाभूतः । ७ सः । देवः अन्यान् इन्द्रादीन् । ८ देवान् । १० अत्र । मर्त्यलोके । ९, ११ आवहति ।

# परामर्शः

मान्याः सम्पादकवर्याः,

विश्वभाषायाः तृतीयवर्षस्य प्रथमाङ्कोऽधिगतः। अयमङ्को विविध-विषयविलसितोऽतीव मनो हरति। ज्ञानशिविरे प्रत्यङ्कं प्रतियोगितात्मक-परीक्षासु ये प्रश्नाः विषयाः वा उपयोगिनो भवन्ति, ते प्रश्नाः सोत्तरं विषया वा सम्यक् प्रस्तूयेरन्।

अन्यच्च, 'गुणाः पूजास्थानं गुणिषु, न च लिङ्गं न च वयः।' इति सदुक्ति स्मरद्भिः संस्कृतज्ञैः, विशेषेण विज्ञानविद्भिः सज्जनैः विश्वभाषायां प्रत्यङ्कम् आधुनिकवैज्ञानिकविषयान् आश्रित्य लेखा लेखनीयाः, परिचर्याः च प्रस्तोतव्याः। विज्ञानं विना कापि भाषा वर्तमानसमाजे स्थातुं न शक्नोति। प्रायशः सज्जनाः कथयन्ति—'किमर्थं कोऽपि संस्कृतं पठेत्? पूर्वं माध्यमिककक्षासु, महाविद्यालयेषु, विश्वविद्यालयेषु, विद्यासंस्थाने चाभूत् संस्कृतविदुषां कृते स्थानम्, किन्तु त्रिभाषा-सूत्रात् संस्कृतस्य बहिष्करणादनन्तरम् इदानीं तत् स्थानमपि गतम्। विज्ञानस्य गरिमा प्रत्येकं क्षेत्रेषु सततं प्रवर्धते। विद्यालयेषु वयं पश्यामः—ये छात्राः विज्ञानं पठन्ति, ते सर्वैः समादृता भवन्ति, किन्तु ये विज्ञानं न पठन्ति, ते स्वल्पमतयो मन्दा वा विभाव्यन्ते। आधुनिकं विज्ञानं संस्कृते न विद्यते। अतः संस्कृताध्ययनस्य किमपि क्षेत्रं नास्ति।' इति विचार्य मया निवेद्यते यत् संस्कृतपत्रिकासु विद्वज्जनैः आधुनिकान् वैज्ञानिकान् विषयान् समाश्रित्य लेखनं कार्यम्। मन्ये—कार्यम् इदं सुकरं नास्ति। संस्कृतज्ञाः प्रायः वैज्ञानिका न भवन्ति, वैज्ञानिकाश्च संस्कृतज्ञाः। एतदर्थं प्रथमं वैज्ञानिकविषयेषु सामान्यलेखा लेखनीयाः, वैज्ञानिकानां च जीवनपरिचयः वैज्ञानिकसाहित्यस्येतिहासश्च संस्कृते प्रस्तोतव्यः, प्राचीनकाले ये वैज्ञानिकविषयाः (गणितं, ज्योतिषम्, आयुर्वेदो यन्त्रशास्त्रं च) भारतेऽभूवन्, तेषां नूतनदृष्ट्या समीक्षणं च कार्यम्। ततः आधुनिक-विषयेषु (भौतिकविज्ञाने, रसायनविज्ञाने, जीवविज्ञाने, वनस्पतिविज्ञाने, अन्तरिक्षविज्ञाने, गणिते, भू-विज्ञाने, विमानविज्ञाने, तेषां विविधासु शाखासु प्रशाखासु च अनूदिता मौलिकाश्च ग्रन्थाः विरचनीयाः।

इत्थं संस्कृते संस्कृतपत्रपत्रिकासु चावतीर्णं विज्ञानं लोकदृष्टिं संस्कृतं प्रत्याकर्षेत्। मन्ये-अन्ताराष्ट्रिये क्षेत्रे संस्कृतस्य प्रचारार्थं प्रसारार्थं च कृतमतिः विश्वभाषा 'विज्ञानजगत्' 'विज्ञानलोकः' वेतिनाम नवं स्तम्भ संयुज्य संस्कृते आधुनिकान् विज्ञानविषयान् प्रवर्तयेत्। जयतु संस्कृतम् संस्कृतिश्च।

विनीतः

**रूपनारायणपाण्डेयः**

संस्कृतप्रवक्ता–प्र० ना० रा० इ० का० रामनगरम्,

वाराणसी (उ० प्र०)

# अस्मिन् अङ्के

# सम्पादकीयम्

भारतदेशस्य अद्य प्रजातन्त्रराज्यपद्धतिदिवसः। एकचत्वारिंशत्तमः दिवसः अयम्। एतन्निमित्तेन सर्वत्र समारोहः महता उत्साहेन महोत्सवरूपेण च समायोज्यते। गणतन्त्रदिवसः, प्रजासत्ताकदिनम्, लोकतन्त्रमहः इत्यादिभिः नामधेयैः अपि सम्बोध्यते अयं दिवसः।

अत्र जनैः जनहिताय जनानामेव सत्ता निर्मिता वर्तते। भारतस्य एषा राज्यशासनपद्धतिः पृथ्वीतले सर्वत्र विश्रुता विद्यते। अयमेव विचारः एकेन कविना एकस्मिन् श्लोके ग्रथितः अस्ति—

जनैर्जनहितार्थाय जनानामेव निर्मितम्। लोकतन्त्रं भारतस्य वसुधायां विराजते।

लोकतन्त्रराज्यपद्धतिकार्यनिर्वहणार्थं प्रतिपञ्चवर्षमनुसृत्य अत्र भारते निर्वाचनं भवति। एतदर्थं निर्वाचनक्षेत्राणि निर्दिष्टानि भवन्ति। मतदानं गुप्तरीत्या चलति। मतदातॄणां कृते वयोमर्यादा निर्धारिता वर्तते। वयोमर्यादा अष्टदशवर्षीयतः अधिका आवश्यिका। निर्वाचनक्षेत्राणि अनुसृत्य मतदानं च अधिकृत्य प्रतिनिधयः निर्वाचिताः भवन्ति। एतेषां प्रतिनिधीनां तथा च राष्ट्रपतिद्वारा नियुक्तविशिष्टव्यक्तीनां संसद् भवति। अस्याः संसदः राज्यसभा लोकसभा चेति भागद्वये कार्यं चलति।

प्रथमतः लोकसभायां ततः च राज्यसभायां प्रस्तावानां पारणं भवति। प्रस्तावपारणविषये लोकप्रतिनिधीनामपि संघटनम् आवश्यकं विद्यते। यथा निर्वाचनसमये तथा प्रस्तावपारणसमये अपि संघटनम् आवश्यकम्। लोकानां संघटनविषये अपि एकेन लिखितं वर्तते।

योगक्षेमाय राष्ट्रस्य सभ्यतायाश्च संस्कृतेः। नैवान्यो विद्यते पन्था लोकसंघटनं विना॥

योगक्षेमः नाम चरितार्थः इत्यपि अर्थः शब्दकोशे उपलभ्यते। तथा च अलभ्यः लाभः नाम योगः, क्षेमः नाम लाभस्य पालनम् इत्यपि बोधः प्राप्यते। राष्ट्रस्य सभ्यतायाः संस्कृतेः च योगक्षेमः। एतदर्थं लोकसंघटनस्य आवश्यकता। तथा अत्र विविधानि लोकसंघटनानि अपि विलसन्ति। यथा च अत्र विशिष्टध्येयधोरणविचारादिभिः प्रेरिताः विशिष्टाः जनाः अपि विराजन्ते। एतादृशानां जनानामत्र खनिः एव। एते अपि लोके बहुमानमपि विदन्ति। एतान् उद्दिश्य केनचन लिखितं वर्तते—

प्राणान् त्यजति देशार्थं पीडितानां सहायकः। य आचरति कल्याणं लोके मानं स विन्दति॥

एतादृशाः जनाः सर्वत्र माननीयाः भवन्ति एव। एते राष्ट्रहितैषिणः राष्ट्रहितचिन्तकाः चैव। एतेषामपि एवमेव उपदेशः चलति। तथा अयं श्लोकः—

ऐक्यं बलं समाजस्य तदभावे स दुर्बलः। तस्मादैक्यं प्रशंसन्ति दृढं राष्ट्रहितैषिणः॥

अनेन विविधानां लोकसंघटनानामपि ऐक्यं संबोध्यते। राष्ट्रहितार्थं राष्ट्रहितैषिणः एवमेव इच्छन्ति। ऐक्यविषये बहुभिः प्रकारैः अपि उपदेशः चलति। तथा पुनरेकः श्लोकः—

अल्पानामपि वस्तूनां संहतिः कार्यसाधिका। तृणैर्गुणत्वमापन्नैर्बध्यन्ते मत्तदन्तिनः॥

अत्र राजकीय-सामाजिक-सांस्कृतिक-शैक्षणिक-धार्मिक-साम्प्रदायिक-भाषिकादिसंघटनानि सन्ति, एतानि च बहुसंख्याकानां वा अल्पसंख्याकानामपि वा, एतेषामपि राष्ट्रहितमनुसृत्य ऐक्यमेव आवश्यकम्। एतादृशेन ऐक्येन एव एकात्मता भवति।

संस्कृतभाषाविषये विविधानि संघटनानि विलसन्ति। एतेषामपि कार्यं राष्ट्रहितमनुसृत्य पर्यायेण विश्वहितमपि अनुसृत्य चलति। ऐक्यसंस्थापनार्थम् एकात्मतासंवर्धनार्थं चापि कार्यं भवति। विविधानां च समस्यानां निराकरणमपि साध्यते। सर्वमतसमन्वयात्मकसमभावसंवर्धनमपि। अनेन च सर्वधर्मसमभावसंवर्धनमेव भवति। एतत् कार्यं विविधधर्मीयाणां भारतदेशे अतीव महत्त्वपूर्णम् अत्यावश्यकमपि च। एतदर्थम् उपदेशः वेदेषु अपि वैपुल्येन समुपलभ्यते। तद् यथा—

सङ्गच्छध्वं संवदध्वं सं वो मनांसि जानताम्। देवा भागं यथा पूर्वे संजानाना उपासते॥
समानी व आकूतिः समाना हृदयानि वः। समानमस्तु वो मनः यथा वः सुसहासति॥

सह नाववतु, सह नौ भुनक्तु, सह वीर्यं करवावहै। तेजस्विनाऽवधीतमस्तु मा विद्विषावहै॥....इत्यादयः। एतादृशाः बहवः मन्त्राः वेदेषु सन्ति। तथा च वेदेषु एकेश्वर-अनेकेश्वरविषये अपि स्पष्टाः विचाराः वर्तन्ते। "एकं सद् विप्राः बहुधा वदन्ति।" इत्यत्र एकेश्वरः, विविधदेवदेवतानां प्रार्थनाम् अनुसृत्य अनेकेश्वरवादः अपि अत्र संसूच्यते। सगुणनिर्गुणपूजापाठादयः अपि सन्ति। कर्म-ज्ञान-भक्ति इत्यादयः योगाः अपि कथिताः विद्यन्ते। अद्वैत-द्वैत-द्वैताद्वैतादयः वादाः अपि अत्र विलसन्ति। साम्यवादः अपि अत्र सूचितः भवति। शून्यवादः अपि विराजते। आस्तिक-नास्तिकवादानामपि मण्डनमत्र। अतः एव सर्वधर्ममतसमन्वयात्मकसमभावसंवर्धनार्थं संस्कृतग्रन्थानामेव आधारः निर्णायकः भवति नात्र काचित् शङ्का।

गते नोव्हेम्बरमासस्य अन्तिमे सप्ताहे भारतदेशे पञ्चवार्षिकं लोकसभायाः निर्वाचनम् अभवत्। निर्वाचितलोकसभासदस्यैः संस्कृतभाषायामेव शपथग्रहणं करणीयमिति प्रयत्नाः विश्वसंस्कृतप्रतिष्ठानं, सुरभारतीसोमैयासंस्कृतकेन्द्रं, मराठामन्दिरम् इत्यादिभिः संस्कृतसंस्थाभिः विहिताः। ततः बहुभिः लोकसभासदस्यैः संस्कृतभाषायामेव शपथग्रहणं कृतम्। एतेषां सर्वेषां सदस्यानां, हार्दिकम् अभिनन्दनं विश्वभाषा करोति।

संस्कृतभाषाविषये बहुभिः विद्वद्भिः गौरपूर्णाः विचाराः मण्डिताः सन्ति। तद् यथा—

भाषासु मुख्या मधुरा दिव्या गीर्वाणभारती। तस्यां हि काव्यं मधुरं तस्मादपि सुभाषितम्॥

तथा च—

केयूरा न विभूषयन्ति पुरुषं हारा न चन्द्रोज्ज्वला, न स्नानं न विलेपनं न कुसुमं नालङ्कृता मूर्धजाः।
वाण्येका समलङ्करोति पुरुषं या संस्कृता धार्यते, क्षीयन्ते खलु भूषणानि सततं वाग्भूषणं भूषणम्।

केयूराः, हाराः अन्ये च विविधाः अलङ्काराः सन्ति। एते मानवान् विभूषयन्ति अपि। परन्तु एतैः अलङ्कारैः विभूषितानां भाषा सभ्या, शुद्धा, सुसंस्कृता च न स्यात् तदा अलङ्कारविभूषिताः अपि मानवाः प्रतिष्ठां न प्राप्नुवन्ति। एतादृशानां मानवानां व्यक्तिमत्त्वमपि प्रभावपूर्णं न भवति। प्रायः एतेषां गणना कुक्कुरेषु, गर्दभेषु काकेषु वा क्रियते। स्नानेन स्वच्छता आगच्छति। विलेपनेन च कुसुमैः च सुगन्धः प्रसरति। परन्तु असभ्यभाषया वा अशुद्धया भाषया वा असंस्कृतभाषया वा सः सुगन्धः दुर्गन्धवदेव भवति, सा स्वच्छता अपि असभ्या एव भासते। अतः एव सभ्या, शुद्धा, सुसंस्कृता भाषा एव मानवान् भूषयति, प्रतिष्ठापदं नयति। एतस्मिन् श्लोके 'संस्कृता' इति यः शब्दः अस्ति तस्य अर्थः एवमपि भवितुमर्हति यत् सुसंस्कारिता, सुसंस्कारक्षमा, सुसंस्कारसंपन्ना च। एतादृशी भाषा एव यथार्थतया स्थायिरूपेण भूषणास्पदे स्थाने तिष्ठति। अतः वाग्भूषणं भूषणमिति कथनं यथार्थं भवति इति शम्।

—गुलामदस्तगीरः विराजदारः

# तिरुपतिस्थ-राष्ट्रीय-संस्कृत-संस्थानस्य विश्वविद्यालयत्वेनोद्घोषणावसरे भारतस्य महामहिम-राष्ट्रपतिभिः प्रदत्तम् भाषणम्[1]



संस्थानस्यास्य विश्वविद्यालयीयरूपग्रहणं समुद्घोषयितुम् अत्र ममोपस्थितिः माम् खलु प्रहर्षयति। अद्यावधि केन्द्रियविद्यापीठत्वेन विश्रुतमिदं संस्थानं १९६१ खीष्टाब्दे अस्मत्तः पूर्ववर्तिना प्रभविष्णुना श्रीमता डॉ० एस० राधाकृष्णन्महोदयेन प्रतिष्ठापितमासीत्। दिष्ट्यैव ज्ञानपीठस्यास्य विश्वविद्यालयरूपेण उद्घोषणाय मया विशिष्टोऽवसरो लब्धः। अस्मिन् समारोहे मां निमन्त्रयितुम् अहं केन्द्रियमानवसंसाधनविकासविभागस्य मन्त्रिणं श्रीशिवशङ्करमहोदयं प्रति कुलपति-श्रीरामानुजताताचार्यं प्रति च धन्यवादप्रकटनं करोमि। प्रकल्पस्यास्य प्रस्थापने कारणीभूतस्य संप्रति यशःशेषस्य श्रीमतः अनन्तशयन-अय्यङ्गारमहाभागस्य स्मृतिः सविशेषं जागर्ति मम मनसि।

सम्पत्स्यमानस्यास्य विश्वविद्यालयस्य प्रकल्पने गाढप्रवृत्तये मानवसंसाधनविकासमन्त्रालयः विशेषतः श्रीमान् पी० वी० नरसिंहरावमहोदयः तथाच श्रीशिवशङ्करमहोदयः नूनमेव मया धन्यवादैः सभाजनीयाः। विश्वविद्यालयीयकर्मचारिवर्गं, विद्यार्थिवर्गं तिरुपतिलोकमण्डलं प्रति च अहं धन्यवादज्ञापनं करोमि। यतस्तैः केन्द्रमिदं न केवलं संस्थापितम् अपितु विश्रुतः श्रीरामानुजताताचार्यः केन्द्रस्यास्य प्रथमकुलपतिरूपेण समुपलब्धः।

देववाणीतिविख्यातायाः संस्कृतभाषायाः कृते आयोज्यमाने कस्मिंश्चिदपि कार्यक्रमे भागग्रहणं खलु मङ्गलास्पदमेव। तिरुपतिसदृशे मंगलमये स्थाने तथाकरणं तु द्विगुणित-सौभाग्याधायकम्। सम्प्रति तिरुपतिनामकं पवित्रं तीर्थस्थलं भारतदेशस्य सांस्कृतिकाध्यात्मिकचेतनायाः पताकीभूतो भूभागः। अकृत्वा वर्गादिभेदविचारं भारतीया अत्र श्रीवेङ्कटेशप्रभोः प्रसादकामनया सुदूरतोऽपि समागच्छन्ति। अतएव भावनात्मिकाया एकात्मकतायाः साधने तिरुपतितीर्थस्य विशिष्टमेव स्थानं वर्तते। सम्प्रति विश्वविद्यालयस्यास्य प्रतिष्ठापनेन भूयोऽपि संस्कृतद्वारा अस्मद्देशस्य संस्कृतिसाहित्यसंवर्धने तीर्थस्थानमिदम् अग्रस्थानं प्राप्स्यतीति।

"संस्कृतं नाम दैवी वाक्" इति दण्डिन उक्तिः। तस्य वाक्यस्य नायमभिप्रायः यद् एषा अतिमानवानां भाषा। तस्य समीहितं यत् संस्कृतं सामान्यान् जनान् दैवीगुणसम्पन्नान् कर्तुं शक्नोति। ज्ञानस्रोतःस्वरूपं भारतं प्रतीक्ष्यमाणाय जगते ज्ञानं दातुं वर्तते खलु संस्कृतस्य उत्तरदायित्वम्।

परम्परया संस्कृतभाषायां वर्तते द्विधा चिन्तनधारा। तत्रैका सर्वथा लौकिकी कलात्मिका काव्यात्मिका। अपरा दार्शनिकी आध्यात्मिकी च। यद्यपि प्रणालीद्वयमपि प्रायः संश्लिष्टमेव तिष्ठति

१. भाषणस्यास्य विश्वभाषायां प्रकाशनं तावत् महामहिम-राष्ट्रपति-महोदयानां संस्कृतविषयकम् आशयं पाठकानां पुरस्तात् स्थापयितुमेव—सं०

किन्तु स्वकीयया बहुविधया मङ्गलप्रवृत्या अपेक्षां पूरयति लोकस्य, आबालवृद्धस्य, आपामरपण्डितस्य आस्तिकस्य नास्तिकस्य च । अतएव संस्कृतवाङ्मयेन समाकर्षितं चित्तं वैज्ञानिकलौकिकाध्यात्मिकक्षेत्रेषु कार्यरतानां तत्त्वजिज्ञासूनाम् विविधरूपस्यापि संस्कृत-वाङ्मयस्य खलु चरित्रनिर्माणं जीवनमूल्यस्थापनं प्रत्येकनागरिकस्य व्यावहारिकविधिनिर्धारणं च प्रमुखं प्रयोजनम् ।

यथार्थत एव संस्कृतम् अस्माकं सभ्यतायाः संस्कृतेश्च प्रतीकमितिमन्यते । यतः संस्कृतं न केवलं विश्वस्य प्राचीनतमा भाषा अपितु अद्यापि तत् चिर-प्रौढम् ओजःपूर्णं स्वतःस्फूर्तियुक्तं चेति । संस्कृताध्यय-नेन अद्यापि सर्जनात्मकं काव्यं क्रियते । सम्पूर्णे देशे संस्कृतस्य काव्यानि आख्यायिकाः निबन्धग्रंथाश्च लिपिबद्धाः क्रियन्ते ।

प्राचीनैः ऋषिभिः मानवजीवनविधायकानि प्राकृतिकरहस्यानि साक्षात्कृतानि आसन् । सम्प्रति वयं बहुविधैः मानवीयैः मानवभिन्नैश्च कारकैः क्रियमाणस्य प्रकृतिविदूषणस्य विषये चिन्ताकुलाः स्मः । वैदिक-कालिकः मनुष्यः प्रकृतिपर्यावरणस्य महत्त्वं सम्यक्-तया जानाति स्म । तेषां कृते उपरितः छत्रायमाणस्य गगनस्य, अधस्तात् प्रथितायाः पृथिव्याश्च समानं महत्त्वम् आसीत् । द्यावापृथिव्यौ खलु पर्यावरणस्य प्रतीकौ स्तः । आस्माकीने युगे वर्तमानायाः पर्यावरण-सम्बन्धिन्याः समस्यायाः अवगत्यर्थं संस्कृतस्य अध्ययनं तज्जन्यं साक्षात्करणं च अतिमहत्त्वपूर्णं भविष्यति । इदं खलु भारते अनन्यस्वरूपाणाम् अस्माकं राष्ट्रियां सम्पदं स्मारयति ।

ऋषयः पर्वतं, सागरं, नदीं प्रति च श्रद्धान्विता आसन् । प्राचीना परम्परा उत्तरभागे प्रवहमानां गङ्गां दक्षिणे च प्रवर्तमानां कावेरीं च समानरूपेण स्तौति—

गङ्गे ! च यमुने ! चैव गोदावरि ! सरस्वति ! ।
नर्मदे ! सिन्धु ! कावेरी ! जलेऽस्मिन् सन्निधिं कुरु ॥इति॥

समस्तेऽपि पुण्यकृत्ये पुण्यभूमेरस्या विभिन्नप्रदेशेषु प्रवहन्तीनां स्रोतस्विनीनां स्तवनं विना कदापि पवित्री-करणं न सम्पद्यते । संस्कृतश्लोकेषु तत्कालमेव स्मर्यन्ते देशस्य विभिन्नभागेषु वर्तमानानि नगराणि । यथा—

अयोध्या, मथुरा, माया, काशी काञ्ची, अवन्तिका ।
पुरी द्वारावती चैव सप्तैता मोक्षदायिकाः ॥इति॥

देशस्य समस्तानां नदीनां पूर्वपश्चिमोत्तरदक्षिणदिक्षु वर्तमानानां तीर्थानां च उदकेन राजमुकुटस्य प्रोक्षणं विना नृपस्य अभिषेकः पूर्णतां न प्राप्नोति । आदि-शङ्कराचार्याः केरलतः स्वीयां सांस्कृतिकजागरण-यात्राम् आरब्धवन्तः । काश्यां तैः पूर्णता अधिगता । सुदूरेऽपि वर्तमानान् प्रदेशान् स महाभागः धन्यी-कृतवान् मठस्थापनद्वारा ।

संख्यातीतेषु संवत्सरेषु संस्कृतिसूत्रेणैव पुरातनोऽयं देशः ऐक्यबद्धः कृतः । संस्कृतं खलु समर्थं माध्यमं येन एकात्मताभावना व्यज्यते । इयं वस्तुतः देशस्य विभिन्नप्रदेशेषु निवसतां विविधभाषीयाणां जनानां परस्परं संयोजिका भाषा ।

अस्माकं पूर्वजाः न केवलम् अस्मद्देशीयं कल्याणम् अकामयन्त अपितु जगतः विश्वेषां जनानां हितचिन्तनं कृतवन्तः । 'सर्वे भवन्तु सुखिनः' इति अस्माकं सनातनः संकल्पः ।

भौगोलिकं देशविभाजनम् अविचार्यैव अस्माभिः सर्वेषां मानवानां कल्याणं, मुक्तिः भुक्तिश्च प्रार्थ्यन्ते ।

जीवनस्य समस्तेऽपि क्षेत्रे वयम् ऐकात्म्यं पश्यामः । इदं तु आवश्यकं यत् शिक्षायाः पाठ्य-विषये अस्या एकात्मतायाः प्राचीनायाः वैचारिक-सरण्याश्च समावेशः स्यात् ।

अद्य संस्कृतस्य विविधवैभवपूर्णं साहित्यं मम ध्यानम् आवर्जयति । रामायणं महाभारतं च महा-काव्यद्वयं वर्तते येन अनेकशतसंवत्सरं यावत् भारतीया संस्कृतिः पालिता पोषिता च ।

अमरकविना कालिदासेन विश्वसाहित्ये भारतस्य-कृते महत्त्वपूर्णं स्थानं निर्मितम् । को नाम बाण-भट्टमतिशयितुं समर्थः । यस्य कादम्बरीनामकं काव्यम् अद्यापि अप्रतिममेव वरीवर्ति ।

अस्माकं महत्सौभाग्यमिदं यत् स्वातन्त्र्योत्तरकाले पं० जवाहरलालनेहरूमहोदयानां नेतृत्वे भारतीय-सर्वकारेण संस्कृतस्य संवर्धनपोषणप्रचारकार्यस्य उत्तरदायित्वम् अङ्गीकृतम् ।

भारतीयसर्वकारेण समीचीनं कृतं यत् तेन संस्कृतविषयकोच्चस्तरीयस्य अध्ययनस्य कृते उत्तर-भारते देहल्यां श्रीलालबहादुरकेन्द्रियसंस्कृतविद्या-पीठस्य तिरुपतिस्थले विश्वविद्यालयस्यास्य स्थापना कृता । यद्यपि सम्प्रति देहली देशस्यास्य राजधानी अस्ति तथापि इयं नगरी महाभारतकाले इन्द्रप्रस्थ-नाम्ना विश्रुता आसीत् । यत्र किल भारतस्य प्रथमः सम्राट् युधिष्ठिरः अभिषिक्तो बभूव । तिरुपतिस्थानं तु श्रीवेङ्कटेशप्रभोः पवित्रपीठरूपेण जागर्ति । अत्र भोजकविरपि अतिपेशलतया अभिहितवान्—

"निद्रामुद्रां निखिलजगतीरक्षणे जागरूकाम्" ।

संस्थानस्यास्य संस्थापनात् प्रागपि 'वेङ्कटेश्वर-ओरियन्टल-इन्स्टीट्यूट' इति नामके स्थले सुरक्षितेन महता हस्तलेखसङ्ग्रहेण तिरुपतिस्थानं पुरातनविद्या-केन्द्ररूपेण विश्रुतम् आसीत् । टी० टी० (तिरुमल-तिरुपति) देवस्थानम् इत्यस्य उत्तरवर्तिनः प्रबन्ध-तन्त्राः संस्कृतशिक्षाविषये वैदिकज्ञानसंरक्षणविषये च विशेषेण यत्नशीलाः सन्ति । स्थानीयानाम् अधिकारिणां समुद्योगः भारतीयसर्वकारेण सम्पोषितः किल संस्कृताध्ययनसंस्थानस्यास्य प्रतिष्ठापनेन ।

अयं खलु मे विश्वासः यद् देशस्यास्य प्रतीकेन कालेन संस्कृताध्ययनस्यावसरः प्राप्तः यतः अस्याः भाषायाः अध्ययनम् एकतो देशस्यास्य ऐक्यं दृढी-करोति अपरश्च इदं क्षेत्रीयभाषाणां पोषणमपि करोति । अत्र नावकाशः सन्देहलेशस्य ।

अस्मिन् प्रसङ्गे मया यथाकालं भूयो भूयः समुच्चार्यमाणः परामर्शः पुनरुच्यते । सन्धयः समासाश्च संस्कृताध्ययनविषये दुरुहतां समुत्पादयन्ति । समस्तासु अर्वाचीनभाषासु प्रत्येकः शब्दः पृथक्तया-लिख्यते । अनेन अध्ययनं सुकरं भवति । प्राचीन-तमिळभाषायां यद्यपि अनेके शब्दाः समस्तरूपेण लिख्यमाना आसन् किन्तु न तथा यथा संस्कृते । आधुनिकतमिळभाषीयेन गद्येन प्रत्येकार्वाचीनभाषावद् विशिष्टतया लेखनपद्धतिः अङ्गीकृता । इत्थञ्च भाषा-शिक्षणं सुकरतरं जातम् । यदि अस्माकं सम्पूर्णं वाङ्मयं अनेन विधिना पुनर्लिखितं स्यात् तर्हि संस्कृताध्ययनम् अत्यन्तं सुकरं भविष्यति । संस्कृत-भाषाविशारदैः परामर्शस्यास्य परीक्षणं कर्तव्यम् ।

अत्र पारम्परिकान् वैदिकान् शास्त्रविशारदान् च लोचनगोचरीकृत्य अद्य अहम् आनन्दसन्दोहम् अनुभवामि । तेषां समुपस्थितिः खलु सूचयति एतत्संस्थानद्वारा सम्पाद्यमानायाः भाविन्याः संस्कृत-शिक्षाया माङ्गल्यम् । यावत् जागर्ति संस्कृतभाषा तावत् महत्संस्कृतिसम्पन्नरूपेण मङ्गलमयरूपेण च सम्पाद्यते अस्माकं महतः राष्ट्रस्य संस्थितिः !

सम्प्रति संस्कृतभाषीयां सार्वभौमप्रार्थनां समुच्चार्य भाषणस्यास्य उपसंहारं चिकीर्षामि—

"लोकाः समस्ताः सुखिनो भवन्तु"

भवतो प्रति धन्यवादाः ।

---

## अभ्यर्थना—

**मान्याः महोदयाः, तत्रभवद्भिः पत्रिकेयं सततम् अवलोक्यते । वयं पत्रिकाया नवं परिष्कारं कामयामहे । कृपया सन्दर्भेऽस्मिन् स्वकीयानि मतानि प्रदायानुगृह्णन्तु—सम्पादकः**

# जन-विश्वास का नया युग

उत्तर प्रदेश में इस समय श्री मुलायम सिंह यादव के नेतृत्व में गठित सरकार जन-विश्वास के नये युग का प्रतिनिधित्व करती है। लोकनायक जयप्रकाश नारायण, राम मनोहर लोहिया, चरणसिंह तथा कर्पूरी ठाकुर के आदर्शों और स्वप्नों से प्रेरणा लेकर सरकार प्रत्येक व्यक्ति का कल्याण समान आधार पर करने को प्रतिबद्ध है। अभी तक लिये गये निर्णय और किये गये वायदे इस प्रतिबद्धता के प्रतिबिम्ब हैं और सरकार की विचारधारा और कार्यों में परिवर्तन लाकर गरीब, उपेक्षित तथा दबे-थके लोगों के लिए नये युग का द्वार खुलने की आशा बँधाते हैं।

- सरकार ने गरीबी, बेरोजगारी, मूल्य वृद्धि और भ्रष्टाचार के विरुद्ध जेहाद छेड़ा है ताकि जनता को एक स्वच्छ, कुशल और संवेदनशील प्रशासन दिया जा सके और सभी को सामाजिक-आर्थिक न्याय सुनिश्चित किया जा सके।
- जिला अधिकारियों को निर्देश कि वे जनता की शिकायतों की सुनवाई तत्परता से करें।
- किसानों और कमजोर वर्गों के लोगों को दस हजार तक के कर्जों में राहत देने का निर्णय।
- ग्रामीण क्षेत्रों के लोगों को सीधा लाभ देने वाले कार्यक्रमों के लिए राज्य के बजट की पचास प्रतिशत धनराशि आवंटित।
- प्रदेश के २७ लाख गन्ना किसानों के लाभ के लिए गन्ना के मूल्य में वृद्धि जिसके फलस्वरूप गन्ना काश्तकारों को २३२ करोड़ रुपये का अतिरिक्त नकद भुगतान।
- प्राथमिकता के आधार पर ३३७६ नलकूपों की मरम्मत का कीर्तिमान।
- ग्रामीण क्षेत्रों में १४ घण्टे लगातार विद्युत् आपूर्ति का निर्णय।
- वृद्धावस्था और विधवा पेंशन की राशि अब १०० रुपये प्रतिमास। वृद्धावस्था पेंशन ६० वर्ष से अधिक आयु के लोगों के लिए लाभकारी।
- अधिवर्षता की आयु के नियमों का कड़ाई से अनुपालन सुनिश्चित। रोजगार के नये अवसर।
- स्वतन्त्रता संग्राम के ख्यातिप्राप्त वयोवृद्ध कवियों, चित्रकारों, कलाकारों तथा पत्रकारों को मान्यता।
- राजकीय चिकित्सालयों में जनरल वार्ड के सभी रोगियों की निःशुल्क चिकित्सा तथा भोजन। ग्रामीण क्षेत्रों में पंजीयन एवं प्रवेश शुल्क समाप्त तथा शहरी क्षेत्रों में घटी दर पर।
- लोकायुक्त के जाँच-क्षेत्र में मुख्य मन्त्री सहित शीर्ष पदों को लाने का संकल्प।

## सरकार के वायदे

- वंचित गाँवों को पेय जल की सुविधा।
- ग्रामों का विद्युतीकरण।
- गाँवों को सड़कों से जोड़ कर उत्तम संचार सुविधा।
- ग्रामीण क्षेत्रों में शौचालयों का निर्माण।
- शिशु एवं महिला कल्याण के लिए पुष्टाहार कार्यक्रम।
- अल्पसंख्यकों तथा कमजोर वर्गों के लिए कल्याणकारी योजनायें।
- जनता की निकटता के साथ कानून तथा व्यवस्थातन्त्र को नया रूप।

## सूचना एवं जनसम्पर्क विभाग, उत्तर प्रदेश

# आजादचन्द्रशेखरः

## (एकपात्राभिनयः)

चौद्धरि–उपेन्द्ररावः
काशीहिन्दूविश्वविद्यालयः, वाराणसी

(यवनिका शनैः शनैः निस्सरति । रंगस्थले बन्धूकधारी "आजादचन्द्रशेखरः" वक्षस्थले गोलिकाशृंखलां, मुखे उपरिकुतिलितश्मश्रु-ललाटे रक्तवर्णतिलकं च धृत्वा तेजःपुञ्जाभ्यां नेत्राभ्याम् अग्रे पश्यन् तिष्ठति । तस्य वेशधारणम् । धवलवर्ण-धोती-धारणं भवेत् । युतकधारणं न भवेत् । यज्ञोपवीतं धरेत् । पादरक्षौ धरेत् । केशाश्च किञ्चित् ह्रस्वाः भवेयुः । मन्दं-मन्दम् अग्रे चलन् । वाम-दक्षिणहस्ताभ्यां क्रमशः अभिनयं अग्रे-पार्श्वे च प्रदर्शयन् सगाम्भीर्यं सोद्वेगम् उच्चैस्वरेण इत्थं भणति)

आजादः–निरन्तरधर्मतत्परे ! सहजप्रतापशोभिते ! गंभीरधैर्य-शौर्य-पराक्रमसहिते ! हे भारतजननि ! अद्य''''अद्य''''का वा तव गतिः ? ! कीदृशी तव परिस्थितिः ? ! (स्तगित्वा सालोचनम् शनैः नीचैः स्वरेण)—सत्यं''''अस्मिन्नेव समये मुनीश्वर, ऋषीश्वर, सनातनधर्मो दृढतरो भवेत् । पुनः भारतमाता शक्तिस्वरूपिणी स्यात् । सर्वजाति-धर्म-जीवनशक्तीनामैक्यं सम्पादनीयम् । प्राचीनकालात् दयानन्द-विवेकानन्द-प्रभृतयो महापुरुषाः कीदृशं चैतन्यं भारते विस्तारितवन्तः, तादृशस्य चैतन्यस्य पुनरुज्जीवनं कार्यम् ।

(उच्चैः)—

हे भारतयुवकाः !····

हे शक्तिसम्पन्नाः !···

हे धर्मतप्ताः !···

भारतस्य अद्यतनी परिस्थितिः भवत्सु लेशमात्रमपि क्लेशं नोत्पादयति वा ? !

प्रलयकालरुद्राः भवन्तु ।

विस्फुलिंगाः भवन्तु ।

जाज्वल्यमानाः भवन्तु ।

अस्मद् हृदयाद्वहिर्गतासु ज्वालासु पाश्चात्याः शलभाः इव दग्धाः भवेयुः । (स्तगति—मन्दं मन्दं मुखे भावपरिवर्तनं कुर्वन्) ऊ''''काकोरीनेरविषये रक्षकभटाः मामन्विषन्ति वा ? (उच्चैर्हसन्) ह'''' ह''''ह''''चन्द्रशेखरः किं एकत्र भवति ग्रहीतुम् ? ह''''सिंहः एकत्र भवति वा ? ह—वृथा प्रयासः—ह-ह वृथा प्रयासः ।

शान्तिमार्गे नास्ति मे विश्वासः । विप्लवमार्गे एव संतृप्तिः । पशुतुल्यानां पाश्चात्यानां विषये शान्तिर्वा ? विध्वंसः अपेक्ष्यते । प्रतिशोधः—रक्त-प्रवाहः अपेक्ष्यते । इतः परं भीतिर्नास्ति—सर्वनाशः—हिंसाकाण्ड एव कर्तव्यः । प्रलयकालरुद्रः स्मर्तव्यः ।

विप्लवः वर्धताम्

विप्लवः वर्धताम्

आ''''''''किम् ?''''''''भारतदेशप्रभुत्व—देशपरिस्थितीनां परिशीलनार्थं विदेशतः सप्तजनाः आगच्छन्ति वा ? तेषां कृते भारतीयैः साक्ष्याधारपुरस्सरं विषय-निरूपणं कार्यं वा ? असम्भवः—असम्भवः । सर्वे भारतीयाः एकाभिप्राये सन्ति । सर्वेऽपि **सैमन् कमिटीं** तिरस्कुर्वन्तः दृश्यन्ते । अखिलभारत-सैमन्-निराकरण-समितिः राराजते । मदनमोहनमालवीय-सदृशाः महापुरुषाः सर्वजनादरणीया अध्यक्षास्सन्ति । कोटिकोटिपरिमिताः भरतयुवकाः निराकरणे उत्सुकाः सन्ति । पंजाबराज्ये लालालाजपतिराय—पंजाब ज्वालामुखी-विस्फुलिंग-भगतसिंहश्चोद्युक्तौ । लाहोरीय-भगवतीचरण-सुखदेव इत्यादयः सर्वेप्युद्युक्ताः ।

सैमन गोबैक्-सैमन गोबैक्-आरक्षकभटाः ताडयितुमुद्युक्ताः। (इतस्ततः पश्यन्) आ···लालाजी भवान् ?! भवान् ?!

(उच्चैः) लालाजी! रक्षकभटा एव भवत्कृते भक्षकभटास्संजाताः वा ? (शनैः) लालाजी! (रोदनमभिनयन्) रक्षकभटाः एव भवत्कृते भक्षकभटास्संजाताः वा ?

(शनैःभावं-स्वरञ्च परिवर्तयन्-सोद्वेगं-सगाम्भीर्यम्) लालाजी! केन धैर्येण भवन्तं ताडितवन्तः ? केन मात्सर्येण भवन्तं मारितवन्तः ? (उच्चैः सक्षोभम्) अरे! स्यांडर्स्! तव नाशः मम हस्तेनैवास्ति। तव प्राणभंजकः प्रभंजनः अहमेव। तव शरीरं शतशः खण्डयित्वा क्षितिलले पातयिष्यामि। तव प्राणान् एकेनैवाघातेन परलोकं प्रापयिष्यामि। प्रतिशोधं स्वीकरिष्यामि—प्रतिशोधं स्वीकरिष्यामि।

भगतसिंह! भवान्—सुखदेवश्च दिल्लीशासनसभायां विस्फोटान् पातयन्तु। किं वदसि ? तेषामेव अधीनो भवसि वा ? भगत! यावत्कालं जीवसि तावत् कालं सिंह इव जीव। मम मरणानन्तरमेव मदुपरि रक्षकभटहस्तस्पर्शः भवति। न सम्भवति जीवितकाले।

(हस्तेन कुडयं प्रदर्शयन्) आः किमेतत् ? राजगुरो! अत्र पश्य! "यः आजादनामानं युवकं रक्षकभटनिलये अर्पयति तस्य त्रिंशत्सहस्राणि" श्रृणुत! ह····ह····ह····यः आजादनामानं माम् रक्षकभटनिलये अर्पयति तस्य पञ्चाशत्सहस्राणि स्वयमेव दास्यामि। ह····ह····ह····(उच्चैर्हसन्) "आजाद एव वर्ते। आजाद एव भविष्यामि।"

सुखदेव! राज! किं वदतः ? "पाश्चात्यानां दासाः आंग्लेयशुनकाः भारतरक्षकभटा माम् अन्विषन्ति" इति वदतः वा ? तेषां प्रयत्नः सुदृढः जातः इति वदतः वा भवतु राज! भवतु, मम चिन्ता मयि नास्ति।

भगत-सोदरस्य मरणदण्डः विहितः। तदेवालोचयामि—नेहरू-गांधी-सकाशगमनेऽपि लाभो नास्ति। सोदर! राज! तस्य कापि योजना आवश्यिका। (पद्भ्यां द्विचतुष्पदानि गच्छति—गोलिका-प्रहारशब्दः भवेत्) हा····किमेतद्वैचित्र्यम् ? सोदर राज! गोलिका ऊरुमध्ये गता। आ····अरे नाट्बावर्! (हस्तेन प्रदर्शयन्) स्थीयताम्! कियद्धैर्यं रे! च्छः! शुनक! पलायितवान् वा ? आ····रक्षकभटाः मण्डलाकारेण इत एवायान्ति। मम स्थानं कथं विदितमेतैः ? अरे वीरभद्र! षण्डोऽपि त्वत्तुल्यो न भवति खलु रे! मम स्थानमेतेभ्यो निवेद्य किं साधितं रे त्वया ?

थूः····धनलोलुप! देशद्रोही! (परिभ्रम्य) राज! त्वं गच्छ! मम तु, विजयः वीरस्वर्गो वा भविष्यति।—

रे रे रक्षकभटाः! अहमपि भवतां स्वातन्त्र्यायैव खलु रे प्रयतामि। अहमपि अस्मद्भारतमातुः दास्य-श्रृंखलाविमोचनार्थमेव खलु रे प्रयतामि। (पुनर्गोलिकाशब्दः) आ····मूर्खाः! मम मरणेन उद्यमस्य समाप्तिर्भवति वा ? असम्भवः। इदं खलु भारतं वीरयुवककेन्द्रम्! आ····मम रक्तस्य कणं कणं भवद्हृदयेषु घनान्धकारं जनयिष्यति। मम वचने शब्दश्शब्दः आंग्लसर्वकारपतनकारको भविष्यति।

मम गर्जने ध्वनिर्ध्वनिः भारतस्य स्फूर्तिदायिका भविष्यति। आ····राक्षसाः! एकमेव मां हन्तुम् एतावन्तो वा ? भीरवः!

सर्वानपि युष्मान् भस्मीपटलं करिष्यामि। (बन्धूकमुन्नमय्य सर्वेषामुपरि गच्छति—पुनर्गोलिका-वक्षस्थले प्रविशति—तच्चब्दो भवेत्) आ····भारत-जननि! हे शक्तिस्वरूपिणि! हे····जगज्जननि! आ···· हे भगवन्! (मन्दं आत्मनि) न विस्मृतं—न विस्मृतम्। मम मरणानन्तरमेव तेषां स्पर्शः मदुपरि भवितव्यः। (स्वयम् आत्मनः शिरःप्रदेशे गोलिकया हन्ति) आ····वन्देमातरम्।

वन्देमातरम्।

वन्देमातरम्। (भूमौ मृतवत्पतति)

॥ यवनिकापातः ॥

# हास्यविलासः

## भारते महानिर्वाचनकालः

डॉ० प्रशस्यमित्रः शास्त्री
( रायबरेली )

भारतदेशे पुनरायातः, एष महानिर्वाचनकालः।
नगरे नगरे ग्रामे ग्रामे सम्प्रदायवादस्य पूजनम्,
अशिक्षितानां मतप्राप्त्यर्थम् पदे पदे मिथ्याभिभाषणम्,
यदि द्रष्टुमिच्छन्ति भवन्तः दुष्टधूर्त्तपुरुषाऽभिनन्दनम्।
जातिवाद-भ्रातृव्यवादयोः चतुष्पथेषु नग्ननर्त्तनम्,
मिथ्याऽऽश्वासनमिथ्यावचसोः प्रत्याशिनाम् अतीवस्पर्धनम्,
पश्यत साधुजनानां वेशे राजनीतिमाध्यमेन देशे,
जनतां वञ्चयितुं समागतः वञ्चकदस्युशठानां जालः।
एष महानिर्वाचनकालः॥

मूषकमार्जारयोः साम्प्रतम् मतप्राप्त्यर्थं ग्रन्थिबन्धनम्,
जनसेवाव्याजेन नायकाः जनतायाः कुर्वन्ति शोषणम्,
निशि पिबन्ति मद्यम् अथ दिवसे मद्यनिषेधसभासु भाषणम्,
यद्यपि तस्करवृत्तिनिन्दनम् किन्तु तस्करैः समं भोजनम्।
व्ययः कोटिरूप्याणां क्रियते कालधनं तत् कुत आयाति ?
निर्वाचने निर्धनः सज्जनः प्रत्याशी भवितुं न हि क्षमः,
धनिकानाम् अत एव केवलम् प्रवर्त्तते निर्वाचन-युद्धम्,
लोकतन्त्रमस्माकं दष्टुम् फूत्कुरुते भयङ्करो व्यालः।
एष महानिर्वाचनकालः॥

मिथ्याप्रत्याशिनां समूहः मतविभाजनार्थं समुद्यतः,
धनलाभाय क्वचित् प्रत्याशी निर्वाचनसमरे समुत्थितः,
कश्चित् निर्वाचनं स्थगयितुं निर्बलप्रत्याशिनं जघान,
कश्चित् साहसिकैः समन्वितः प्रबलं प्रत्याशिनं जहार।
कश्चिद् आग्नेयास्त्रसंवृतः मतदानस्य केन्द्रम् अधिकुरुते,
प्रत्याशिनां चरित्रं हन्तुम् मिथ्यानिम्नप्रचारांस्तनुते,
उत्कोचः उत्फुल्लति सततम् भ्रष्टाचारो विचरति निरतम्,
दृष्ट्वा सकलं छद्मपुराणम् नीचैर्भवति सुधीनां भालः।
एष महानिर्वाचनकालः॥





बालजगत्

## गुटक् गुटक् शकटः

### बालकथे

जगन्नाथः

प्राचीनकाले एकः शकटः आसीत् ।
तस्याग्रभागे द्वौ वृषभौ बद्धौ ।
वृषभौ शकटं नयतः स्म ।
शकटः 'गुटक् गुटक्' इति शब्दं करोति स्म ।

वृषभौ अपृच्छताम् "शकट, शकट ! किमर्थं गुटक् गुटक् इति शब्दं करोषि ?"

"अहं न जाने; बुद्धिमन्तं पृच्छामि" ततः एकः शृगालः दृष्टः । सः शकटं अपृच्छत् "शकट, शकट ! किमर्थं गुटक् गुटक् इति शब्दं करोषि ?"

"नाहं जाने; बुद्धिमन्तं पृच्छामि" ।

ततः स एकः शशः दृष्टः । स शकटम् अपृच्छत् "शकट ! शकट ! किमर्थं गुटक् गुटक् इति शब्दं करोषि ?"

"नाहं जाने; बुद्धिमन्तं पृच्छामि ।"

मध्येमार्गं बद्धिमान् दृष्टः ।

शकटः तम् अपृच्छत्—

"बुद्धिमन्, बुद्धिमन्, अहं किमथं गुटक् गुटक् इति शब्दं करोमि ?

"त्वं व्याघ्रं कवलीकरोषि; भल्लूकं भक्षयसि; गजं 'गबक्' इति स्वाहा करोषि—तस्मात् 'गुटक् गुटक्' इति शब्दः त्वत्तः निस्सरति ।"

मध्येमार्गं गजः दृष्टः । स अपृच्छत्—

"शकट, शकट ! किमर्थं त्वं गुटक् गुटक् इति शब्दं करोषि ?"

"अहं गजं गबक् इति स्वाहाकरोमि तस्मात् मत्तः गबक् गबक् इति शब्दः निःसरति । गजः भीतः पलायत ।

मध्येमार्गं भल्लूको दृष्टः । सः अपृच्छत् "शकट ! शकट ! किमर्थं गुटक् गुटक् इति शब्दं करोषि ?"

"अहं भल्लूकं भक्षयामि । तस्मात् गुटक् गुटक् इति शब्दः मत्तः निःसरति"

भल्लूकः भीतः पलायितः ।

मध्येमार्गं व्याघ्रः दृष्टः । स अपृच्छत् "शकट ! शकट ! किमर्थं गुटक् गुटक् इति शब्दं करोषि ?"

"अहं व्याघ्रं कवलीकरोमि । तस्मात् गुटक् गुटक इति शब्दः मत्तः निस्सरति ।"

व्याघ्रः भीतः पलायितः ।

ततः शकटः, द्वौ वृषभौ—एवं सर्वेऽपि सुखम् आसन् ।

## कः महत्तमः

सरस्वत्याः पावनतटे ऋषयः सभायाम् आसीनाः वादविवादे संलग्ना आसन्—ब्रह्मा, विष्णुः, महेशः, इति एषु त्रिषु कः महत्तमः ? विवादेन प्रश्नस्य समाधानं न अभूत् । तदा सर्वसम्मत्या भृगुमुनिः तस्य उत्तरार्थं नियुक्तः । तेन चिन्तितं यद् ब्रह्म-विष्णु-महेशानां पार्श्वे गत्वा तेषां चारित्र्य-परीक्षाद्वारा निर्णयः कर्तव्यः ।

प्रथमम् असौ ब्रह्माणम् उपस्थितः । सः तस्य अभिवादनं न अकरोत् । नापि स्तुतिप्रार्थनादिकम् । तेन

ब्रह्मा क्षुब्धः अभवत्, अंजलौ जलम् आनीय च शापं दातुम् उद्यतः। तदा भृगुः तस्य पादयोः पतित्वा क्षमाम् अयाचत। ब्रह्मा च तं निजात्मजं मत्वा अक्षमत।

ततः भृगुः कैलासे रुद्रम् उपगतः। तं पश्यतः एव रुद्रस्य हृदयं प्रेमपरिप्लुतम् अभवत्। सः सहसा समुत्थाय तम् आलिंगितुं प्रत्युदगच्छत्। किन्तु भृगुः अपसृत्य अवदत्—'त्वम् अशुचिः, अतः मद् दूरे एव तिष्ठ।'

रुद्रदेवः क्रुद्धः सन् हस्ते त्रिशूलं गृहीत्वा भृगुम् अभ्यपतत्। परं माता पार्वती माध्यस्थ्यं कृत्वा कथम् कथमपि तस्य क्रोधं शान्तम् अकरोत्।

ततः भृगुः वैकुण्ठे भगवतः विष्णोः सदनं प्राप्तः। तत्र द्वारपालेन निषिद्धः अपि सः सहसा अन्तः प्रविष्टः। तदा भगवान् विष्णुः शयानः आसीत्, लक्ष्मीः च तस्य सेवायां निरता अभूत्। तत्र प्राप्त एव भृगुः विष्णोः वक्षःस्थले पदाघातम् अकरोत्। तेन तस्य निद्राभंगः अभवत्।

सः नेत्रे उन्मील्य अपश्यत्—अहो भृगुमुनिः, उपविश्यतां महामुने ! उपविश्यताम्। क्षम्यताम्। अहं भवतां समुचितं स्वागतं कर्तुं न अपारयम्। मम कठोर-वक्षसि पदाघातेन भवत्पादे क्षतं तु न जातम् ? इति उक्त्वा भगवान् विष्णुः विनयपूर्वकं तस्य पादौ गृहीत्वा सस्नेहं संवाहयितुम् आरभत।

भृगुमुनिः हर्षेण गद्गदः भूत्वा तं सप्रेम प्रणतः। स्वहृदये भगवतः विष्णोः मृदु-मधुर-स्वभावस्य स्तुतिं कुर्वन् ऋषीणां सभां प्रति निवृत्तः। तत्र सः "विष्णुः एव महत्तमः देवः" इति अघोषयत्। "कथम् एतत्" इति पृष्टः सः सर्वम् अपि वृत्तान्तम् अश्रावयत् अवदत् च—नम्रता एव महत्ताया मूलम्। विष्णुः च मूर्तिमती नम्रता। सर्वैः अपि तत् सहर्षम् अनुमोदितम्।

सारः—

कोपितोऽपि न यो जह्याद् धीरतां समतां क्षमाम्।
अपकारिष्वपि स्नेहं यः कुर्यात् सततं समः ॥१॥
यो मानं चापमानं चातीतां निन्दां स्तुतिं तथा।
विनयावनतो नित्यं स महानभिधीयते ॥२॥

# भारतं मे वर्धताम्

डॉ० परमानन्द शास्त्री
सिद्धार्थसदनम्, मन्दिरमार्गः, अलीगढम्

वर्धतां गणतन्त्रमस्मिन् भारतं मे वर्धताम्
अन्धतमसां भुवि विनयने सूर्यकिरणैः स्पर्धताम्।
सदाचार-महाध्वजस्योन्नायकाः स्युर्नायकाः
शङ्करा लोकस्य सम्यक् देशविघ्नविनायकाः।
जयः स्यान्नैर्धन्ययुद्धे चन्द्र इव आह्लादकः
भवेत् प्रत्येकः सुसंस्कृतचारुचर्यो बालकः।
जने पृथ्वीराज इह नहि कोऽपि जयचन्द्रायताम्
वर्धतां गणतन्त्रमस्मिन् भारतं मे वर्धताम्।
चक्रनाभिरिवास्तु केन्द्रं प्रदेशैर्दृढसंगतम्,
अभ्युदयचक्रं भवेद् देशस्य लोकोत्तरगतम्,
धर्मकामार्थेषु निष्ठा सर्वथा शुचिता भवेत्,
निरागा औदार्यपुष्टा त्यागमतिरुचिता भवेत्।
रामभूम्यां रामराज्यस्य प्रतिष्ठाऽऽवर्तताम्
वर्धतां गणतन्त्रमेतद् भारतं मे वर्धताम्।
पावनी भारतधरायां सकलजनभक्तिर्भवेत्
कर्म-वाङ्-मनसां च सर्वोदयकृते शक्तिर्भवेत्।
बहिष्कृत्यातङ्कशङ्कां मनः प्रेम समुच्छ्वसेत्
साम्प्रदायिक-कलह-भावो हृदि न कस्मिन्नपि वसेत्।
राजनीतिः प्रजाभक्षिण्यहिवधूर्मा जायताम्
वर्धतां गणयन्त्रमेतद् भारतं मे वर्धताम्।
भवेत् सा छलछद्ममुक्ता गाँधिमार्गानुगामिनी,
न्यायरीतिः पूर्णचन्द्रा न च तमिस्रा यामिनी,
प्रशासनसंचालकाः स्युः सेवका न तु स्वामिनः,
कर्मठा लोभाद्विमुक्ताः कर्मचार्यधिकारिणः।
यौतकं क्वापि न वधूटीचिताहुतभुग् जायताम्
वर्धतां गणतन्त्रमेवं भारतं मे वर्धताम्।



## विश्वविजयी विवेकानन्दः

प्रा० सुधाकर वसन्त देशपाण्डे
सोलापुरम्, महाराष्ट्रम्



स्वराष्ट्र-धर्मरक्षिणं स्वदेश-कीर्तिवर्धकं
शमान्वितं सुमानिनं सुसाधकं तपस्विनम् ।
सुशीलधैर्यशालिनं सुयोगिनं कृपान्वितं
सुनायकं मनस्विनं नमामि तं विवेकिनम् ॥ १ ॥
पुनीतमार्गदर्शकं तथैव सत्यवादिनं
मनीषिणं महोर्जितं सदैव चारुभाषिणम् ।
दयान्वितं क्षमान्वितं प्रगाढशान्तिधारिणं
जयोन्नतं यशस्विनं नमामि तं विवेकिनम् ॥ २ ॥
निगमवाक्यसिद्धिदं परात्मतत्त्ववादिनं
सुकर्मयोगचारिणं विशेषबोधसाधकम् ।
**विश्व-धर्म-संसदे** स्वधर्म-दीप्ति-वर्धकं
समस्तचित्तहारिणं नमामि तं विवेकिनम् ॥ ३ ॥
सागरे शिलातले समाधिधारिणं दृढं
विशुद्धतत्त्वचिन्तकं स्वतेजसा सुशोभितम् ।
सुसिद्धि-लाभ-मण्डितं तथैव क्रान्तदर्शिनं
स्वतन्त्रराष्ट्रप्रेरकं नमामि तं विवेकिनम् ॥ ४ ॥
वाग्भूषणं त्वमसि शान्तिपथोदेष्टा
दिव्य-स्वधर्म-विषये नियताभिमानी ।
**श्रीरामकृष्ण** - पद - नीरज - भृङ्गरूपिन् !
हे राष्ट्रगौरव ! **नरेन्द्र** ! नमो नमस्ते ॥ ५ ॥



**तर्कपरीक्षा—**

एकस्मिन्नगरे शस्त्रप्रहारेण कस्यापि हत्या जाता । महता प्रयत्नेन पञ्चजना अपराधित्वेन न्यायालये उपस्थापिताः । स्वनिरपराधितां प्रदर्शयन्तस्ते पञ्चापि जनाः त्रीणि त्रीणि वाक्यानि क्रमशः उक्तवन्तः । तेषु वाक्येषु केऽपि द्वे वाक्ये सत्ये एकं च असत्यम् आसीत् । तानि वाक्यानि तेषां नाम्नः अग्रतः उट्टङ्कितानि सन्ति—

रामः—(१) हत्या मया न कृता । (२) मत्सविधे कदापि शस्त्रं नासीत् । (३) हत्या देवदत्तेन कृताऽस्ति ।
श्यामः—(१) हत्या मया न कृता । (२) मत्सविधे शस्त्रं कदापि नासीत् । (३) सर्वे जनाः मयि वृथाऽऽक्षिपन्ति ।
यज्ञदत्तः—(१) अहं निरपराधोऽस्मि । (२) अहं श्रीधरं कदापि न दृष्टवान् । (३) देवदत्तः अपराधी वर्तते ।
देवदत्तः—(१) अहं निर्दोषोऽस्मि । (२) श्रीधरः अपराधी अस्ति । (३) रामः मयि मिथ्यारोपं करोति ।
श्रीधरः—(१) हत्या मया न कृता । (२) श्यामः अपराधी वर्तते । (३) मम यज्ञदत्तेन सह प्राचीना मित्रताऽस्ति ।

अस्यां स्थितौ वस्तुतः अपराधी कः कथञ्चेति पाठकाः विलिख्य अस्मत्सविधे प्रेषयन्तु । □

[विगताङ्के कृतस्य प्रश्नस्य उत्तरम् आगामिनि अङ्के प्रकाशयिष्यते—सं०]

# अन्योक्तयः

श्री राजेश्वर शास्त्री
धारवाड़

सौवर्णद्युतिभाञ्जि मञ्जुलफलान्यत्युन्नतं सौरभं
भृङ्गीवारविहारभूमिरभितः पुंस्कोकिलालापकः ।
चूत त्वं सुकृती विहारिजनताहृत्तोषकारी परं
शाखासक्तपिपीलिकाफणिगणानालोक्य दूयामहे ॥ १ ॥

सारङ्गः क्वचिदङ्ग निर्झरजलं पातुं सुधासन्निभं
कान्तारे नगदन्तुरे गतजले चञ्चूर्यमाणो वने ।
प्राप्स्यामीति मुदा पयः परिसरन्न प्राप्य तोयं वृथा
निन्दन् दैवमरुन्तुदं, घनरसं क्षारं पिबन् दुःख्यति ॥ २ ॥

आसारैः परिपूरितोऽमृतरसः कासारचूडामणिः
मध्वासक्तमधुव्रतालिविलसद्राजीवसंराजितः ।
पूर्वं यः पिकहंसबर्हिनिनदैः संशब्दिताशान्तरः
सोयं सम्प्रति चण्डभानुकिरणैः संशोषितस्ताम्यति ॥ ३ ॥

वन्यैर्घोरमृगैर्युतं हुतभुजा दन्दह्यमानं वनं
संविष्टो गजयूथपः खलु रुदन्नुच्चैर्भ्रमल्लोचनः ।
शंशम्येत दवः पयोदसलिलैरित्यामृशन् खिद्यते
भद्रोच्छेदकुठाररूपनियतिं नन्दाम निन्दाम वा ॥ ४ ॥

शैलेन्द्र ! प्रथिते वनस्पतिवरास्त्वय्येव वृद्धिं गताः
हेमाश्मादिखनिः पुनः पशुगणः सेष्णेऽधि बद्धादरम् ।
आधारोप्यनलस्य सम्प्रति सखेः सारोयमाकर्ण्यतां
कूटारूढनरस्त्वधो यदि पतेन्निन्द्यो भवेः सज्जनैः ॥ ५ ॥

कावेरीजलमातनोति न सुखं गाङ्गं न पाथस्तथा
तुङ्गाम्बूनि च नीरसानि न तृषं मुष्णाति कृष्णाधुनी ।
मूर्धाऽऽधूननपूर्वकं प्रतिगृहं गोष्ठीकथानिष्ठिताः
ज्यायांसो बहुमन्वते नुतिपराः स्वग्रामकासारकम् ॥ ६ ॥



# ज्ञानशिविरम्

## विविधविषयाः

### ऐतिहासिक्यः तिथयः—

१—मोहनजोदडो हडप्पा तथा सिन्धुघाटी-सभ्यता
२—आर्याणाम् उत्तरभारते विजयः
३—जैनधर्मप्रवर्तकस्य महावीरस्य जन्म
४—महावीरस्य निर्वाणकालः
५—मौर्यवंशशासनम्
६—द्वितीयमहायुद्धस्य घोषणा

### विश्वसाहित्यम्—

| पुस्तकम् | लेखकः |
|---|---|
| १—ए डेन्जरस प्लेस | डेनियलपेट्रिक मोपनिहान |
| २—ए वेसेज टु इण्डिया | ई० एम० फोरेस्टर |
| ३—ए पेसेज टु इंगलैण्ड | नीदर सी० चौधरी |
| ४—बुद्धचरितम् | अश्वघोषः |
| ५—आनन्दमठ (हिन्दी) | बंकिमचन्दचटर्जी |
| ६—कादम्बरी | बाणभट्टः |

## क्रीडालोकः

### क्रीडाक्षेत्राणां परिमाणम्—

| क्रीडा | परिमाणम् |
|---|---|
| चटकिका-ताडनजालिका-क्रीडा— (BADMINTON) | ४४ फीट × १६ फीट (एकलम्)<br>४४ फीट × २० फीट [द्विगुणम् (डबल)] |
| २–करण्डक-कन्दुक-क्रीडा— (BASKETBALL) | ८५ फीट × ४६ फीट-मितम् (अधिकाधिकम्) |
| ३–पाद-कन्दुक-क्रीडा— (FOOTBALL) | आयामः–१०० गजतः १२० गजयावत्<br>विस्तारः–५० गजतः १०० गजयावत् |

| क्रीडा | परिमाणम् |
|---|---|
| ४–काष्ठपट्टिका-कन्दुक-क्रीडा— (CRICKET) | |
| भूमिः— | वृत्ताकारा अण्डाकारा वा |
| यष्टित्रयमध्यगता दूरता— | २२ गजमिता |
| कन्दुकः— | ५½ औंसतः ५¾ औंसमितं गुरुत्वम् |
| काष्ठपट्टिका (बैट) आयामः— | अधिकाधिकं ४¼ इञ्च |
| विस्तारः— | ३८ इञ्च |

### उत्तराणि

(१) ३००० ईसापूर्वतः १५०० ई० पू० यावत् (२) १९०० ई० पू० (३) ५९९ ई० पू० (४) ५२७ ई० पू०
(५) ३२२ ई० पू० तः १८५ ई० पू० पर्यन्तम् ।

# मानवधर्मो मानवता आराध्या सा भारतमाता

डॉ० नलिनी शुक्ला

पुष्पधानमस्माकं राष्ट्रं
चित्रगुच्छसन्निभा वयम् ।
नानाभाषावेषभूषिताः
संहितशोभा तस्य वयम् ॥
ऐक्यदर्शने सौख्यसर्जने चरितार्थता यतो जाता ।
मानवधर्मो मानवता चाराध्या सा भारतमाता ॥ १ ॥

भवतु मन्दिरं भवतु मस्जिदं
गिरिजागृहं गुरोर्द्वारम् ।
वर्त्म समेषां जनकल्याणं
दिशति सदा यत्सुखसारम् ॥
ईशवन्दनैः प्रीतिवर्षणः वृत्तिरियं हृदि संजाता ।
मानवधर्मो मानवता चाराध्या सा भारतमाता ॥ २ ॥

यया पोषिता यया वर्धिताः
स्नेहिलाञ्चले शस्यभृते ।
समं लालिताः समं पालिताः
क्व सौख्यलेशोऽपि ताम् ऋते ॥
ऋणं धारायामहे तदीयं दृढधारणा समायाता ।
मानवधर्मो मानवता सैवाराध्या भारतमाता ॥ ३ ॥

प्राणपणैरपि तस्या मानं
संरक्ष्यं कर्तव्यमिदम् ।
भिन्नाचारविभेदं त्यक्त्वा
तुल्यवर्त्म गन्तव्यमिदम् ॥
देशवासिनः ! स्वीयसंस्कृतेः शिक्षैका भुवि विख्याता ।
मानवधर्मो मानवता चाराध्या सा भारतमाता ॥ ४ ॥

# वसन्तसेना

सौ० कमला अभ्यंकर
सी/९ गणेशभवन, सेनापति बापट मार्ग महीम, मुम्बई ४०००१६

संस्कृतनाट्यसृष्टौ त्रिप्रकारकाः नायिकाः दृश्यन्ते। स्वीया, अन्या तथा साधारणस्त्री इति। साधारणस्त्री नाम गणिका। वसन्तसेना एतत्प्रकारका नायिका भवति। भासकृतचारुदत्तनाटकेऽपि वसन्तसेनायाः दर्शनं भवति, किन्तु तस्य नाटकस्य अपूर्णत्वात् तस्याः अपर्याप्तदर्शनेन न तृप्तिमनुभवामः। किन्तु मृच्छकटिककर्त्रा शूद्रकेण विलोभनीय-व्यक्तिरेखाटन-कौशलेन वसन्तसेना अमरा कृता ननु।

कामं वसन्तसेना गणिका, किन्तु केवलं जात्यैव। गणिकायाः कन्या, अतः एव गणिका। सत्यपि गणिकात्वे न सा धनलुब्धा, अपि तु गुणलुब्धा एव। अतः एव राजश्यालक-संस्थानकस्य अनुनयं न सा स्वीकरोति। "गुणः खल्वनुरागस्य कारणं न पुनर्बलात्कारः"—इति तस्याः सुस्पष्टम् उत्तरम्। स्वदेह-सौन्दर्य-गुणसौन्दर्याभ्यां सा खलु उज्जयिनीनगर्याः भूषणमेव। चारुदत्तः तु ताम् 'देवतोपस्थानयोग्या युवती' इति मन्यते।

कामदेवायतनोद्यानात्प्रभृति सा चारुदत्ते अनुरक्ता। चारुदत्तः इदानीं निर्धनः इति ध्रुवं जानाति सा। किन्तु दरिद्रपुरुषसंक्रान्तमनस्का खलु गणिका लोकेऽवचनीया भवति—इति तस्याः भावना। संवाहक-कर्णपूरकाभ्यां चारुदत्तस्य गुणौदार्यवर्णनं श्रुत्वा तथा तस्करचोरितानाम् अलंकाराणां मूल्यार्थे चारुदत्तप्रेषितां बहुमूल्यरत्नमालां प्रेक्ष्य तस्याः चारुदत्तविषयकं प्रेम दृढमूलं भवति। वस्तुतः चारुदत्त-मिलनार्थं दिनमनुदिनं व्याकुला सा। तथापि उत्कट-प्रेम्णा सा सहसा तं न अभिसरति। यतः एवं कृते प्रत्युपकारदुर्लभतया सः दुर्लभदर्शनः माभूत् इत्येव तस्य कारणम्। यदा वसन्तसेनायाः परमप्रीतिविषये सः विश्वसेत्, आवयोः मेलने निर्धनता न विघ्नकारणं भवेत्, इति प्रत्ययः तस्य मनसि भवेत्, स एव समुचितः अभिसरणकालः तत्कृते। चतुरा सा एवं विश्वासम् उत्पादयितुम्, तथा पुनरपि मिलनावसरं प्राप्तुम् एव स्व-अलंकारान् चारुदत्तहस्ते निक्षिपति।

अतीवोपेता दाक्षिण्या, मृदुस्वभावा वसन्तसेना! अलंकारविषये सत्यं वृत्तान्तं ज्ञात्वा अपि स्वदासीं मदनिकां विनैव शुल्कं सा दास्यमुक्तां करोति "यदि मम च्छन्दस्तदा विनाऽर्थं सर्वं परिजनमभुजिष्यं करिष्यामि" इत्येते उद्गाराः अस्य साक्षिणः। "सांप्रतं त्वमेव वन्दनीया संवृत्ता" इति उक्त्वा ताम् आमन्त्रयते। सुयोग्यसमयं दृष्ट्वा सा स्वयमेव चारुदत्तम् अभिसरति। वसन्तसेना स्वभावप्रेमा न खलु।

अपरेद्युः प्रभाते वसन्तसेना-चेट्योः संवादः एतद्दृष्ट्या लक्षणीयः खलु।

**"वसन्तसेना**—चेटि, किं प्रविष्टाऽहमिहाभ्यन्तरचतुःशालकम्।

**चेटी**—न केवलमभ्यन्तरचतुःशालकम्। सर्वजनस्यापि हृदयं प्रविष्टा।

**वसन्तसेना**—अपि सन्तप्यते चारुदत्तस्य परिजनः।

**चेटी**—सन्तप्स्यति।

**वसन्तसेना**—कदा।

**चेटी**—यदाऽऽर्या गमिष्यति।

**वसन्तसेना**—तदा मया प्रथमं संतप्तव्यम्।"

सा आत्मानं चारुदत्तस्य गुणनिर्जितां दासीं मन्यते। न केवलं चारुदत्तस्यैव किन्तु आर्याधूतायाः अपि। अमत्सरा सा धूतां 'भगिनिका आर्याधूता' इति सम्बोधयति। निर्लोभतया सा तद्रत्नमाला तस्यै प्रत्यर्पयति।

दुर्दैववशात् सौवर्णशकटिकार्थे रुदन्तं चारुदत्तपुत्रं रोहसेनं दृष्ट्वा सा दुःखिता भवति। 'यद्यस्माकमार्या

जननी तत्किमर्थमलंकृता' इति स्वविषये रोहसेन-वचनं श्रुत्वा साश्रुनयना सा स्वालंकारान् अवतार्य रोहसेनशकटिकां पूरयति, वदति च, "एषेदानीं ते जननी संवृत्ता। तद् गृहाणैवमलंकारम्। सौवर्ण-शकटिकां कारय" इति। वराकी वसन्तसेना न जानाति। यत् एते एव अलंकाराः चारुदत्तवधस्य निमित्तं भविष्यन्ति इति।

वाहनपरिवर्तनात् चारुदत्तदर्शनोत्सुका सा पुष्प-करण्डकोद्याने दुष्ट-शकारहस्ते निपतति। ईदृशी चारु-दत्तविषये प्रकृष्टा तस्याः निष्ठा यत् शकारस्य अनुनयं सा नैव स्वीकरोति, किन्तु तत्कृतां चारुदत्त-निन्दां श्रुत्वा क्रुद्धा शकारं पादेन ताडयति। 'सहकार-पादपं सेवित्वा न पलाशपादपमङ्गीकरिष्यामि' इति तस्याः सुस्पष्टम् उत्तरम्। चारुदत्तप्रेमोत्कटतया तं नमस्कृत्य सा मरणायापि सिद्धा भवति।

अन्ते तस्याः एकनिष्ठतायाः अनुरूपं फलं सा प्राप्नोत्येव। 'मन्दभागिनी खल्वहं तवाभ्यन्तरस्य'—इत्येतत् तस्याः मनःशल्यं दूरीभूय सा चारुदत्तस्य दयिता भार्या भवति, 'वधूशब्देन' गौरवान्विता भवति।

वसन्तसेना यद्यपि गणिका, अस्मिन् नाटके तस्याः दृश्यमानम् चित्रणम्, आदर्शः, एकनिष्ठकुलवध्वाः न किमपि परिहीनम्। निखिलं 'मृच्छकटिकम्' तस्याः एव व्यक्तित्वेन प्रभावितम् इति दृश्यते। ◻

# भारतमहिमा

**द्वारकाप्रसादशास्त्री**
विश्वसंस्कृतप्रतिष्ठानम्, रायबरेली

भाले नवहिमगिरिर्विशालः चरणे चपलसिन्धुजलजालः
उरसि शोभते वर-वनमालः षड्-ऋतु-सेवित-घनघनवालः
प्रकृतिरुचिरालयोऽवदातः
भारतमहिमा भुवि विख्यातः॥

पूर्वे राजते जगतो नाथः पश्चिमदिशि द्वारकानाथः
उत्तरदिशि वरबद्रीनाथः याम्ये रामेश्वरः सुगाथः
विलसति चतुर्धामसंघातः
भारतमहिमा भुवि विख्यातः॥

वैदिकधर्मप्रचारे लग्नः जनकल्याणे सततं मग्नः
जातो दयानन्दनामाऽसौ परममहर्षिर्जगतां पूज्यः
जनहितकरणे सदा प्रसक्तः
भारतमहिमा भुवि विख्यातः॥

अल्लाह-अकबर-स्वरः सुरम्यः हरिः ॐ तत्सत् स्वरोऽतिधन्यः
ईसा – धर्म – प्रचारोऽदम्यः सिक्ख-धर्म–ध्वनिरतिशयरम्यः
दैवैरपि सद्भावैर्ध्यातः
भारतमहिमा भुवि विख्यातः॥

देशोऽयं समधर्मधुरीणः विश्वशान्तिकरणे च प्रवीणः
प्राचीनोऽयं सदा नवीनः नैव कदाचिद् जातो दीनः
सदा समादरकर्ता जातः
भारतमहिमा भुवि विख्यातः॥



# प्रियाशा

**राजारामशुक्लः**
सहायकसम्पादकः—विश्वभाषा

**( गताङ्कादनुवर्तते )**

[ **पूर्वाङ्के**—विष्णुमयो नाम नगरश्रेष्ठी चारुचन्द्रस्य कन्यया प्रियाशया साकं विवाहं कर्तुं कामयते। परन्तु धनाभावात्सः संकोचं करोति। अतः सः इन्दुमय इति नामकस्य स्वमित्रस्य गृहं प्रति गच्छति। परन्तु इन्दुमयस्य व्यापारपोताः व्यापारार्थम् गताः वर्तन्ते। तस्मात्सः मासत्रयं यावत् किमपि साहाय्यं कर्तुं न समर्थः। तेन शून्यालोकस्य सकाशाद् ऋणं गृहीतुं परामर्शो दत्तः। उभौ शून्यालोकस्य गृहं गच्छतः। शून्यालोकः नीचप्रकृतिकः लोलुपश्च धनी अस्ति। कृपणस्वभावादेव तस्य पुत्री स्वेच्छयोढवती। सः एकं कृषकं येन पूर्वं शून्यालोकस्य सकाशाद् ऋणं गृहीतमासीत् च्छलेन प्रताड्य तस्य षोडशीं कन्यां कामयते। कृषकः तदर्थं नेच्छुकः। इन्दुमयविष्णुमयौ तस्य सविधे गच्छतः। तस्य ताभ्यां पूर्वत एव वैरमासीत्। सः कथचिद् ऋणं दातुं स्वीकरोति। तत्र चैकं समयं निधारयति—यदि मासत्रयाभ्यन्तरे ऋणं न परावर्तिष्यते तर्हि इन्दुमयस्य वक्षोभागादर्धसेटकपरिमितं मांसं कर्तयिष्यत इति ]

## अथ तृतीयोऽङ्कः

[ ततः प्रविशति मालतीमालां दधाना सुस्मिता ]

**सुस्मिता**—अयि ! अद्य तु

सौभाग्यं महदेतत्तव विमले ! मालतीमाले ! ।
अस्मत्सखीं प्रियाशां माङ्गल्यार्थं विभूषयिष्यसि नु ॥१॥

अद्यैव खलु नगरश्रेष्ठी विष्णुमयोऽस्मत्सखीं सनाथयतीत्यस्ति सा मया विविधालङ्काररमणीया करणीया। तत्तामुपसरामि (परिक्रम्य गतिभङ्गं नाटयित्वा) हन्त ! विस्मृतः खलु मयैको नियोगः। या चास्माकं प्रियसहचरी चिरेण पत्युः सकाशादिहागता सा प्रथमं विदितशुभवृत्तान्ता कर्त्तव्या। एष प्रथमः कल्पः। एतद्धि तत्सदनम्। तदाह्वयामि ( नेपथ्याभिमुखम् ) हला सागरिके !

विधुरस्ति विहाय यामिनीं,
कथमद्यापि गृहं न मुञ्चसि।
इत एहि प्रियं वदामि ते....

**नेपथ्ये**—किमु मे जीवननाथ आगतः ? ॥२॥

**सागरिका**—( अपटीक्षेपेण प्रविश्य ) क्व नु खलु मे जीवननाथः ?

**सुस्मिता**—( सस्मितम् ) उज्जयिन्यां रमते।

**सागरिका**—तत् किमन्यन्मे प्रियम् ?

**सुस्मिता**—अद्य प्रियाशा प्राणाधारेण सनाथा भवतीति।

**सागरिका**—सुस्मिते ! अपि सत्यमेतत्।

**सुस्मिता**—अथ किम्

**सागरिका**—तद्विस्तरेण श्रोतुमिच्छामि।

**सुस्मिता**—सखि ! अवहिता भव, साद्यन्तं ते कथयामि।

**सागरिका**—अवहिताऽस्मि।

**सुस्मिता**—अस्ति कश्चिद् विष्णुमयो नाम नगरश्रेष्ठी।

**सागरिका**—श्रुतपूर्व इव प्रतीयते।

**सुस्मिता**—अस्मत्सखी स च समवयस्कौ परस्परमनुरक्तौ स्तः।

**सागरिका**—सखि ! भवत्येव तथा—

युवा गुणैश्वर्यसमेधितो यदि
प्रिया मनोज्ञा युवती च सुन्दरी।
भवेदवश्यं प्रणयोदयो मिथ-
स्तदेष धर्मो वयसः स्वभावजः ॥३॥

सुस्मिता—सखि ! किन्त्वासीत्परिणये काठिन्यम् ।

सागरिका—अयि ! कुतस्तत् ?

सुस्मिता—सागरिके ! अस्मत्सख्यास्तातः चारुचन्द्रो भुवः प्रयाणात्प्राक् तिस्रो मंजूषा निरमात्। तासु प्रथमा सुवर्णमयी, द्वितीया रजतमयी तृतीया च काचमयी ।

सागरिका—ततस्ततः ।

सुस्मिता—ततस्तासु कस्यांचिदेकस्यां मञ्जूषायाम-स्मत्सख्याश्चित्रं समस्थापयत् प्रत्यज्ञासीच्च यद् यः खल्वासु संस्थापितचित्रां मञ्जूषां चेष्यति तमेव प्रियाशा परिणेष्यति ।

सागरिका—अहो प्रतिज्ञा महताम् ।

सुस्मिता—सखि ! आसीत्तत्रैकः समयोऽपि ।

सागरिका—कश्च सः ?

सुस्मिता—यदि धृतचित्रां मञ्जूषां न चेष्यामि तदाऽऽजीवनं ब्रह्मचर्यमाचरिष्यामीति प्रतिज्ञायैवात्र प्रवेष्टव्यम् ।

सागरिका—अहो ! विचित्रोऽयं समयः । ततस्ततः ?

सुस्मिता—ततः प्रियाशाया रूपेणैश्वर्येण च मुग्धा नेकेऽपि आर्यवर्या अर्यवर्याश्च समागताः ।

सागरिका—ततस्ततः ?

सुस्मिता—ततस्तेषु केचित्समयममुमाकर्ण्यैव परा-वर्तन्त, ये च कथञ्चित्साहसमकुर्वन् तेऽपि चयने न प्राभवन् ।

सागरिका—सखि ! कस्मादेतत् ?

सुस्मिता—हला ! शृणु तत्रास्ति रहस्यम्

सागरिका—अवहिताऽस्मि ।

सुस्मिता—सखि ! याश्च तिस्रो मंजूषा आसन् तासु सौवर्णमञ्जूषाया उपरि लिखितमासीत्—"यो मां चेष्यति स तदेव प्राप्स्यति यदीयं चित्रं मयि स्थापितं वर्तते"। एवं रजतमञ्जूषाया उपरि लिखितमासीत्—"यो मां चेष्यति स तदाकारतां यास्यति यदीयं चित्रं मयि स्थापितं वर्तते" ।

सागरिका—एवं काचमञ्जूषायाम् ?

सुस्मिता—तस्यां च लिखितमासीत्–"यो मां चेष्यति तेन स्वीयं सर्वस्वमप्युपायनीकर्तव्यं भवेत्" ।

सागरिका—ततस्ततः ?

सुस्मिता—ततः सर्वेऽपि लोभवशात् सौवर्णीं राजतीं वा मञ्जूषामचिन्वन्। ताभ्यां च क्रमशः मृत्योः मूर्खस्य च चित्रे निरसरताम् ।

सागरिका—अहो चित्रमिदम् । ततश्चार्यविष्णु-मयस्य का गतिरभूत् ?

सुस्मिता—हला ! अस्मत्सख्यर्थं सर्वस्वमप्युपायनी-कर्तुं तत्परस्तत्र भवान् काचमञ्जूषामेवाचिनुत । तस्यान्त्वासीत् सख्याश्चित्रम् ।

सागरिका—अहो महाभाग्यः खल्वार्यो विष्णुमयः।

सुस्मिता—स चाद्यैवास्मत्सखीं सनाथयतीति तां सज्जीकर्तुं प्रवृत्ताऽस्मि संवृत्ता । तदेहि तमुपसरावः । साऽधुना लतामण्डपमलङ्करोति ।

सागरिका—हला ! एहि सत्वरम् ।

(निष्क्रान्ते)

इति विष्कम्भकः

[ततः प्रविशति लतामण्डपस्था प्रियाशा]

प्रियाशा—अहो !

मनोरथं साधयितुं मदीयं
मयीश्वरः कारुणिको बभूव ।
अथवा—
मनोवचःकर्मभिरीहते यः
स्वाभीष्टमाप्नोति न संशयोऽत्र ॥४॥

हृदय !

प्रियस्य कस्यचित्तस्य चिरादर्पितमप्यहो ! ।
साक्षात्काराय हन्ताद्य किमित्युत्कण्ठसे पुनः ॥५॥

सुस्मिता—(सागरिकया सह प्रविश्य) यतः प्रियोऽद्यार्य पुत्रः संवर्तते ।

प्रियाशा—स्वागतं प्रियसख्यौ ! अहो चिरेण साक्षा-त्कृता मे प्रियसहचरी सागरिकेति तामलिलिङ्क्षन्ति मेऽङ्गानि। एहि सखि ! परिष्वजस्व माम् ।

सागरिका—(आलिङ्ग्य) हला! चिरसौभाग्यवती भव ।

**सुस्मिता**—(सस्मितम्) यस्मादियमनुभूतार्यपुत्रसाहचर्या तस्मादस्ति तस्यां विशेषोऽनुरागः।

**प्रियाशा**—हला ! मैवम्, त्वमपि तथैव मे प्राणाधारा यथेयम्, एहि परिष्वजस्व।

**सुस्मिता**—(परिष्वज्य) सखि ! अद्य परिणतपरिणया भविष्यसि, तदेहि कुसुमनिकुरम्बकेन त्वामलङ्कुर्वः।

**प्रियाशा**—अपरिहार्यः खलु सखीजनादेशः।

**सुस्मिता**—(सस्मितम्) अद्य तु नूनमेवापरिहार्यः।

**सागरिका**—अलं परिहासेन। ननु व्यत्येति समयः। सखि ! झटित्युपसर।

**प्रियाशा**—सख्यौ ! यथेच्छं कुरुतम् (उपसरति)

**उभे**—[अलङ्कुर्वत्याविङ्गितेन प्रियाशामुद्दिश्य गायतः]

रोमाञ्चाञ्चनमञ्जुतां समुचितां प्रत्यङ्गमुत्तम्भयन्
कञ्चिच्चुम्बितुमेतदोष्ठयुगलं लोलं पुरः सारयन्।
चञ्चत्किञ्च विलोललोचनयुगं प्रेक्षातुरं कारयन्
भूयान्नो मदनो विनोदितजनो मोमुद्यमानो मुदे॥६॥

**प्रियाशा**—(व्रीडां नाटयति)

**सुस्मिता**—हला ! इदानीं संवृत्ताऽस्यलङ्कृता। तत्प्रतीक्षस्व प्रियतमम्। आवां प्रतिष्ठावहे।

**प्रियाशा**—(ससम्भ्रमम्) अपि मामनाथीकृत्य गच्छथः ?

**सागरिका**—अहो !

या सनाथीकृता धात्रा प्राणाधारं प्रयच्छता।
तादृशीं त्वां महाभागां को वाऽनाथीकरिष्यति॥७॥

**प्रियाशा**—सख्यौ ! एकान्ते विचलति मे चेतः इति मत्सान्निध्यं मा त्यजतम्।

(क्रमशः)

---

# नित्योपयोगि-भोज्यपदार्थाः

पाठकानां परिचयायात्र केषाञ्चन भोज्यानां पदार्थानां प्रमाणिकः संस्कृतानुवादः प्रस्तूयते—

| | | | |
|---|---|---|---|
| १. धान्यम् | धान | १६. तोक्मः | हरा जौ |
| २. तण्डुलः | चावल | १७. वनमुद्गः | मोंठ |
| ३. द्विदलम् | दाल | १८. गौरसर्षपः | पीली सरसों |
| ४. गोधूमः | गेहूँ | १९. कुल्माषः | छोला, घुघुरी |
| ५. यवः, व्रीहिः | जव | २०. कङ्गुः, प्रियङ्गुः | कंगुनी |
| ६. माषः | उड़द | २१. राजिका | राई |
| ७. मसूरः | मसूर | २२. अतसी | तीसी |
| ८. कोद्रवः | कोदो | २३. राजमाषः | राजमा |
| ९. मुद्गः | मूंग | २४. शिम्बा | सेम |
| १०. आढकी | अरहर | २५. शूकः, शूकधानम् | भुट्टा, बाजरा आदि |
| ११. षष्टिका | साँवा, साठी | २६. कणिशः | भुट्टा |
| १२. चणकः | चना | २७. इक्षुः | ईख |
| १३. सर्षपः | सरसों | २८. शर्करा | शक्कर |
| १४. तिलम् | तिल | २९. सिता | चीनी |
| १५. कलायः | मटर | ३०. गुडः | गुड |



# अक्षरबन्धः

## (प्रतियोगिता)

| | | | | | |
|---|---|---|---|---|---|
| मु | वि | श्व | भा | बा | मा |
| वि | द्रा | क्र | णः | सः | ल |
| ज | वु | रा | मं | ऋट | वि |
| य | द्ध | मः | क्ष | तु | का |
| म | ध | ज | क | सं | ग्नि |
| त्रि | ग्म | व | ह्ल | हा | मि |
| भु | व | टः | णः | रः | त्रं |

### विषयाः

१. विशाखदत्तरचनाकौशल्यविनिर्गतं नाटकम् ।
२. संस्कृतसाहित्ये वाग्देवी-अवतार-स्वरूपः इति प्रथितः ।
३. कालिदासकवितासूत्रम् ।
४. चण्डिकापरिणयकर्ता प्रख्यातगद्यकविः ।
५. जयसिंहसमकालिकः काश्मीरकविः ।
६. कविकुलगुरुकविताहारः ।
७. 'सरस्वत्याः हासः' इति संस्तुतः नाटककर्ता ।

नाम.... .... .... .... .... .... ....

सङ्केतः.... .... .... .... .... .... ....

.... .... .... .... .... .... ....

**अक्षरबन्धविभागः**
**विश्वभाषा**, दुर्ग—रामनगरम् वाराणसी-८

पृष्ठेऽस्मिन् वामभागे चतुष्कोणे कोष्ठके कानिचन अक्षराणि दृश्यन्ते । तेषु अक्षरेषु केचन साहित्य-सम्बन्धिनः विषया गुप्ताः सन्ति ।

तस्य अधः क्रमशः ससंख्याकाः केचनविषया सन्ति । तेषाम् आधारेण तान् विषयान् उपस्थितेषु कोष्ठकस्थ-अक्षरेषु प्रदर्शयन्तु ।

कथं वा प्रदर्शनीयम् इति एकम् उदाहरणम् अपि वयं दत्तवन्तः । तद् उदाहरणं मनसि निधाय, अवशिष्टानि नामानि रेखांकितानि कुर्वन्तु ।

एवम् एतत् क्विज् सम्पूर्य—अधःस्थितं कूपन् अपि सम्पूर्य वामभागं सर्वं रेखानिर्दिष्टस्थलेषु परितः कर्तयित्वा, १५–३–९० दिनाङ्काभ्यन्तरे अधोनिर्दिष्ट-संकेतानुसारं प्रेषयन्तु । स्पर्धायाः अस्याः कृते एकशतं रूप्यकाणि दातव्यानि इति निश्चितम् । अतएव चत्वारः विजेतृरूपेण उद्घोषिताः भविष्यन्ति । यदि चतुर्भ्यः अधिकाः उत्तमपूरकाः भविष्यन्ति, तर्हि 'लाटरी' पद्धतिद्वारा चतुर्णां नामानि निष्कास्य ते एव विजेतारः इति उद्घोष्य तेषामेव पुरस्कारान् प्रेषयिष्यामः । यदि चतुर्षु अपि एकः-दौ-त्रयः एकेन दोषेण-दोषद्वयेन दोषत्रयेण वा प्रेषयन्ति, तदा द्वितीय-तृतीय पुरस्काराः भविष्यन्ति ।

विजेतृणां चतुर्णां कृते एकैकस्य पञ्चविंशति-रूप्यकपरिमितानि पुस्तकानि प्रेषयिष्यामः ।

अनेन सह स्वपूर्ण-सङ्केत-युक्तं पत्रालयचीटिका-(Stamp) सहितं पत्रपुटकम् (Envelope) अपि प्रेषयन्तु ।

अथ श्रीमहाभारतकथा—

# द्रोणाचार्यस्योत्पत्तिरहस्यम्

कृपासिन्धुशर्मा (प्राचार्यः)
ब्रह्मर्षि-बलदेव-संस्कृत-विद्यालयः, वाराणसी

प्राचीनकाले ब्राह्मणा अध्ययनाध्यापनयजनयाजनादिकार्यसम्पादनेन शास्त्रसंरक्षणकार्यं, शौर्यप्रधानाः क्षत्रियाश्च युद्धकार्यसम्पादनेन शस्त्रास्त्रसंरक्षणकार्यं कुर्वन्ति स्म। एतादृशीषु परम्परासु सतीष्वपि तदानीं परशुरामद्रोणसदृशाः अप्याचार्याः आसन्। ये न केवलं शास्त्रसंरक्षणकर्मणि अपि तु शास्त्रशस्त्रोभयत्रापि लब्धप्रतिष्ठा अभूवन्। तत्र सर्वक्षत्रान्तकः शिवाल्लब्धधनूरहस्यो जामदग्न्यः परशुरामः सर्वविदित एव। दशावतारगणनायामस्य नाम्नः परिगणनं भवति। तच्छिष्योऽयं द्रोणोऽयोनिज इत्यस्त्यस्यापरं वैशिष्ट्यम्।

योग्यशिष्यताकारणेन परशुरामे वर्त्तमानाः क्षमादम-सत्यानृशंस्यार्जवादियुतं ब्राह्मण्यम्, ससंहारप्रयोगपूर्वकदिव्यास्त्रयुतं ब्रह्मास्त्रमेवमेकतश्चत्वारो वेदा अपरत्र क्षात्रम्, वेदान्ताः पुराणानि इतिहासादयश्चेति सर्वे समुदिता गुणा अस्मिन्मुनौ सङ्क्रान्ताः। अयं हि बुद्धया बृहस्पतिसमः नये चोशनसा तुल्य आसीत्। अस्य ध्वजे ब्राह्मण्यानुगुणः शातकौम्भमयः कमण्डलुः काञ्चनीवेदी च दरीदृश्यते। अयं हि अग्रतश्चतुरो वेदान् पृष्ठतश्च सशरं धनुः कृत्वा जगत्त्रयं दग्धुं जेतुं च समर्थ आसीत्। अधुनास्य अयोनिजत्वविषये महाभारतमाश्रित्य किञ्चिद् ब्रूमः।

संशितव्रतः भरद्वाजनामा महर्षिर्गङ्गाद्वारमाश्रित्य तपसि वर्तमान आसीत्। एकदा स महामुनिः स्नातुं गङ्गायां गतवान्। ततः प्रागेव रूपयौवनसम्पन्ना मददृप्ता अप्सरसां वरा घृताची नाम्न्यप्सरा गङ्गाम्भसि संप्लुता वसनं परिवर्तमाना आसीत्, एवं व्यपकृष्टाम्बरां तामप्सरसं दृष्ट्वा तस्यां संसक्तमनसस्तस्य मुनेः रेतश्चस्कन्द। ऋषिश्च तद्रेतः द्रोणकलशनामके यज्ञपात्रे न्यदधात्। ततस्तस्मादेव कलशाद् द्रोणः समभवत्। यतो द्रोणकलशाख्ये यज्ञपात्रे तस्य समुत्पत्तिरभवत् ततो द्रोण इति तस्य नाम अभवत्। एवं हि अयम् अयोनिज इति कथ्यते।

पूर्वं हि भरद्वाज आग्नेयमस्त्रमग्निवेशाय दत्तवान्। स चाग्नेः पुत्रोऽग्निवेशः भारद्वाजं द्रोणं स्वगुरुपुत्रमाग्नेयमस्त्रम् अशिक्षयत्। अयं हि तपसि वर्तमानः ब्रह्मचर्यपरः सन् स्वपितुः सन्निकर्षे एव साङ्गान् सरहस्यान् वेदांश्चाध्यगीष्ट। कदाचिदयं परशुरामस्य सन्निधौ धनुर्वेदाः, सर्वाणि दिव्यान्यस्त्राणि नीतिशास्त्राणि च अप्रतिहतरूपेण प्रतिवसन्ति स्म इति ज्ञात्वा ताल्लब्धुं स व्रतिभिस्तपोयुक्तैः शिष्यैः सह महेन्द्राख्यं पर्वतं जगाम।

तदानीमेव सर्वमुत्सृज्य वनं जिगमिषुं क्षान्तं दान्तममित्रघ्नं महात्मानं परशुराममधिगत्य द्रोणः स्वनामकुलं च विज्ञाप्याह—महात्मन्, अयोनिजं भरद्वाजात् समुत्पन्नं वित्तकामं मामागतं विद्धीति। तस्य वचनं श्रुत्वा परशुरामः प्रोवाच—तपोधन! महाभाग द्रोण! मत्समीपस्थितं हिरण्यादि सर्वं वसुजातं सागरान्ता सपत्तना धरा च मया ब्राह्मणेभ्यः प्रदत्ता। इदानीं शरीरमात्रावशिष्टस्य मत्समीपे शस्त्राणि शास्त्राणि चावशिष्टानि! हे महाभाग! यदि त्वमेतानि वाञ्छसि तदा तुभ्यं ददामीति। तदनन्तरं एवमेवास्त्वित्युक्तवते द्रोणाय स महात्मा सरहस्यव्रतं धनुर्वेदं सर्वाण्यस्त्राणि सर्वाणि शास्त्राणि च प्रत्यपादयत्। तदनन्तरं कौरवपाण्डवयोः महत्त्वाख्यापकमाचार्यपदं लब्ध्वा 'अर्थस्य पुरुषो दास' इति नियमेन दुर्योधनपक्षतः पञ्चदिवसं यावद् युद्धं कुर्वन् धृष्टद्युम्नेन हत इति।

# मिलनसेतुः

डॉ० सुधा मुखोपाध्याय
भू० पू० रीडर (संस्कृत) बी० एच० यू०

गताङ्कादनुवर्तते

गताङ्के—जयामाधुर्योरालापः। माधुरी जयामुखात् शुक्लायाः अग्रिमवर्षे एम० ए० परीक्षोत्तीर्णतां श्रुत्वा आश्चर्यमनुभवति। उभे शुक्लाया गृहं गच्छतः। तिस्रोऽपि तत्र आलपन्त्यः स्वजीवने घटितपुर्वाः रमणीयाः घटनाः स्मरन्ति स्मारयन्ति च। इतः परं···

## चतुर्थोऽङ्कः

### ( प्रथमदृश्यम् )

( बोटानिक्यालोद्यानस्य अभ्यन्तरभागः माधुरी-जयन्त्योर्जय भ्रातुश्च प्रवेशः )

माधुरी—( जयन्तीपदे दृष्टिपातं कृत्वा ) अहो अत्याहितम्। तव पादांगुष्ठाद्रुधिरबिन्दवः पतन्ति। कदा एवं क्षतं संजातम्। कथं न किञ्चित् कथितं त्वया? शकटादवतरणकाले त्वं किञ्चित् स्खलन्ती आसीः, कथमपि स्वात्मानं पतनान्निवारितवती। किं तदैवैवं संवृत्तम्। तिष्ठ दूर्वारसप्रयोगं करोमि। (दूर्वां गृहीत्वा कराभ्यां ता मर्दयित्वा क्षते प्रयुंक्ते) अस्माकं शकटमदूर एव आस्ते, समर्थासि चेत्तदवधि गन्तुं तर्हि मम हस्तावलम्बनेन एहि शकटसमीपे गृहे प्रत्यावर्तनाय।

जया—इयमहं शष्पाच्छादितभूमावुपविशामि। जानामि, भ्रमणं तुभ्यं जयाय च भृशं रोचते। युवयोः प्रत्यावर्तनं सर्वथा मेऽनभिप्रेतम्। गच्छन्तं युवानमुद्यानभ्रमणाय अहं पादक्षतेन न क्लिश्ये। अतितुच्छमेतत् क्षतं, हृदयक्षतं तु (अपवार्य) अहो अवक्तव्यं वक्तुं प्रवृत्तास्मि चात्मनः अनीशा। ( प्रकाशम् ) रमणीयं हि स्थानमेतत् सपदि त्यक्तुं नेच्छामि। शीतलः समीरो वाति, पक्षिणः कूजन्ति। चतुर्दिक्षु वृक्षलतागुल्मपुष्पपल्लवादीनां प्राचुर्यं मां प्रीणयति। अस्मिन्नुन्मुक्तस्थाने—असीमसौन्दर्यमयी प्रकृतिर्मां नितरां सुखयति, एतस्या निर्मलता स्वच्छन्दता हृदयं प्रीणयति च। युवां कालक्षेपं न कुरुतं, गच्छतम्। मत्कृते लेशमात्रमपि न चिन्तयतम्।

उभौ—तथा ( निष्क्रान्तौ )

जया—महानगरीवासाय नाहं स्पृहयामि। मनःस्वास्थ्यलाभायैव आगताहमत्र। एवमेव स्वास्थ्यसौख्यमर्जितम्। शुक्लामुखात्पत्युस्तत् प्रणयिन्याश्चोदन्तः श्रुतः।

नानयोक्तं पतिर्मे सुनन्दायामनुरक्तो न वेति। कथं न भवेत्? सुदर्शना विदुषी तरुणी च कस्य मानसं न लोभयति? यदा कदापि स तामंगीकरिष्यति। विशेषतो नास्ति यत्र मत्कृते स्थानं तस्मिन् हृदये अन्यस्याः प्रवेशः सुकर एव। आः सम्यग् बुद्धं कथं ततः प्रत्यावर्तनान्तरं मया लिखितानां पत्राणामेकस्यापि उत्तरं न दत्तम्। नवीनानुरागमुग्धहृदयात् कथं मया उत्तरं प्राप्यते? 'विवाहित' इति सुनन्दामातुरसम्मतिरेवाधुना तयोर्मिलनप्रतिबन्धकः। पितृदेवेन सत्यमेवोक्तम् 'एवं विधशठजनेन सम्पर्को नेष्यते।' यद्वा भवतु, चिरभारग्रस्तं हृदयं ममाधुना प्रकृतयाः शोभां दर्शं-दर्शं विनोदयामि। सुखकरमिदं स्थानम् इष्टकावेष्टनेन परितो वेष्टितं माधुर्या गृहं मम श्वासं रुणद्धि एव। पदे आहता असमर्थास्मि भ्रमणे तथापि एकाकिनी अत्र आसीनाऽपि परां निवृतिमनुभवामि। ( सहसा सुव्रतस्य प्रवेशः ) क एष एतदभिमुखमागच्छति ( नेत्रे प्रमृज्य ) आः स एव, नास्ति सन्देहः।

( शेषांशः ३१ पृष्ठे )

# तपेदिक के विरुद्ध अभियान

1. यदि आपको लगातार दो हफ्तों से भी अधिक समय से खांसी है या थूक में खून आता है, तो हो सकता है, आपको फेफड़ों की तपेदिक हो।

2. अपने नजदीकी प्राथमिक स्वास्थ्य केन्द्र, औषधालय या तपेदिक केन्द्र पर स्वयं की, विशेष कर अपने थूक की, जांच कराए।




3. तपेदिक का इलाज किया जा सकता है, बशर्ते डाक्टर द्वारा बताई गई दवाइयां नियमित रूप से निर्धारित अवधि तक ली जाएं।

4. बचाव हमेशा इलाज से बेहतर है। इसलिए अपने बच्चे को बी.सी.जी. का टीका लगवाएं।




केन्द्रीय स्वास्थ्य शिक्षा ब्यूरो (स्वास्थ्य सेवा महानिदेशालय)
स्वास्थ्य और परिवार कल्याण मंत्रालय,
कोटला रोड, नई दिल्ली- 110002

davp 89/1023

पुस्तकसमीक्षा

# अशआर-रसधार (श्रेयः खण्डः)[×]

**डा० रूपनारायणपाण्डेयः**
संस्कृतप्रवक्ता, प्रभुनारायणः रा० इ० का० रामनगरम्, वाराणसी, उ० प्र०

वर्तमानकाले संस्कृतग्रन्थानां रूपान्तरणम् केवलं इतरभाषया नैव विहितम्, अपितु इतरभाषाणाम् अपि महनीयग्रन्थानां संस्कृतेन रूपान्तरणं विद्वद्भिः विधीयते। हिन्दीभाषायाः महाकवीनां गोस्वामितुलसीदासादीनाम्, आङ्लभाषायाः शेक्सपीयरप्रभृतीनां कविवर्याणां चानेका रचनाः सुरभारत्याम् अनूदिताः विलसन्तितराम्। अस्यामेव परम्परायां देववाणीसमाराधकेन श्रीमता शान्ताप्रकाशसत्यदासेन अशआर-रसधारः (श्रेयः खण्डः) प्रणीतः, यत्र विविधानाम् उर्दूभाषायाः साहित्यकाराणां 'ग़ज़ल'-गीतानां त्रीणि शतानि मनोहरपद्यानि समूलं सुरवाण्या अनूदितानि तत्समच्छन्दस्सु।

येषां कवीनां पद्यानि ग्रन्थेऽस्मिन् रूपान्तरितानि, तेषु सन्ति प्रमुखाः—कुँवरबेचैन-नश्तर-प्रदीपचौबे-माणिकवर्मा-जगदीशश्रीवास्तव-स्वामिसत्यभक्त-शाद-गालिब-दुष्यन्तकुमार-अमरीकजलबाश-फिराकगोरखपुरी-सूर्यभानुगुप्त-सुरेन्द्रशर्मा-जफर-साहिर-जहीरकुरैशी-ह० नायडू–निदाफाजली–बिस्मिलअहमकफफूंदवी–दाग-बशीरबद्र–मीनाकुमारी-कैलाशसेंगर-जरीफजबलपुरी–अकबरइलाहाबादी–गोपालप्रसादव्यास–रियाज–कृष्णमिश्र–सहबाअख्तर–इकबाल–जौकजिगर–शोलाहफीजप्रभृतयः। एतेषु पद्येषु जीवनस्यानुभूतयः ताः सन्ति, याः प्रतिदिनं मानवस्य हृदये नूतनाः प्रेरणाः सञ्चारयन्ति, नीतिमार्गं चोपदिशन्ति। रूपान्तरणस्य भाषा सरला सर्वजनग्राह्या च। प्रायशः सर्वाणि पद्यानि मूलमनुसरन्ति, किन्तु केषुचित् पद्येषु भावस्य प्राधान्यं वर्तते संस्कृतरूपान्तरे। दृश्यताम्—

(मूलम्)
'रोज कहता है कि ले चल कूच-ए-कातिल मुझे।
जूतियाँ खिलवायगा उल्लू का पट्ठा दिल मुझे॥'

(रूपान्तरम्)
'प्रमदया परकीयया मां प्रेरयति रन्तुं मनः।
पादुकानां प्रहारैर्वपुषश्चिकीर्षति दुर्दशाम्॥' (१५५)

(मूलम्)
'जिसने कुछ एहसाँ किया,
एक बोझ सर पर धर दिया।
सर से तिनका क्या उतरा ?
सर पे छप्पर धर दिया॥'

(रूपान्तरम्)
'उपकृतं किञ्चिदपि यैस्तैर्भारमेकं स्थापितम्।
तृणं यैरवतारितं तैः शिरसि वनमारोपितम्॥' (४५)

अस्मिन् रूपान्तरे व्याकरणदृष्ट्या 'भारम्' इति पदं चिन्तनीयमस्ति। घञ्प्रत्ययान्तभारशब्दोऽत्र कथं नपुंसकलिङ्गे प्रयुक्तः ?। एकस्मिन् पद्ये मम मतौ 'औरत' इति पदस्य कृते 'वामा' इति पदं न युज्यते। चिन्तयन्तु विद्वांसः—

(मूलम्)
'एक कवि ही था, कहा जिसने उसे श्रद्धा।
आममर्दों ने सदा ली अन्यथा औरत॥'

(रूपान्तरम्)
'सुकविनैकेनोक्तमासीदस्ति सा श्रद्धा।
इतरपुरुषैर्या गृहीता अन्यथा वामा॥' (२७०)

( शेषांशः ३३ पृष्ठे )

×. अशआर-रसधार : (श्रेयखण्डः), सङ्कलयितानुवादकश्च–शान्तप्रकाशः सत्यदासः। मू०–१० रूप्यकाणि। प्रथमं संस्करणम्–१९८९। पृ० सं०–७४। प्रकाशकः–कुलदीपप्रकाशन, २६११४, ताम्बावतीमार्ग, उदयपुर–३१३००१।

# प्रतिष्ठानवार्ता

## गीता-पाठ-समापन-समारोहः

विश्वसंस्कृतप्रतिष्ठानस्य बिहारशाखायाः पाटलिपुत्र-नगरसमित्या प्रतिरविवासरं सञ्चालितस्य गीतापाठस्य प्रथमचरणस्य समापनसमारोहः कङ्कडवागे अशोकनगरस्थे **"कास्मिककोचिंग-सेण्टर"** इति पाठकेन्द्रे संस्कृतमये वातावरणे संजातः।

समारोहोऽयं ९ वादनतः विधिवत्पूजनेन सह प्रारभत। द्विवादनं यावत् सम्पुट-गीता-पाठः सम्पादितः तदनन्तरं सामूहिकं भोजनं प्रचारकैः कृतम्। ततः परं समागतानां विद्वद्वराणां भाषणानि जातानि। प्रचारकैरपि गीतां संस्कृतं प्रति च निष्ठा प्रकटिता।

अवसरेऽस्मिन् द्विशताधिका जनाः समुपस्थाय समारोहमेतं सफलीकृतवन्तः। अस्य समारोहस्य प्रकाशनं विवधैः वृत्तपत्रैरपि कृता।

## संस्कृतमद्यापि व्यवहारभाषा भवितुर्मति

—श्री आर० एन० वैद्यः

"संस्कृतमद्यापि जनसामान्यस्य व्यवहारभाषा भवितुमर्हति यदि जनाः संस्कृतभाषणे भीतिं लज्जां च परिहरेयुः। संस्कृतव्याकरणं किञ्चिदिव सरलमपि करणीयम्" एते विचाराः विश्वसंस्कृतप्रतिष्ठानस्य मध्यप्रदेशशाखया इन्दौर इत्यत्र आयोजिते संस्कृतशिविरे मध्यप्रदेश-लोकसेवा-आयोगस्य सदस्येन श्री आर० एन० वैद्यमहोदयेन प्रकटिताः।

समारोहस्यास्य अध्यक्षता संस्कृतमहाविद्यालयस्य प्राचार्येण डॉ० धोलकियामहोदयेन तथा संचालनं डॉ० मिथिलाप्रसादत्रिपाठीमहोदयेन कृतम्। अन्ते प्रो० विनायकपाण्डेयमहोदयेन आभारप्रकाशनं कृतम्।

इतः पूर्वं हरिद्वारतः समागतैः स्वामि-आत्मानन्दजी महाभागैः प्रातःकालीन-आदर्श-पाठस्य अवलोकनं कृतम्। स्वामिभिः उक्तं यत् सर्वैरपि संस्कृताध्येतृभिः सम्भूय वर्तितव्यम्। एषा संसर्गस्य भाषाऽस्ति।

## प्रादेशिकसंस्कृतशिक्षकप्रशिक्षणशिविरस्यायोजनम्

विश्वसंस्कृतप्रतिष्ठानस्य मध्यप्रदेशशाखया जूनातुकोगंजस्थितपानीवालधर्मशालायां दशदिवसात्मकस्य प्रादेशिकसंस्कृतशिक्षकप्रशिक्षणशिविरस्य आयोजनम् कृतम्। अस्य उद्घाटनावसरे स्वाशीर्वचोभिः सह जैनसाध्व्या डॉ० ललितप्रभाजीमहाभागया उक्तं यत्—संस्कृतभाषा भारतीयजनजीवनस्य अनिवार्यभाषा वर्तते। अस्यां न केवलं हिन्दूधर्मस्य अपितु जैन-बौद्ध-आदिसमस्तधर्माणां साहित्यं राजते। राष्ट्रीयैकता-सदृशेषु विषयेषु सर्वथा प्रासंगिकी एतदतिरिक्ता काऽपि भाषा नास्ति।

समारोहस्य अध्यक्षता शासकीयसंस्कृतमहाविद्यालयस्य प्राचार्येण डॉ० हर्षदधोकलियामहोदयेन कृता। मुख्यातिथिषु सरस्वतीशिक्षाप्रतिष्ठानस्य प्रान्तीयसंगठनमन्त्री श्रीबापूरावः सरदेसाईमहोदयः, अहिल्यावाणी इति साप्ताहिकस्य सम्पादकः श्रीरामनारायणतिवारीमहोदयश्च प्रमुखौ आस्ताम्।

कार्यक्रमस्य शुभारम्भः कु० आशाशर्मा इत्येतस्याः सरस्वतीवन्दनया तथा प्रो० मुसलगाँवकर-महोदयस्य वेदपाठेन सह जातः।

अतिथीनां स्वागतं संस्थायाः इन्दौरशाखाध्यक्षेण श्रीआशाकुमारत्रिवेदीमहोदयेन, शिविरपरिचयः प्रादेशिकशाखायाः उपाध्यक्षेण डॉ० सीतारामदांतरेमहोदयेन, संचालनं च महामन्त्रिणा डॉ० कृष्णदेवसारस्वत-महोदयेन कृतम् । अन्ते अध्यक्ष—डॉ० लक्ष्मणनारायणशुक्लमहोदयेन कृतज्ञताज्ञापनं कृतम् ।

## पंजाबशाखायाः वृत्तम्

जालन्धरस्य साईदाससीनियरसैकेण्डरीस्कूल इत्यत्र संस्कृतप्रेमिणामेका गोष्ठी विश्वसंस्कृत-प्रतिष्ठानस्य पंजाबशाखया आयोजिता । अस्यां गोष्ठ्याम् अमृतसर-गुरुदासपुर-जालन्धर-कपूरथला-लुधियाना-प्रभृतिस्थानेभ्यः नैके प्रतिनिधयः भागं गृहीतवन्तः । सभायां निम्नलिखितप्रस्तावाः पारिताः—पंजाबस्थ-विद्यालयेषु संस्कृताध्यापकानां पदानि समाप्य पंजाबतः संस्कृतनिष्कासनस्य षडयन्त्रं यत् शिक्षाबोर्डद्वारा भवति तस्य अविलम्बं निषेधः विरोधश्च कर्तव्यः । एतद्विषयकं ज्ञापनं राज्यपालस्य सविधे दातव्यम् ।

पंजाबप्रान्ते निर्वाचने ये ये मुख्यप्रतिनिधयः सन्ति तैः सह सम्पर्कं कृत्वा तेभ्यः विश्वासो दातव्यः यत् यदि ते संस्कृतस्य पक्षधराः भवन्ति तर्हि प्रान्तस्य सर्वोऽपि संस्कृतसमाजः तेषां सफलतायै प्रयतिष्यते ।

एतादृशा अन्येऽपि विषयाः सभायां चर्चिताः । सभाया अध्यक्षता श्रीशम्भूनाथशास्त्रिमहोदयेन कृता ।

## गीताजयन्ती

होशियारपुरम् । विश्वसंस्कृतप्रतिष्ठानम् श्रीब्राह्मणसभा (रजि०) च सम्मिल्य द्विदिवसीयं गीताजयन्तीमहोत्सवं समायोजयताम् । ९।१२।१९८९ ई० दिनाङ्के रेलवेमण्डीस्थ-गीतामन्दिरे गीतागोष्ठी समायोजिता । पं० पशुपतिझामहाभागस्याध्यक्षतायां डॉ० श्यामलालडोंगरामहाभागस्याधारभाषणं जातम् । पश्चादनेके विद्वांसो विचारविमर्शमकुर्वन् ।

१०।१२।१९८९ ई० दिनाङ्के डॉ० श्यामदेवपाराशरमहोदयस्याध्यक्षतायां गीताश्लोकोच्चारण-प्रतियोगिता समायोजिता । अस्या उद्घाटनं भगिनी जगतावली कृतवती । अत्र ५ मतः ७ मकक्षापर्यन्तं प्रथमो वर्गः ८ मतः १० मकक्षापर्यन्तं च द्वितीयो वर्गः कृतः । ११५ छात्राः सहभागिनोऽभूवन् । द्वयोरपि वर्गयोः पं० अमृतानन्द-भृगुशास्त्रिस्मारकौ चलविजयोपहारौ वजवाड़ास्थ-उच्चविद्यालयेन प्राप्तौ । कु० सुमित्रा सोनी (वजवाड़ा), कु० सारिका (विद्यामन्दिरम्) तथा कु० स्वातिः (वजवाड़ा) च क्रमशः प्रथमवर्गस्य प्रथम-द्वितीय-तृतीयपुरस्कारान् विजितवत्यः । द्वितीयवर्गे कु० शीतलशर्मा (वजवाड़ा), कु० श्रुतिशर्मा (पार्वतीविद्यालयः) कु० सुचेता (वजवाड़ा) च क्रमशः प्रथम-द्वितीय-तृतीयपुरस्कारान् विजितवत्यः । विद्या-मन्दिरस्य च्छात्राः संस्कृतवन्दनागानेन श्रोतॄणां मनांसि प्रसादितवत्यः ।

अत्रैवावसरे पं० नत्थूरामशास्त्री (होशियारपुरम्), पं० ओङ्कारप्रसादः शास्त्री (मेहगरोवालः), पं० शम्भूनाथः शास्त्री (कपूरथला) च श्रीरामायुधभृगुशास्त्रिणोत्तरीयप्रदानेनाभिनन्दिताः । पुरस्काराणां वितरणं श्रीमत्या स्नेहप्रभाभृगुशास्त्रिण्या कृतम् । अत्रैव विश्वसंस्कृतप्रतिष्ठानेन गीतामन्दिरसमित्या च पञ्जाब-हिन्दी-संस्कृतविकासपरिषदे पृथक् २५०—२५१ मुद्राः समर्पिताः । भगिन्या जगतावल्या च विश्वसंस्कृतप्रतिष्ठानाय २५१ मुद्राः प्रदत्ताः । सर्वेषां कार्यक्रमाणां सञ्चालनं डॉ० दामोदरझोपाख्येन कृतम् । अन्ते श्रीब्राह्मणसभायाः प्रधानः श्रीहरिदत्तकालिया सर्वेषां सहयोगिनां कृते धन्यवादान् प्रायच्छत् । अस्य कार्यक्रमस्य विषये नगरे व्यापकरूपेण प्रशंसा विहिता ।



# शुकनासोपदेशः

चौ० श्रीनारायणसिंहः

**गताङ्कादनुवर्तते**

[पूर्वाङ्के–महामन्त्री शुकनासः यौवराज्याभिषेकात् पूर्वं समागताय चन्द्रापीडाय यथायोग्यम् उपदेशं प्रयच्छति। तस्मिन् प्रसङ्गे स सर्वप्रथमं यौवनेन सह निसर्गतः जायमानान् दोषान् प्रदर्शयति। तदनन्तरम् ऐश्वर्यप्राप्त्या उद्भूयमानान् विकारान् वर्णयति। अग्रे—]

इत्थं लक्ष्मीः परस्परविपरीतस्वरूपम् इन्द्रजालमिव निर्दिशन्ती जगति स्वकीयां विचित्रां प्रकृतिं सूचयति। अत्र अष्टाभिर्वाक्यैः लक्ष्म्याः परस्परविरुद्धानि अष्ट कर्माणि निर्दिष्टानि। यथा इयं निरन्तरम् औष्ण्यम्-उत्साहम् उत्पादयन्ती शैत्यं जाड्यम् अपि जनयति। (लोके बहुधा दृश्यते यत् तापजनकः पदार्थः शैत्यस्य उत्पादको न भवति।) जनेभ्यः उन्नतिं प्रयच्छमाना अपि लक्ष्मीः तेभ्यः नीचस्वभावं यच्छति। यद्यपि लक्ष्म्या उत्पत्तिस्थानं जलनिधिः तथापि इयं तृष्णां प्रचुरां लिप्सां वर्धयति। ईश्वरतां (प्रभुतां) सम्पादयन्ती लक्ष्मीः प्रायेण अशिक्षितता-शोषणतादीन् दुर्गुणान् जनयति। बलबुद्धि-सैन्यादिराज्याङ्गान् वर्धयन्ती अपि लक्ष्मीः प्रायशः लघुतां-कार्पण्यादीन् दोषान् समुद्भावयति। निसर्गतः मधुरस्वभावेन अमृतेन सह जाताऽपि लक्ष्मीः कटुविपाका-तीक्ष्णप्रकृतिका भवति। विग्रहवती कलहोत्पादनी अपि लक्ष्मीः प्रायेण अप्रत्यक्षा एव तिष्ठति। पुरुषोत्तमस्वरूपं विष्णुम् आश्रयन्ती अपि लक्ष्मीः खलजनं-मदादिदोषान्वितं पुरुषम् अनुसरति। गुणस्वरूपा इयं लक्ष्मीः सद्गुणसम्पन्नानपि विकारान्वितान् करोति। (क्रमशः)

---

( २७ पृष्ठस्य शेषांशः )

स्वप्ने वा जागरितौ वा च, यन्मूर्तिः भासते हृदि।
स हि विस्मर्यते नैव, युगान्तरशतेष्वपि॥
सौभाग्यरश्मिपातेन दीपितं मम जीवितम्।
येन, तेनैव तज्ज्योतिः निर्वापितं चिराय हि॥
ध्यायं ध्यायं तमेवासम् आशां हृदि निधाय हि।
प्राप्स्यामि मे हृदयेशं, न मुषितास्मि वै चिरम्॥
किन्तु हा धिक्, मम तु एवमेव भागधेयम्–
रात्रिर्गमिष्यति भविष्यति सुप्रभातम्।
भास्वानुदेष्यति हसिष्यति पंकजश्रीः॥
इत्थं विचिन्तयति कोशगते द्विरेफे।
हा हन्त हन्त नलिनीं गज उज्जहार॥

अधुना नास्ति मिलनसम्भावना न कामयेऽपि मिलनम्। एतत्पितृव्येन यदुक्तं तदेव सत्यं भवतु। नास्ति अनेन सह सम्बन्धः कोऽपि। किमनेन इयमेव दिगाक्रम्यते? अहो, किमेतत्? यदहं परिहर्तुमिच्छामि तदेव आपतति।

(क्रमशः)

# विश्वसंस्कृतम्

## संस्कृतसेवार्थं डॉ० मण्डनमिश्रः सम्मानितः

केन्द्रीयसूचना तथा प्रसारणमन्त्रिणा श्री एच० के० एल० भगत ( तत्कालीन ) महोदयेन श्रीलालबहादुरशास्त्रीराष्ट्रीयसंस्कृतविद्यापीठस्य प्रथमकुलपति–डॉ० मण्डनमिश्रमहोदयस्य विगतअक्टूबरमासे राजधान्यां विविधधार्मिकसांस्कृतिक-संस्थाभिः आयोजिते समारोहे तस्य दीर्घकालीनसंस्कृतसेवार्थम् अभिनन्दनं कृतम् । अभिनन्दनं कुर्वता श्रीभगतमहोदयेन उक्तं यत् श्रीमिश्रमहोदयेन संस्कृतसेवामाध्यमेन समाजस्य देशस्य च सेवा कृताऽस्ति । वस्तुतः इदमभिनन्दनं नहि मिश्रमहोदयानाम् अपितु संस्कृतस्य राष्ट्रस्य चास्ते ।

अवसरेऽस्मिन् केन्द्रीयकृषिशिक्षाराज्यमन्त्री श्रीहरिकृष्णशास्त्री ( तत्कालीनः ) राज्यसभासदस्य-श्रीरत्नाकरपाण्डेयप्रभृतिभिः श्रीमिश्राणां संस्कृतसेवाविषये स्वीया विचाराः प्रकटिताः ।

## पण्डितराज-जगन्नाथजयन्तीसमारोहः

दिल्लीप्रशासनस्य दिल्लीसंस्कृत-अकादमीद्वारा गत-अक्टूबरमासे प्राचीन-( पुराना ) सचिवालये पण्डितराजजगन्नाथजयन्तीसमारोहः समायोजितः । तत्र मुख्यातिथिपदेन भाषमाणाः कार्यकारीपार्षदाः ( शिक्षा ) श्री कुलानन्दभारतीयमहाभागाः उक्तवन्तो यत् पण्डितराजजगन्नाथः मुगलशासकसस्य शाहजहाँ इत्यस्य राज्यसभायाम् राजपण्डितः आसीत् । तेन दाराशिकोहस्य अध्यापनं कृतम् । पं० राजजगन्नाथेन रसगंगाधरादि-अनेकग्रन्थानां रचनां कृत्वा अतीव लोकप्रियता अर्जिता ।

समारोहस्य अध्यक्षता श्रीलालबहादुरशास्त्रीराष्ट्रीयसंस्कृतविद्यापीठस्य साहित्यविभागाध्यक्षेण श्रीमता डॉ० रमेशचन्द्रचतुर्वेदीमहोदयेन कृता । अवसरेऽस्मिन् मुख्यवक्तृरूपेण वाराणसीस्थसम्पूर्णानन्दसंस्कृतविश्वविद्यालयस्य साहित्यविभागाध्यक्षेण श्रीकैलाशपतित्रिपाठिमहोदयेन पं० राजजगन्नाथस्य व्यक्तित्वे कृतिषु च राष्ट्रीयभावनायाः विषये अतीवरोचकं व्याख्यानं प्रदत्तम् ।

## अन्तरविद्यापीठसमारोहः

लक्ष्मणपुरस्थ-केन्द्रीयसंस्कृतविद्यापीठे समायोजितस्य अन्तरविद्यापीठसमारोहस्य अवसरे विद्यापीठस्य च्छात्रान् अध्यापकांश्च सम्बोधयन् उत्तरप्रदेशस्य नगरीयविकासमन्त्रिणा श्रीविक्रमादित्यपाण्डेयमहोदयेन उक्तम् यत् संस्कृतस्य अध्ययनम् अध्यापनं च सरलपद्धत्या तथा विधेयं यथा तस्य आधुनिकयुगेऽपि उपयोगिता स्यात् । संस्कृतभाषायाः आधुनिकीकरणार्थं विविधविषयकाणि पुस्तकानि संस्कृते लेखनीयानि ।

---

( २९ पृष्ठस्य शेषांशः )

रमणीये मुद्रणेऽपि विरामचिह्नानां प्रयोगे शैथिल्यं प्रियं न प्रतीयते । देवनागरीलिप्याम् अङ्कानाम् अलेखनं संस्कृतनिष्ठान् न प्रसादयति । संस्कृते 'बाबूजी' इति शब्दप्रयोगोऽपि न रोचते ।

सावहितं परिश्रमेण प्रणीते रसधारे (श्रेयःखण्डे) कानिचित् स्खलितानि भवेयुर्नाम, तथापि उर्दूभाषायाः ग़ज़लगीतानां रम्यं रूपान्तरमिदं न केवलं संस्कृतज्ञैः संग्राह्यम्, अपितु उर्दूभाषाविद्भिः हिन्दीभाषाविज्ञैश्चापि पठनीयमस्ति । यद्यपि संस्कृतस्य विशाले वाङ्मये नीतिपद्यानामभावो न विद्यते, तथापि उर्दूभाषाया एतानि पद्यानि संस्कृतगिरा अनूदितानि तस्याः श्रीवृद्धिं कुर्वन्ति । मन्ये विनीतः सङ्कलयिता-नुवादकः च श्रीमान् शान्तप्रकाशसत्यदासो रसधारस्य प्रेयःखण्डं काव्यानि चान्यानि मधुराणि उर्दूभाषायाः संस्कृतेन प्राकाश्यं नीत्वा सुरभारतीगौरवं वर्धयिष्यति, संस्कृतकाव्यधाराम् अभिनवक्षेत्रे प्रवाहयिष्यति च । □

## संस्कृतविश्वकोशस्य प्रकाशनम्

पुण्यपत्तनस्थ डिक्कनकालेजद्वारा ऐतिहासिकसिद्धान्तानुसारिसंस्कृतविश्वकोशस्य प्रकाशनं जातम्। एषा सूचना संस्कृतविश्वकोशयोजनायाः सचिवेन श्री सी० एस० एस० मूर्तीमहोदयेन एकस्मिन् वृत्तपत्रवक्तव्ये दत्ता।

## संस्कृत-प्रतियोगितायाः आयोजनम्

दिल्लीसंस्कृत-अकादमी द्वारा दरियागंजस्थिते श्रीसमन्तभद्रसंस्कृतमहाविद्यालये संस्कृत-श्लोकान्त्याक्षरीप्रतियोगिता समायोजिता। तत्र दिल्लीस्थसमस्तसंस्कृतविद्यालयमहाविद्यालयानां १५० छात्रच्छात्राभिः भागः गृहीतः।

अस्मिन् अवसरे भारतसर्वकारस्य पूर्वरक्षासचिवः श्री के०पी०एस० मेननमहोदयः मुख्यातिथिः, मानवसंसाधनविकासमन्त्रालयस्य सहायकशिक्षापरामर्शदाता (संस्कृतम्) श्री रामकृष्णशर्मा अध्यक्षः च आस्ताम्।

## सोवियतसंघे संस्कृतम्

सोवियतसंघस्य ताशकन्दविश्वविद्यालयस्य प्राच्यविद्या-अध्ययन-संकाये संस्कृतस्य प्रवेशः जातः। तत्रत्यया एकया विद्यार्थिन्या श्रीमती इन्दिरा गाज़ियेवा इति नामिकया ताशकन्दविश्वविद्यालये कार्यरतानां दिल्लीविश्वविद्यालयस्य अतिथिप्राध्यापकानां ( Visiting Professors ) सकाशात् तत्र हिन्दीमाध्यमेन संस्कृतस्य शिक्षा गृहीता।

## संस्कृते शपथग्रहणम्

नवमलोकसभायां कैश्चित् सदस्यैः संस्कृते शपथग्रहणं कृत्वा सुरभारत्याः सम्मानः कृतः। एषु प्रमुखः भारतीयजनतापार्टीपक्षतः राजस्थानस्थपालीनिर्वाचनक्षेत्रतः निर्वाचितः तथा गोहाटीउच्चन्यायालयस्य पूर्वन्यायाधीशः श्री गुमनमललोढामहोदयः अस्ति। तेन निर्वाचनानन्तरं दिल्लीं गत्वा सांसदानां सम्मुखे संस्कृते शपथग्रहणाय प्रोत्साहनं कृतम्। तस्य प्रोत्साहनेन नैके संसदसदस्याः संस्कृतभाषायामेव स्वशपथं गृहीतवन्तः। विश्वभाषापरिवारः तेभ्यः सर्वेभ्योऽपि सदस्येभ्यः अभिनन्दनं प्रेषयति।





# आज़ादी के स्तम्भ

नवम्बर के तीसरे हफ्ते में
भारत के लाखों स्त्रियों व पुरुषों ने,
युवाओं और वृद्धों ने
अपने मताधिकार का प्रयोग किया।
यहां सत्ता-परिवर्तन कई
अन्य देशों की तरह नही,
बल्कि लोकतांत्रिक तरीके से,
निर्बाध रूप से पर बड़ी तेजी से हुआ।
इस चुनाव से हमने एक बार फिर
सारी दुनिया को दिखा दिया कि
स्वतंत्रता और लोकतंत्र में
हमारी कितनी आस्था है,
और इससे हमें कितनी ताकत मिली है।
हमने आज़ादी व आस्था की
जो मशाल जलाई है,
उसे हम सदा प्रज्ज्वलित रखेंगे।





**जनता की आवाज़**
**राष्ट्र की आवाज़**

डीएवीपी 89/968

विज्ञानवलोकः

# आधुनिकविज्ञानं तस्य विविधाः शाखाश्च

डा० रूपनारायणपाण्डेयः
संस्कृतप्रवक्ता, प्रभुनारायण रा० इ० का० रामनगरम्, वाराणसी, उ० प्र०

विज्ञानं प्रकृतेः रहस्यं व्यवस्थितरूपेण प्राकाश्यं नयति। वर्तमानकाले सर्वत्र विज्ञानस्य प्रभुत्वं विराजते। यद्यपि भारते पुराकालेऽपि गणित-रसायनायुर्वेदप्रभृतयोऽनेकाः विज्ञानस्य शाखाः आसन्, यासु भारतीयैर्विज्ञानविद्भिः स्वकीयया विलक्षणप्रतिभया अनेके ग्रन्थाः प्रणीताः, तथापि साम्प्रतं पाश्चात्य-विद्वज्जनैर्विज्ञानक्षेत्रे या प्रगतिः कृता, सा सुरभारत्यां न विराजते। वैज्ञानिकैर्विज्ञानस्य विविधशाखासु यन् नवीनम् अनुसन्धानं विधीयते, तत् संस्कृते, अन्यासु च भारतीयासु भाषासु विलसतु-येन अस्माकं परम्परा स्वभाषया तद् अनुसन्धानं जानातु—इति नितराम् अपेक्ष्यते। संस्कृतज्ञा विद्वांसो येषां विज्ञानक्षेत्रे अध्ययनं वर्तते, अथवा येषां विज्ञानस्य कस्यामपि शाखायाम् अभिरुचिरस्ति, ते स्वलेखन्या, प्रज्ञया प्रतिभया च वैज्ञानिकं साहित्यं संस्कृतेन प्रणयन्तु; यस्मात् सुरभारतीसमाराधनायाः नूतनापेक्षा सम्भवेत्। लघुलेखेऽस्मिन् कासामपि विज्ञानस्य शाखानामेकं विवरणं प्रस्तूयते। विद्वांसः एतासु शाखासु स्वाध्ययनम् अनुसन्धानं वा भारतीयविज्ञानदृष्ट्या पाश्चात्यविज्ञान-दृष्ट्या वा प्रस्तूय सुरभारतीं संवर्धयन्तु।

१. शरीरव्यच्छेदशास्त्रम् (Anatomy)–शरीरस्य संरचनामाश्रित्य शाखेयं प्रवर्तते।

२. ध्वनिशास्त्रम् (Acoustics)—ध्वनिविषयकमध्ययनमत्र क्रियते।

३. मानवजातिशास्त्रम् (Anthropology)—अत्र मानवस्य विकासः कथमभूत् ? का रीतिः, कः इतिहासः ? काश्च परम्पराः—इति विवेच्यते।

४. अन्तरिक्षविज्ञानम् (Astronautics)—अन्तरिक्षयात्रायां प्रयुक्तानि यानानि अधिकृत्य शाखेयं प्रवर्तते।

५. ज्योतिषम् (Astrology)—मानवानामुपरि ग्रहाणां प्रभावमधिकृत्य शाखेयं वर्धते। भारते शास्त्रमिदं सुचिन्तितमस्ति।

६. खगोलशास्त्रम् (Astronomy)—इयं शाखा आकाशस्थितपिण्डानामध्ययनं करोति।

७. खगोलभौतिकी (Astrophysics)—खगोलशास्त्रस्य इयं शाखा नक्षत्राणां भौतिकीं प्रकृतिं रासायनिकीं रचनां चाधीते।

८. स्वयंचलद्यन्त्रशास्त्रम् (Automation)—अत्र स्वचालितयन्त्राणामध्ययनं विधीयते।

९. वायुयानशास्त्रम् (Aeronautics)—वायुयानानि समाश्रित्य शाखेयं प्रयाति। 'यन्त्रसर्वस्वम्' इति ग्रन्थे विषयोऽयं भारते पूर्वं चिन्तितोऽस्ति।

१०. रोगजन्तुशास्त्रम् (Bacteriology) अत्र रोगजन्तूनामध्ययनं भवति।

११. जीवविज्ञानम् (Biology)—अत्र जीवानां वनस्पतीनां चाध्ययन विधीयते।

१२. प्राक्षेपिकी (Ballistics)—अन्तरिक्षप्रक्षेपान् आश्रित्य शाखेयं प्रचलति।

१३. वनस्पतिशास्त्रम् (Botany)—जीवविज्ञानस्य इयं सा शाखा, यत्र वनस्पतीनाम् अध्ययनं भवति।

१४. व्यायामशास्त्रम् (Callisthenics)—अत्र शारीरिकसौन्दर्यं शक्तिश्च कथं वर्धताम् इति प्रतिपाद्यते ।

१५. कालनिर्णयविज्ञानम् (Chronoloy)—कालक्रमेण पुरावृत्तविवरणमत्र प्रस्तूयते ।

१६. रसायनविज्ञानम् (Chemistry)—अत्र विविधानां यौगिकानां पदार्थानां च गुणा विवेच्यन्ते ।

१७. संसृतिविज्ञानम् (Cosmology)—संसृतिमाश्रित्य शाखेयं प्रवर्तते ।

१८. सृष्टिचित्रणम् (Cosmography)—पृथिव्याः वैशिष्ट्यमत्र मानचित्रेषु प्रदश्यते वर्ण्यते च ।

१९. सृष्टिविज्ञानम् (Cosmogony)—सृष्टिः कथमभूत्—इति विषयमधिकृत्य शाखेयं प्रवधते । भारते विज्ञानमिदं पुरा बहु चिन्तितमासीत् ।

२०. कोशिकाशास्त्रम् (Cytology)—अत्र कोशिकानामध्ययनं क्रियते ।

२१. जनाङ्किकी (Demography)—समुदायस्य दशाप्रदर्शनाय जन्ममृत्युरोगादीनां संख्यावर्णनं विश्लेषणं चात्र क्रियते ।

२२. पारिस्थितिकी (Ecology)—शाखेयं जीवानां वनस्पतीनां प्राकृतिकं सम्बन्धं (पर्यावरणम्) अधीते ।

२३. कीटविज्ञानम् (Entomology)—कीटानां निरूपणं शाखायामस्यां सम्पद्यते ।

२४. महामारीविज्ञानम् (Epidemelogy)—अत्र रोगाः तेषां निदानं च निरूप्यन्ते ।

२५. नृवंशशास्त्रम् (Ethnology)—मानवप्रजातयस्तासां सम्बन्धश्चात्र विवेच्यन्ते ।

२६. भ्रूणशास्त्रम् (Embryology)—अस्यां शाखायां गर्भ भ्रूणविकासक्रमोऽधीयते ।

२७. मनुजस्वभावोत्कर्षशास्त्रम् (Eugenics)—मानवजातिपरिष्कारार्थं वंशपरम्परां नियन्तुमियं शाखा प्रवर्तते ।

२८. आनुवंशिकी (Genetics)—वंशपरम्परामाश्रित्य शाखेयं प्रगच्छति ।

२९. भूगर्भशास्त्रम् (Geology)—भूगर्भस्य संरचनादिकमत्र विचिन्त्यते ।

३०. भूगणितम् (Geodesy)—अत्र पृथिव्या आकारक्षेत्रफलादिकं निर्णीयते ।

३१. वंशवृक्षविज्ञानम् (Genealogy)—अत्र प्राणिनां वंशपरम्परा वृक्षरूपेण प्रदर्श्यते ।

३२. उदरसेवा (Gastronomy) (आहारशास्त्रम्)-आहारमवलम्ब्य शाखेयं वर्तते ।

३३. स्त्रीरोगशास्त्रम् (Gynaecology)—अत्र स्त्रीणां गुप्तरोगादिकं निरूप्यते ।

३४. जलोपचारः (Hydropathy)—जलेन रोगनिवारणमत्र प्रतिपाद्यते ।

३५. समुद्रवेलादिविवरणम् (Hydrography)—जलस्य वैज्ञानिकं विवरणमत्र प्रस्तूयते ।

३६. उद्यानविद्या (Horticulture)—शाखेयं वृक्षादयः कथम् आरोप्यन्ते—इति प्रतिपादयति ।

३७. आरोग्यविद्या (Hygiene)—अस्यां शाखायामारोग्योपलब्धिर्विवेच्यते ।

३८. कालशास्त्रम् (Horology)—कालपरिमाणमनेन शास्त्रेण विधार्यते ।

३९. सूर्यचिकित्साशास्त्रम् (Heliotherapy)—सूर्यस्नानेन रोगनिवारणं चिन्त्यते ।

४०. कोषरचना (Lexicography)—कोषनिर्माणमत्र प्रतिपाद्यते ।

४१. धातुशोधनम् (Metallurgy)—अत्र खनिजेभ्यो धातुप्राप्तिविधिर्निर्धार्यते ।

४२. वायुविद्या (Meteorology)—अत्र वायुमण्डलस्य क्रियाः अधीयन्ते ।

४३. कवकविज्ञानम् (Morphology)—गोमयजादीनामध्ययनमत्र भवति ।

४४. शिराशास्त्रम् (Neurology)—मानवशरीरस्य नाडीतन्त्रस्याध्ययनमत्र क्रियते ।

४५. मुद्राशास्त्रम् (Numismatics)—मुद्राणां वैज्ञानिकमध्ययनमत्र प्रस्तूयते ।

४६. दन्तशास्त्रम् (Odontology)—दन्तानामध्ययनमस्यां शाखायां भवति ।

४७. दृक्शास्त्रम् (Optics)—इयं शाखा प्रकाशस्य स्वभावं गुणं चाधीते।

४८. पक्षिशास्त्रम् (Ornltnology)—पक्षिणां स्वभावादीनि शाखेयं प्रतिपादयति।

४९. अस्थिशास्त्रम् (Osteology)—अस्थीनि समाश्रित्य शाखेयं प्रवर्तते।

५०. अस्थिचिकित्साशास्त्रम् (Osetopathy)—अस्थिविकाराणां निदानमत्र क्रियते।

५१. रोगनिदानशास्त्रम् (Pathology)—अत्र शरीररोगाणां निदानं निश्चीयते। भारतेऽस्य शास्त्रस्य विपुलं प्रमाणिकमध्ययनं वर्तते।

५२. ध्वनिशास्त्रम् (Phonetics)—वर्णानामुच्चारणमत्र विचार्यते। विज्ञानमिदं भारते प्रातिशाख्यग्रन्थेषु शिक्षाग्रन्थेषु च सुचिन्तितमस्ति।

५३. मस्तिष्कशास्त्रम् (Phrenology)—मानवमस्तिष्कस्य विश्लेषणमत्र भवति।

५४. दण्डशास्त्रम् (Penology)—दण्डसिद्धान्ताः, कारागारव्यवस्थाश्चात्र निरूप्यन्ते। भारते शास्त्रमिदं मन्वादिस्मृतिषु अर्थशास्त्रे च सुनिरूपितमति।

५५. शिक्षणशास्त्रम् (Pedagogy)—शिक्षणसिद्धान्तादयोऽत्र समीक्ष्यन्ते।

५६. भाषाशास्त्रम् (Philology)—भाषाणां तुलनात्मकमध्ययनमत्र क्रियते। शास्त्रेऽस्मिन् यास्कपाणिनिपतञ्जलिप्रभृतीनां भारतीयानाम् आचार्याणां विशिष्टं स्थानं वर्तते।

५७. प्राण्योषधिजीवनशास्त्रम् (Physiology)—जीवानां वनस्पतीनां च संरचनाः कार्याणि चात्र निरूप्यन्ते।

५८. भूवर्णनम् (Physiography)—प्राकृतिकदृश्यानां क्रियाणां चाध्ययन करोतीयं शाखा।

५९. मुखाकृतिशास्त्रम् (Physionomy)—वदनाकृत्यात्र मनुष्यस्य चरित्रमवगम्यते।

६०. फलशास्त्रम् (Pomology)—फलानामध्ययनमत्र विधीयते।

६१. हस्तरेखाशास्त्रम् (Palmistry)—हस्तरेखाभिर्मनुष्यस्य भविष्यज्ञानमत्र क्रियते। पुराकालाद् भारते शास्त्रमिदं पठ्यते।

६२. भूकम्पशास्त्रम् (Seismology)—भूकम्पानां विश्लेषणमत्र क्रियते।

६३. भेषजशास्त्रम् (Therapeutics)—रोगोपचारस्य विमर्शोऽत्र भवति।

६४. स्थानवर्णनम् (Topography)—कस्यापि स्थानस्य भौतिकलक्षणानां मानचित्रेण चित्रणमत्र प्रस्तूयते।

६५. विषशास्त्रम् (Toxicology)—विषाणां लक्षणप्रभावादोन्यत्र चिन्त्यन्ते।

६६. विषाणुविज्ञानम् (Virology)—विषाणूनामध्ययनमत्र सम्पद्यते।

६७. जन्तुविज्ञानम् (Zoology)—जीवविज्ञानस्य शाखेयं जन्तून् अधीते।

उपरिलिखिता विज्ञानशाखा विहाय अन्या अपि शाखाः प्रशाखाश्च साम्प्रतं विज्ञानजगति वर्तन्ते, नवा नवाश्चाविष्क्रियन्ते। अत्र प्रस्तुतासु काश्चन शाखाः प्रशाखाश्च भारते पुराकाले अपि आसन्, साम्प्रतमपि ताः विलसन्ति*। विद्वद्‌र्यैः ताः सर्वाः प्राचीनाः, नवीनाश्च समीक्ष्य स्वमत्यनुसारं संस्कृते वैज्ञानिकसाहित्यस्यावतरणं विधेयम्। जयतु संस्कृतम्, संस्कृतिश्च। □

* इदमपि ज्ञातव्यमस्ति यद् विज्ञानानामपि विज्ञानं गणितं भारते सम्यगधीतमभूत्। दशमलवपद्धतिः, रेखागणितस्य केचन सिद्धान्ताः, बीजगणितम्, ज्यामितिः—इत्यादयो विविधाः गणितस्य सिद्धान्ताः शाखाश्च भारते संस्कृतविद्वद्भिः प्रथम निरूपिताः, संवर्धिताश्च। क्षेत्रेषु एतेषु पाश्चात्याः पण्डिता अपि भारतस्य योगदानं सततं स्वीकुर्वन्ति। आधुनिकयुगेऽपि 'वैदिकगणितम्' इति ग्रन्थरचनया भगवत्पादशङ्कराचार्येण चकितचकिताः कृताः पाश्चात्याः विद्वांसः।

# अक्षरबन्धः

## ( प्रतियोगिता )

**प्रस्तोता—चोड्डरी उपेन्द्र रावः**

| | | | | | |
|---|---|---|---|---|---|
| व | म | ल | सू | रिः | भा |
| क्रो | [१]**पा** | हि | सा | भ | सः |
| क्ति | भो | **णि** | म | य | ट्टिः |
| जी | बा | जः | **निः** | भ | णः |
| वि | णः | सः | भा | भ | ट्टः |
| तं | व्या | जो | क्तिः | म | णिः |
| रा | ज | शे | ख | रः | हः |

**विषयाः**

१. मुनित्रये अन्यतमः वैयाकरणः ।
२. विजयनगरप्रभोः हरिहररायस्य समकालिकः प्रख्यात वेदभाष्यकर्ता ।
३. 'चम्पूरामायण' कर्ता कविः जनाश्रयभूतः नरेशः ।
४. ध्वनिसिद्धान्ते असन्तृप्तः प्रसिद्धनैयायिकः ।
५. औचित्यविचारचर्चाकर्तुः काव्यजीवितम् ।
६. 'बालरामायण'रचयिता कविशेखरः ।
७. कृष्णद्वैपायनोऽसौ ।

**अक्षरबन्धविभागः**
**विश्वभाषा, दुर्ग—रामनगरम् वाराणसी-८**

पृष्ठेऽस्मिन् वामभागे चतुष्कोणे कोष्ठके कानिचन अक्षराणि दृश्यन्ते । तेषु अक्षरेषु केचन साहित्य-सम्बन्धिनः विषया गुप्ताः सन्ति ।

तस्य अधः क्रमशः ससंख्याकाः केचनविषया सन्ति । तेषाम् आधारेण तान् विषयान् उपरिस्थितेषु कोष्ठकस्थ-अक्षरेषु प्रदर्शयन्तु ।

कथं वा प्रदर्शनीयम् इति एकम् उदाहरणम् अपि वयं दत्तवन्तः । तद् उदाहरणं मनसि निधाय, अवशिष्टानि नामानि रेखांकितानि कुर्वन्तु ।

एवम् एतत् क्विज सम्पूर्य—अधःस्थितं कूपनम् अपि सम्पूर्य वामभागं सर्वं रेखानिर्दिष्टस्थलेषु परितः कर्तयित्वा, २५–७–९० दिनाङ्काभ्यन्तरे अधोनिर्दिष्ट-संकेतानुसारं प्रेषयन्तु । स्पर्धायाः अस्याः कृते एकशतं रूप्यकाणि दातव्यानि इति निश्चितम् । अतएव चत्वारः विजेतृरूपेण उद्घोषिताः भविष्यन्ति । यदि चतुर्भ्यः अधिकाः उत्तमपूरकाः भविष्यन्ति, तर्हि 'लाटरी' पद्धतिद्वारा चतुर्णां नामानि निष्कास्य ते एव विजेतारः इति उद्घोष्य तेषामेव पुरस्कारान् प्रेषयिष्यामः । यदि चतुर्षु अपि एकः-द्वौ-त्रयः एकेन दोषेण दोषद्वयेन दोषत्रयेण वा प्रेषयन्ति, तदा द्वितीय-तृतीय-पुरस्काराः भविष्यन्ति ।

विजेतॄणां चतुर्णां कृते एकैकस्य पञ्चविंशति-रूप्यकपरिमितानि पुस्तकानि प्रेषयिष्यामः ।

अनेन सह स्वपूर्ण-सङ्केत-युक्तं पत्रालयचीटिका-(Stamp) सहितं पत्रपुटकम् (Envelope) अपि प्रेषयन्तु ।



# दिव्यकार्यनिरता भवाम ते

वी० कृष्णशर्मा

( प्रतिष्ठानस्य केरलशाखायाः दिवंगतं महामन्त्रिणं श्री के० एन० मेनन् महोदयं प्रति श्रद्धाञ्जलिः )



अश्रुपूर्णनयना मनस्विनी दुःखजीर्णहृदया च भारती।
मेननस्य विरहेण दुःखिता दृश्यते रुदितशोषितानना ॥ १ ॥

स्नेहगद्गदमृदुस्वनं प्रतिष्ठानविह्वलविशालवीक्षणम्।
श्मश्रुधौतमृदुमोहनाननं मानसेषु परिभासते हि नः ॥ २ ॥

सज्जनौघमति घोरसङ्कटाद् रक्षितुं जगति पर्यटन् भवान्।
देववाङ्मयसमग्रपोषणे न्यस्तजीवितसमस्तपौरुषः ॥ ३ ॥

स्वर्गतस्य भवतः समुज्ज्वलं ध्येयमाशु परिपोषयिष्णवः।
सन्ततं वयमतीव निष्ठया दिव्यकार्यनिरता भवाम ते ॥ ४ ॥



## भारत-शासनस्य वृत्तपत्र-विषयक-नियमम् अनुसृत्य फेब्रुआरी मासोत्तरं प्रथमाङ्के प्रकाशनीयं विश्वभाषा-स्वामित्वादि-विषयकं निवेदनम्

( तुरीयं परिपत्रकम्, अष्टमः नियमः )


| | |
|---|---|
| (१) प्रकाशन-स्थलम् | : विश्व-संस्कृत-प्रतिष्ठानम्, रामनगर दुर्गः, वाराणसी–२२१००८ |
| (२) प्रकाशन-समयः | : त्रैमासिकः–१५ अगस्त, दीपावलिः, २६ जनवरी, बुद्धपूर्णिमा। |
| (३) मुद्रक–नाम | : देवदत्तः |
| मुद्रक–राष्ट्रियता | : भारतीया |
| मुद्रक–निवासः | : विश्व-संस्कृत-प्रतिष्ठानम्, रामनगर दुर्गः, वाराणसी–२२१००८ |
| (४) प्रकाशक–नाम | : देवदत्तः |
| प्रकाशक–राष्ट्रियता | : भारतीया |
| प्रकाशक–निवासः | : विश्व-संस्कृत-प्रतिष्ठानम्, रामनगर दुर्गः, वाराणसी–२२१००८ |
| (५) संपादक–नाम | : पण्डितः गुलाम दस्तगीर अब्बास अली विराजदारः |
| संपादक–राष्ट्रियता | : भारतीया |
| संपादक–निवासः | : हजरतगंज पीर दरगाह, बरळी बंबई–४०००२८ |
| (६) पत्र–स्वामी | : विश्व-संस्कृत-प्रतिष्ठानम्, रामनगर दुर्गः, वाराणसी–२२१००८ |

अहं देवदत्तः सविश्वासं प्रकटीकरोमि यद् उपरितनं विश्वभाषास्वामित्वादिविषयकंनिवेदनं सत्यं विद्यते इति।

दिनाङ्कः बुद्धपूर्णिमा वि० सं० २०४७ प्रकाशकः–देवदत्तः

# परमपावनश्रीदलाईलामा-द्वारा स्वीकृति प्रवचनम्

## ( १० दिसम्बर १९८९ )

भाषान्तरकारः—काशी दोण्डुपः,
के० उ० ति० शि० संस्थानम्—सारनाथ, वाराणसी

अत्रभवन्तो, नोबेलसमितिसदस्याः, भ्रातरो, भगिन्यश्च।

अद्य भवतां समक्षं मया नोबेलशान्तिपुरस्कारः संप्राप्तः। अस्मात् कारणाद् अहम् अपारं हर्षम् अनुभवामि। मह्यं तिब्बतदेशीयाय एकस्मै साधारण-भिक्षवे योऽयं महत्त्वपूर्णः पुरस्कारः समर्पितः, तस्य फलस्वरूपम् अहं विनतः सन्नात्मानं सम्मानितं अनुभवामि। नाहमस्मि कश्चिद् विशेषगुणसम्पन्नः। परन्तु अहं विश्वसिमि यद् अयं पुरस्कारः अमूल्यायाः परार्थचिन्तायाः, मैत्र्याः, करुणायाः, अहिंसायाश्च एकमात्रमभिज्ञानमस्ति। अहं सततं व्यवहारे एतानेव गुणान् प्राप्तुं चेष्टापरायणोऽस्मि। मम अयं व्यवहारः बुद्धानुशासनम् एवं भारततिब्बतयीमहात्मनां मतमनुसरति।

सर्वत्र पीडितानां, स्वतन्त्रतायाः प्राप्तिहेतवे सततं संघर्षरतानाम्, विश्वशान्तिकामानां सर्वेषां जनानां पक्षतः अहम् अमुमद्वितीयं पुरस्कारं गम्भीर-कृतज्ञतया सह स्वीकरोमि। एकस्मै महामानवाय उपहारस्वरूपेण अहममुं पुरस्कारमङ्गीकरोमि। येन परिवर्तनहेतवे अहिंसाया आधुनिकपरम्परा प्रवर्त्तिता। यश्च "महात्मागान्धी" इति नामतः प्रसिद्धः। तस्यैव जीवनेन अहमिमां शिक्षां प्रेरणां चेमां प्राप्तवान्। अहं षष्टिलक्षतिब्बतदेशीयवीर-पुरुषाणां महिलानां य पक्षतोऽपि अमुं स्वीकरोमि यैः असीमदुःखानि सोढानि, निरन्तर साम्प्रतमपि दुःख सह्यते। तिब्बतदेशः स्वतन्त्रो भविष्यति यदि वय सत्य-उत्साह-विश्वासादीन् शस्त्ररूपेण धारयिष्यामः।

वयं संसारस्य कस्माद् भागात् समागतवन्तः, इत्यत्र कोऽपि अभिप्रायः नास्ति, मूलतो वयं समानाः मानवजातीयाः स्मः। वयं सर्वे सुखं वाञ्छामः, दुःखतो मुक्तिं च। अस्माकं मौलिकमानवावश्यकताः समानाः एव वर्तन्ते। सर्वे प्राणिनः स्वातन्त्र्यमभिलषन्ति। सहैव ते सामाजिकरूपेण व्यक्तिगतरूपेण वा स्वदेशविषये आत्मनिर्णयस्य अधिकारं समीहन्ते। अयं मानवीयः स्वभावः। पूर्वीययूरोपतः अफ्रीकापर्यन्तं सर्वत्र जगति यानि महान्ति परिवर्तनानि दृश्यन्ते तानि सर्वाणि अस्यैव लक्षकाणि।

ऐषमो जूनमासे चीनदेशे केनचिद् चीनीछात्रेण अन्यैश्च प्रजातन्त्रस्य याचनायै जनान्दोलनमारब्धम् तद्रक्तं चीनीयैः हिंसात्मक-दमनात्मकनीतिद्वारा नियन्त्रितम्। परन्तु इदं जनान्दोलनं व्यर्थं नाभूत्। तस्य फलस्वरूपं न केवलं चीनीजनतासु अपितु विश्वस्यापि जनतासु स्वतन्त्रता-संघर्षार्थं मनोबलं समृद्धम्। यच्चीनीयैरस्वीकर्तुं न शक्यते। तैर्वीरच्छात्रैः तेषां समर्थकैश्च चीनीजनतायाः विश्वजनतायाश्च समक्षं स्वराष्ट्रस्य मानवतायाः प्रतिबिम्बः प्रदर्शितः।

गतसप्ताहे, असंख्याः निर्दोषतिब्बतीयजनाः पुनः चीनीशासकैः कारागारे निगृहिताः, येषां 'अपराधः' केवलं देशस्य स्वतन्त्रतायाः, सुरक्षायाश्च याचनायै आत्मविचारव्यक्तीकरणप्रसङ्गेन सह सम्बद्ध आसीत्।

व्यतीतचत्वारिंशद्-वर्षाभ्यन्तरे तिब्बतीजनद्वारा यानि सोढानि कष्टानि तानि सर्वे विदन्ति। अस्माकमयं संघर्षः चिरकालव्याप्तो बभूव। वयं जानीमः यद् अस्माकमाधारः सत्यमस्ति। यतोहि हिंसात्मक-दमनात्मकनीतिद्वारा सामाजिकसमस्यानां समाधानं न स्यात्, तेन तु समस्याः अनुवर्धन्ते। अर्थात् हिंसया हिंसा उत्पद्यते, अतएव अस्माकं संघर्षः अहिंसात्मकः शान्तिपूर्णश्च वर्तते। वयं स्वजनस्य दुःखान्तकरणे

यथासम्भवं चेष्टां कुर्मः, येन ते परदुःखस्य हेतव न स्याम। इदं विज्ञाय मया बहुबारं तिब्बतचीनयोर्मध्ये मैत्रीभावना प्रस्ताविता। १९८७तमे वर्षे, मया-प्रस्ताविता पञ्च-सूत्रीययोजना, यस्यां शान्तेः, सुरक्षायाः तिब्बतीयमानवाधिकारस्य विषये विचाराः प्रकाशिताः। एभिः सह तिब्बतं खलु शान्तिक्षेत्रं भूयात्, तस्य च फलस्वरूपे सर्वे प्राणिनः शान्त्या ऐक्येन च जीवितुमर्हन्ति।

गतवर्षे स्ट्रैसवार्गे मया एषा योजना विस्तरेण यूरोपीयसंसदि प्रस्तुता। ममायं विश्वासोऽस्ति यद् मया तस्मिन् अवसरे ये हि विचाराः व्यक्तीकृतास्ते सर्वे सत्यात्मकाः कारणात्मकाश्चासन्। पुनरपि ममैव जनैः तस्य घोरविरोधः कृतः। दौर्भाग्येण, चीनीशासनेन मम प्रस्तावे किमपि विशेषरूपेण ध्यान न दत्तम्; यस्मिन् महत्त्वपूर्णानि तथ्यानि सम्मिलितानि आसन्। यदि एवं निरन्तरं भविष्यति तदा अस्माभिरपि अस्मिन् प्रसङ्गे पुनः पुनः किमपि विचारणीयं भविष्यति।

तिब्बतचीनयोः मध्ये कापि मैत्रीभावना, समानता-विश्वास-परस्पर लाभेषु, आधारिता भवेत्। ८२३ ए० डी० तः पूर्वं तिब्बतचीनयोः कुशलशासकैः परस्परं विचारविमर्शः प्रवर्तितः तस्मिन्नपि आधारितः स्यात्। स्तम्भे अक्षरेषु लिखितः सोऽधुनापि 'जोखङ्ग' समक्षे स्थितः। तिब्बतदेशस्यायं राजधान्यां ल्हासायां तिब्बतस्य पवित्रतमदेवालयः परिज्ञायते।

तस्मिन् स्तम्भे इदं लिखितम्—

"तिब्बतीजनाः स्वपितृभूमौ तिब्बते सुखेन स्थास्यन्ति, चीनीजनाश्च स्वमहाभूमौ चीनदेशे सुखेन स्थास्यन्ति।"

इति ॥

एकबौद्धभिक्षुवशात् मानवपरिवारस्य यावन्तः सदस्याः सन्ति, अथवा अन्ये च ये सत्त्वाः दुःख-सागरे मज्जन्ति तान् सर्वान् प्रति मम मनसि चिन्ता व्याप्तास्ति। मदीयोऽयं विश्वासः यद् सर्वेषां दुःखानाम् एकमात्रं कारणमज्ञानमस्ति। मनुष्यः स्वार्थाय परार्थं विस्मृत्य परजनान् दुःखं कष्टं ददाति आत्मसुखाय आत्मसन्तोषाय च। वास्तविकसुखस्य समुत्पत्तिः केवलमान्तरिकशान्त्या संतोषेण च भवति।

यावत्यः समस्याः अस्माकं समक्षं प्रकटिता भवन्ति, यथा—हिंसात्मकः विषयः, स्वभावस्य विनाशः, क्षुधादिकम्, तासां सर्वासां मानवप्रयत्न-द्वारा समाधानं भवितुमर्हति। सम्प्रति अपेक्ष्यते परस्परदायित्वनिर्वाहस्य व्यवहारेऽवतारणम्। यद्यपि अहं जानामि यद् बौद्धधर्मः मैत्रीकरुणायोः उत्पादविषये क्षमः अस्ति, पुनरपि ममैव प्रतीतिः अस्ति यद् प्रत्येकप्राणी शुद्धचित्तस्य उत्थानं कर्तुं शक्नोति। अनेन सह स संसारदायित्वस्य चेतनां ज्ञातुं शक्नोति।

साम्प्रतमस्माकं जीवनं सर्वतः विज्ञानस्य प्रगति-मार्गे निरन्तरमग्रसरं भवति। धर्मः धार्मिकश्च अस्माकं मानवतायाः अनुस्मरणस्य मुख्यभूमिकां निर्वहति। इमौ परस्परं सम्बद्धौ। मम मानसेऽयं विश्वासः यद् सर्वे धर्माः समानलक्ष्यस्यानुसरणं कुर्वन्ति—"बहुजनसुखाय, बहुजनहिताय च"। व्यवहारे तु परस्परं भिन्नता भवितुमर्हति परन्तु परिणतिः लक्ष्यं च समानं वर्तते।

अस्य शतकस्य यस्मिन् अन्तिमदशके अस्माकं प्रवेशः स्यात् तत् प्राचीनमूल्यभावनानां एकविंशति-शतकं साहायकं स्यात्। यच्च सुखान्तमेव भविष्यति।

अहं सर्वाणि पीडकानि मित्राणि प्रार्थये, मानवे पारस्परिक-मैत्र्यास्तथा करुणायाः भावनया एव वयं विश्वनिर्माणहेतवे सफलतां प्राप्तुं शक्नुमः, अनेन माध्यमेन च वयं विश्वस्यासंख्यप्रणिनां दुःखानि दूरीकर्तुं प्रभवामः।

सधन्यवादम्।

१० दिसम्बर, १९८९ ई०

## परमपावनश्रीदलाईलामाद्वारा तिब्बतस्य स्वातन्त्र्याय यथा २० सितम्बर १९८७ वर्षे वाशिंगटननगरे कांग्रेसे मानवाधिकारमण्डलस्य सम्मुखे प्रस्तावाः उपस्थापिताः ते भवन्ति—

१. तिब्बतं खलु शान्तिक्षेत्रं भूयात् ।

२. तिब्बते चीनीजनाः स्थानान्तरणेन नैव आनेया येन तिब्बतीयानामस्तित्वं विनश्येत् ।

३. तिब्बतीयजनानां मानवाधिकाराणां गणतान्त्रिक-स्वातन्त्र्यस्य च संरक्षणं भवेत् ।

४. तिब्बतस्य प्राकृतिकी सम्पत् पूर्ववदारक्षणीया परमाण्वनुबन्धीनि अवकरजातानि नैव तत्र आनेतव्यानि ।

५. तिब्बतचीनयोः सम्पर्कः गम्भीरविचारेण करणीयः । इति ॥



## त्वया विना !!

डॉ० राजेन्द्र मिश्रः

नहि जगदतिरुचिरं त्वया विना
जीवितमपि न चिरं त्वया विना !!
तव भालतिलकक्रुपयानुदिनम्
गगने चकास्ति ननु विधुवदनम्
न भवेन्मधु मदिरं त्वया विना !!
त्वदधरयुगलेन विहितविमलम्
उपमानभाग्भवति बिम्बफलम्
विजनं लसदजिरं त्वया विना !!
तव नयनभङ्गलीलाललितम्
दृश्यतेऽखिलं वलितं वलितम्
गायनमपि बधिरं त्वया विना !!
तव पाणिसरोरुहसंस्पृष्टम्
वपुरिदं भाति सुधयाविष्टम्
यौवनमपि विधुरं त्वया विना !!
तव मधुरस्मृतिलालसालसम्
चैतन्यमिदं वरतनु ! विवशम्
दिनमपि निर्मिहिरं त्वया विना
नहि जगदतिरुचिरं त्वया विना !!



## चन्द्रोदयः
### ( छात्राणां पद्योच्चारणस्पर्धार्थम् )

प्रो० ई० पी० भरतपिषारटिः, केरलम्

यात्राक्लेशात् क्षीणतनुः पश्चिमजलधौ स्नाति रविः ।
तमसा किञ्चनभुवनमुखं म्लानीभूतं रुदनभरात् ।
हन्त ! तदानीमतिरुचिरं पूर्वनिशामुखमरुणमभूत् ॥
तारककन्याः धृतदीपाः मोदाद्गगने सन्निहिताः ।
जलधिर्वीचीकरनिकरैः तारं वाद्यं वादितवान् ।
जातीलतिकाः कुसुमचयैः आरादर्चामथ विदधुः ॥
तारकराजो विधुरधुना प्राचीजठरादवतरति ।
अमृतं वर्षति गगनतलं पवनः परिमलमपि सुखदम् ।
सकलजनानामानन्दं विकरन्नुदयति शशिबिम्बम् ॥



# प्रतिष्ठानवार्ताः



श्री० के० एन्० मेनोन् महोदयाय समर्पिता "संस्कृतप्रचारनिपुणः" इति मरणानन्तर बहुमतिः तस्य धर्मपत्न्या भानुमत्या डा० पी० आर्० शास्त्रिणः हस्तात् स्वीक्रियते। डा० के० चन्द्रशेखर नायर् महोदयः, श्री० ए० ए० मनमोहनः, ए० आर्० नायर्महाशयश्च चित्रे दृश्यन्ते।

## संस्कृतप्रचारनिपुणः

विश्वसंस्कृतप्रतिष्ठानस्य केरलशाखायाः दिवंगतः महामन्त्री "संस्कृतप्रचारनिपुणः" इति मरणानन्तर-बहुमत्या भूषितः। पुरस्कारमिमं स्वर्गीयस्य के० एन्० मेनोन् महोदयस्य सहधर्मचारिणी श्रीमती भानुमती डा० पी० आर्० शास्त्रिमहोदयस्य हस्तात् स्वीकृतवती। मेनोन्–अनुस्मरणं सम्मेलने डा० के० चन्द्रशेखरन्-नायर् महोदयः अध्यक्षपदम् अलंकृतवान्। श्रीमन्तः एन्० भास्करपणिक्कर्, के० एम्० अच्युतन् नायर्, एम्० एस्० अलिक्कुञ्ञु, ए० ए० मदनमोहनः, सी० जी० विजयकुमारः, के० एन्० विद्यासागरश्च सम्मेलने अनुस्मरण-भाषणं विहितवन्तः। तदनन्तरं संस्कृतकविसम्मेलने श्रीमान् सूर्यकालटि के० एस्० भट्टतिरिप्पाड् (तन्त्रिमुख्यः) अध्यक्षः आसीत्। श्री० वि० जी० रामन् महोदयः, डा० जी० गङ्गाधरनायरः, प्रोफ० जी० विश्वनाथशर्मा, प्रोफ० उमादेवी, श्री० सी० कृष्णन्नायर्, श्री० वी० कृष्णशर्मा च स्वविरचिताः संस्कृतकविताः वाचितवन्तः। अक्षरश्लोकसभा च आसीत्।

## संस्कृतसंभाषणप्रशिक्षकशिविरम्

१९८९ दिसम्बरमासस्य द्वाविंशतितमदिनात् एकत्रिंशत्तमदिनपर्यन्तं तीर्थक्षेत्रे मण्णारशालायां देवमन्दिरस्य सत्रे संस्कृतसंभाषणप्रशिक्षकाणां प्रशिक्षणार्थं शिविरं वि० सं० प्रतिष्ठानकेरलकेन्द्रेण सञ्चालितम् । तत्र ब्रह्मश्री पुल्लांवषिदेवनारायणनम्पूतिरिमहोदयः, ब्रह्मश्री मण्णारशाला ए० वी० सुब्रह्मण्यनम्पूतिरिमहोदयश्च रक्षाधिकारिणौ आस्ताम् । श्रीमान् पी० पी० चन्द्रः संयोजकः । शिविरस्य उद्घाटनसम्मेलनस्य अध्यक्षः आसीत् प्रशस्तः साहित्यकारः श्री० एवूर् परमेश्वरन् महोदयः । केरलसर्वकारीयपरीक्षासमितिसदस्यः श्री० नाणुक्कुट्टन् नायर् महोदयः शिविरम् उद्घाटितवान् । श्रीमन्तः वी० कृष्णशर्मा, गणेशशर्मा, डा० एम्० पी० उण्णिकृष्णः, ई० वी० वसुवजः, सी० जी० विजयकुमारः, डा० गङ्गाधरनायरश्च प्रशिक्षकान् शिक्षितवन्तः । प्रशिक्षकाश्च प्रतिदिनं सायं समीपगृहवासिनः जनान् संस्कृतभाषणं शिक्षितवन्तः । शिविरे पाठनं, कलापरिपाट्यः, क्रीडाः इत्यादि सर्वं संस्कृतमयम् अभवत् ।

दीक्षान्तसमारोहे आशीर्वादभाषणं प्रमाणपत्रवितरणं च कृतवान् केरलसर्वकारस्य मुख्यनिर्वाचनाधिकारी श्री० रामचन्द्रन् नायर् (आई० ए० एस्०) महोदयः । संस्कृतं भारतस्य एकीकरणशक्तिरेव इति तत्रभवान् उक्तवान् । अध्यक्षः ए० ई० ओ० श्री० नारायणपिल्लईमहोदयः आसीत् । भारतीयजनतादलस्य केरलराज्याध्यक्षः श्री० के० रामन् पिल्लईमहोदयः, वि० सं० प्र० के० के० महासचिवः ए० ए० मदनमोहनः, साहित्यकारः श्री० आर्० के० कोट्टारत्तिल्, सी० जी० विजयकुमारः, डा० एम्० पी० उण्णिकृष्णश्च तत् भाषणं दत्तवन्तः ।

## संभाषणपरीक्षाः सञ्चालिताः

वि० सं० प्र० केरलकेन्द्रस्य संस्कृतसम्भाषणपरीक्षासमायोजकेन श्री० ई० एम्० एन्० शास्त्रिमहोदयेन आविष्कृताः संस्कृतसम्भाषणपरीक्षाः विद्यालयीयच्छात्राणां कृते प्रचालिताः १९८९ दिसम्बरमासे १९९० जनवरीमासे च ।

## पंजाबप्रान्तवार्ताः

विश्वसंस्कृतप्रतिष्ठानस्य पञ्चनद(पंजाब)शाखायाः तत्त्वावधाने अमृतसरनगरे गत १६–२–९० तः २३–२–९० पर्यन्तं विश्वशान्त्यर्थं यजुर्वेदपारायणमहायज्ञस्य शिवरात्रिमहोत्सवस्य च आयोजनम् सम्पन्नम् । अस्मिन् समारोहे पुण्यार्थिनां महान् सम्मर्दः एकत्रितः जातः । समारम्भस्य अध्यक्षता स्वामि श्री० आनन्दवेशमहाराजैः कृता ।

समापनसमारोहे वक्तृभिः विश्वशान्त्यर्थं संस्कृतस्योपयोगिताविषये स्वीया विचाराः प्रकटिताः । अन्ते सर्वैः त्रिभाषासूत्रे संस्कृतस्य स्थापनाय सर्वकारं प्रेरयितुं प्रस्तावः पारितः ।

## मध्यप्रदेशवार्ताः

विश्वसंस्कृतप्रतिष्ठानम्, मध्यप्रदेशस्य इन्दौरसम्भागीयशाखया इन्दौरस्य राजेन्द्रनगरे दशदिवसीयसंस्कृतसंभाषण-प्रशिक्षण-शिविरस्य आयोजनम् कृतम् । समारोहः ४–२–९० तः १३–२–९० पर्यन्तं प्रचलितः । तत्र ६५ प्रशिक्षणार्थिनः भागं गृहीतवन्तः । प्रशिक्षणकार्यं प्रतिष्ठानस्य नवीनेन प्रशिक्षकेण श्रीमता गोविन्दगन्धेमहोदयेन कृतम् ।

## संस्कृते शपथग्रहणम्

प्रतिष्ठानस्य म० प्र० शाखा-सदस्यानां प्रेरणया म० प्र० विधानसभायां केचन निर्वाचिताः सदस्याः संस्कृते शपथं गृहीतवन्तः—

## —: संस्कृते शपथं गृहीतॄणां म० प्र० विधान-सभा-सदस्यानां सूची :—

| क्र० | नाम | दलम् | क्षेत्रम् | संभागः | जिला |
|---|---|---|---|---|---|
| १– | श्री जगदीश देवड़ा | भा० ज० पा० | सुवासरा | उज्जैन | मन्दसौर |
| २– | " नानालाल पाटीदारः | " | सीतामऊ | " | " |
| ३– | " बद्रीलाल सोनी | " | सुसनेर | " | शाजापुर |
| ४– | " कुँवर तेजसिंह सेंधवः | " | हाटपिपलिया | " | देवास |
| ५– | " गोविन्द शर्मा | " | खातेगाँव | " | " |
| ६– | " ललित जैनः | कांग्रेस (आई) | इन्दौर–१ | इन्दौर | इन्दौर |
| ७– | " गोपीकृष्ण नेमा | भा० ज० पा० | इन्दौर–३ | " | " |
| ८– | " चन्द्रकान्त गुप्ता | " | बड़वाह | " | खरगोन |
| ९– | " कैलाश विजयवर्गीयः | " | इन्दौर–४ | " | इन्दौर |
| १०– | " रायसिंह राठौरः | " | खरगोन | " | खरगोन |
| ११– | " किशोरीलाल वर्मा | " | पंधाना | " | खण्डवा |
| १२– | " विक्रम वर्मा (शिक्षा-मन्त्री) | " | धार | " | धार |
| १३– | " कुमारी रंजना बघेलः | " | कुक्षी | " | धार |
| १४– | श्री प्रेमनारायण शर्मा | " | शमशावाद | भोपाल | विदिशा |
| १५– | " भवानीसिंह रघुवंशी | " | सिरोंज | " | विदिशा |
| १६– | " रघुनन्दनशर्मा | " | राजगढ़ | " | राजगढ़ |
| १७– | " हनुमानप्रसादगर्गः | " | नरसिंहगढ़ | " | राजगढ़ |
| १८– | " शिवराजसिंहः | " | बुधनी | " | सीहोर |
| १९– | " डा० धर्मवीरः | " | ग्वालियर | ग्वालियर | ग्वालियर |
| २०– | " रघुनाथ पोतनीसः | " | लश्कर (पूर्व) | " | " |
| २१– | " भगवतसिंह यादवः | " | करेरा | " | शिवपुरी |
| २२– | " रामबहादुरसिंह परिहारः | " | चाचोड़ा | " | गुना |
| २३– | " देशराजसिंह यादवः | " | मुंगावली | " | " |
| २४– | " गोपाल भार्गवः | " | रहली | सागर | सागर |
| २५– | " मगनलाल गोयलः | " | टीकमगढ़ | " | टीकमगढ़ |
| २६– | " अशोककुमार चौरसिया | " | मलेहरा | " | छतरपुर |
| २७– | " ओमप्रकाश रायः | " | नोहटा | " | दमोह |
| २८– | " चौधरी मणिशंकर सुमन | " | पथरिया | " | दमोह |
| २९– | " रामकृष्ण कुसुमारिया | " | हटा | " | " |
| ३०– | " मधुकर हर्षे | " | होशंगाबाद | होशंगाबाद | होशंगाबाद |
| ३१– | " डा० सीताशरण शर्मा | " | इटारसी | " | " |
| ३२– | " अनूपसिंह मरावो | " | बरगी | जबलपुर | जबलपुर |
| ३३– | " डा० रानी दुबे | " | बहोरीबंद | " | " |

( शेषांशः ३० पृष्ठे )

# विश्वसंस्कृतम्

**संस्कृतपुरस्काराः**—दिल्ली-संस्कृत-अकादमी-द्वारा समायोजिते एकस्मिन् समारोहे दिल्लीप्रदेशस्य उपराज्यपालेन श्रीमता अर्जुनसिंहमहोदयेन संस्कृतसाहित्ये महत्त्वपूर्णयोगदानार्थं चत्वारो विद्वांसः पुरस्कृताः। पुरस्कृताः विद्वांसः—डॉ० सीताराम सहगलः, टी० परमेश्वर ऐयरः, कल्याणदत्तशर्मा, जी० नन्दझामहोदयश्च आसन्। पुरस्कारे ११०० रूप्यकाणि, महावस्त्रम्, प्रशस्तिपत्रं च आसन्। अवसरेऽस्मिन् भाषमाणेन श्रीमता उपराज्यपालमहोदयेन राष्ट्रस्य अखण्डतायै संस्कृतभाषाया उत्थानस्य आवश्यकता प्रतिपादिता।

**वेदवेदान्तपुरस्कारः**—प्रसिद्धः संस्कृतविद्वान् पं० हरिशरणसिद्धालंकारः आर्यसमाज-मुम्बई द्वारा वेदवेदान्तपुरस्कारेण सम्मानितः। पुरस्कारः प्रसिद्धेन उद्योगपतिना तथा विश्वसंस्कृतप्रतिष्ठानस्य कोषाध्यक्षेण श्रीमता डॉ० एस० के० सोमैया महोदयेन प्रदत्तः। पुरस्कारे २१,००० रूप्यकाणि, रजतपदकम्, महावस्त्रं च आसन्। अयं पुरस्कारः श्री हरिशरणमहोदयद्वारा कृतस्य चतुर्णां वेदानां हिन्दयनुवादस्य कृते प्रदत्तः।

अवसरेऽस्मिन् श्री ओम्प्रकाशवर्ममहोदयेभ्यः 'वेदोपदेशक' पुरस्कारः अपि प्रदत्तः। प्रदाता श्रीसत्यकामविद्यालंकारः आसीत्।

**ग्रन्थस्य लोकार्पणम्**—भारतस्य उपराष्ट्रपतिमहोदयेन श्रीमता डॉ० शंकरदयालशर्ममहोदयेन श्रीमती डॉ० सुषमाकुलश्रेष्ठद्वारा रचितस्य 'कालिदास-साहित्य एवं पशु-पक्षि संगीत' इति ग्रन्थस्य लोकार्पणं कृतम्। अवसरेऽस्मिन् उपस्थितान् विदुषः सम्बोधयता उपराष्ट्रपतिमहोदयेन एतादृशाणि विविधानि साहित्यिकशोधकार्याणि विधातुं प्रोत्साहनं कृतम्।

अन्येषु वक्तृषु श्रीलालबहादुरशास्त्रीकेन्द्रीयसंस्कृतविद्यापीठस्य कुलपतिः डॉ० मण्डनमिश्रः काशीहिन्दूविश्वविद्यालयस्य डॉ० रेवाप्रसादद्विवेदिप्रभृतयः प्रमुखा आसन्।

## संस्कृतरक्षायामेव राष्ट्रस्य गौरवम्

श्रीशंकराचार्याः

रामघट्टस्थ-श्रीवल्लभरामशालिग्रामसाङ्गवेदविद्यालय वाराणसी इत्यस्य ६९ तमवार्षिकोत्सवावसरे आशीर्वादं वितरद्भिः १००८ श्री पुरी शंकराचार्यैः उक्तं यत् संस्कृतस्य संस्कृतेश्च रक्षयैव राष्ट्रस्य गौरवं वर्धते। यावत्पर्यन्तं भारतीयराजानः स्वसंस्कृत्यनुसारं वर्तन्ते स्म तावत्पर्यन्तं नैकोऽपि विदेशी आक्रमणकारो अत्रागतः। यदैव तैः स्वपन्थाः त्यक्तः तदैव पराधीनता प्रारब्धा। अवसरेऽस्मिन् तैः विद्यालयस्य भूरि भूरि प्रशंसा कृता।

प्रसंगेऽस्मिन् आध्यक्ष्यं निर्वहद्भिः विश्वसंस्कृतप्रतिष्ठानाध्यक्षैः काशिराजश्रीविभूतिनारायणसिंहशर्मजूदेवैः विद्यालयद्वारा क्रियमाणानां कार्याणां प्रशंसां कुर्वद्भिः संस्कृत-शास्त्राध्ययनार्थं युवकानां प्रेरणा कृता।

## प्रसिद्धः व्याकरणवेत्ता दिवंगतः

भारतवर्षस्य विख्यातनामा काशीवास्तव्यः वैयाकरणः श्रीरामप्रीतिद्विवेदः वयसः ९३ तमे वर्षे दिवं प्रस्थितः। श्रीद्विवेदीमहाभागः आजीवनं शास्त्ररक्षायां बद्धपरिकरः सन् नैकान् शिष्यान् भारतस्य विविधेषु शिक्षासंस्थानेषु अध्यापनं कुर्वतः योग्यान् विदुषः निरमात्। श्रीद्विवेदः विश्वभाषासम्पादकस्य पं० राजाराम-शुक्लस्य व्याकरणगुरुरासीत्। विश्वभाषापरिवारः अनेन आघातेन अतीव दुःखितः भगवन्तं काशीविश्वनाथं स्वगुरूणां कैवल्यप्राप्तये प्रार्थयते।

## परमपावनश्रीदलाईलामामहाभागानां शुभागमनम्

विश्वसंस्कृतप्रतिष्ठानस्य संस्थापकसदस्येषु अन्यतमाः परमपावनश्रीदलाईलामामहाभागाः प्रतिष्ठाना-ध्यक्षाणां श्रीकाशिराजमहाभागानाम् आमन्त्रणमङ्गीकृत्य रामनगरदुर्गं प्रति समागताः। श्रीकाशिराजैः, निर्देशिका-श्रीमती-महाराजकुमारीकृष्णप्रियामहाभागया च प्रतिष्ठानस्य प्रगतिविषये तैः सह चर्चाः कृताः। अवसरेऽस्मिन् प्रतिष्ठानाध्यक्षैः तेभ्यः विश्वभाषा अपि समर्पिता।

**संगणकयन्त्रे संस्कृतम्**—भारतस्य मानवसंसाधनविकासराज्यमन्त्री श्री एम० जी० के० मेनन महोदयः लोकसभायाम् एकस्य प्रश्नस्य उत्तरावसरे सूचितवान् यत् संस्कृतभाषासंगणकयन्त्रे (Computer) कुंजिकायाः कार्यं कर्तुं शक्नोति। बहु-अनुसंधानानन्तरम् इदं निश्चितप्रायमेव यत् संस्कृतं संगणकभाषारूपेण अतीवोपयोगि वर्तते इति। विषयेऽस्मिन् पुण्यपत्तनस्थ CDAC ( Center for Development of Advanced Compating ) इति संस्थाने शोधकार्यं क्रियते।



---

( २८ पृष्ठस्य शेषांशः )

| क्र० | नाम | दलम् | क्षेत्रम् | संभागः | जिला |
|---|---|---|---|---|---|
| ३४- | श्री ढालसिंह विसेनः | भा० ज० पा० | बरघाट | जबलपुर | सिवनी |
| ३५- | " डा० रामजी मस्तकारः | ,, | परासिया | ,, | छिन्दवाड़ा |
| ३६- | " डा० कमला वाडीवा | ,, | दमुआ | ,, | छिन्दवाड़ा |
| ३७- | " ओमप्रकाश धुर्वे | ,, | वजाग | ,, | मण्डला |
| ३८- | " गंगूराम बघेलः | ,, | आरंग | रायपुर | रायपुर |
| ३९- | " ओमप्रकाश गिरिः | ,, | कुरूद | ,, | ,, |
| ४०- | " बद्रीधर दिवानः | ,, | सीपत | बिलासपुर | बिलासपुर |
| ४१- | " डा० जवाहर दुवे | निर्दलीय | अकलतरा | ,, | ,, |
| ४२- | " लालजीतसिंहः | भा० ज० पा० | पत्थलगाँव | ,, | रायगढ़ |



पुस्तकसमीक्षा

# आत्मदर्शनम्*

डॉ० रूपनारायणपाण्डेयः
संस्कृतप्रवक्ता प्रभुनारायण रा० इ० का० रामनगरम्, वाराणसी, २२१००८

वेदान्तदर्शने प्रस्थानत्रये द्वितीयप्रस्थानस्य ब्रह्मसूत्रस्य महत्त्वपूर्णं स्थानम् अस्ति। बादरायणप्रणीते ब्रह्मसूत्रे भिक्षुसूत्रे वा भगवतः शङ्कराचार्यस्य भाष्यं सुविदितम्। श्रीशङ्कराचार्यभाष्यस्य व्याख्यानेषु वाचस्पतिमिश्रकृता भामती प्रसिद्धा। भामतीव्याख्यासु वेदान्तकल्पतरुनाम्नी व्याख्या अमलानन्दसरस्वतीमहाभागेन विरचिता। भारतीतीर्थमुनिना रचिता वैयासिकन्यायमाला ब्रह्मसूत्रस्य अधिकरणनिरूपणपरायणा शोभते। अन्नम्भट्टकृता मिताक्षरावृत्तिः ब्रह्मसूत्रस्य शङ्करभाष्यस्य च तात्पर्यं भामतीवेदान्तकल्पतरुवैयासिकन्यायमालादिप्रदर्शितमार्गेण प्रकाशयति। तस्या एव मिताक्षरवृत्तेरनुसन्धानात्मकं विवेचनं ग्रन्थेऽस्मिन् वर्तते।

ग्रन्थेऽस्मिन् भागत्रयं वर्तते। प्रथमभागात् पूर्वं समाशंसनं शोधग्रंथनिर्देशकस्य, आङ्लभाषया भूमिका, विज्ञप्तिश्च विद्यन्ते। प्रथमभागे ब्रह्मसूत्रस्य बादरायणकर्तृकत्वम्, ब्रह्मसूत्रस्य संक्षिप्तं विवरणम्, मिताक्षरायाः सविवरणं परिचयः, अन्नम्भट्टस्य जीवनकालः (षोडशशतकस्य परभागे), वंशविवरणम्, रचनाश्च विवेच्यन्ते। द्वितीयभागे—आत्मदर्शनम्, श्रवणविधिः, चतुर्मुखः हिरण्यगर्भश्च, अविद्यानिवृत्तिः, मनस इन्द्रियत्वम्, शब्दस्यापरोक्षज्ञानजनकत्वम्, जीवो जीवन्मुक्तिश्चेति विषया ब्रह्मसूत्रनिर्देशपूर्वकं मिताक्षरावृत्तिमनुसृत्य विचार्यन्ते। तृतीयभागे—अन्नम्भट्टः हरिदीक्षितश्चेति शीर्षके द्वयोर्वृत्तिकारयोः साम्यं चिन्त्यते। ग्रन्थकारेणात्र प्रतिपाद्यते यत्—'अन्नम्भट्टवृत्तेरपेक्षया हरिदीक्षितवृत्तिः सरसतरा मनोरमा च वीक्ष्यते। प्रतीयते चैतत् यथा मिताक्षरापरिशीलनेन समधिकलाभान्वितो बभूव ततश्चारुतरां च वृत्तिं रचयितुं प्रक्रान्तवान् हरिदीक्षित इति।' (पृ० १३७) 'मिताक्षरायां लक्षणीयांशाः' इति शीर्षके च मिताक्षराकारस्य वैशिष्ट्यं प्रतिपादितमस्ति। ग्रन्थान्ते परामर्शग्रन्थसूची अपि विराजते।

'आत्मदर्शने' ग्रन्थकारेण ब्रह्मसूत्रस्य मिताक्षरावृत्तिः सविवेकं सरलया भाषया समीक्षिता वर्तते। अत्र ग्रन्थकारस्य पाण्डित्यम्, विषयावबोधः, समीक्षात्मिका प्रज्ञा च स्पष्टं विलसन्ति। पश्यन्तु सुधियः—"तत्रभवानन्नम्भट्टः जिज्ञासासूत्रवृत्तिं रचयन्-समन्वयसूत्रे भगवत्पादैः श्रोतव्य इत्यत्रात्मज्ञानविधिर्निराकृतः न तु ज्ञानोद्देशेन विचारविधिरिति न तद्विरोधोऽपि' इत्युक्तवान्। ततः परं विवरणमतं भामतीकारानुयायिमतं चानूद्य 'अस्तु वा श्रवणविधिः तथापि न लक्षणाध्याहारौ' इति तत्रभवान् स्वमतमवोचत्। पुनश्च समन्वयसूत्रवृत्तौ आत्मज्ञानविधिनिरासाय श्रवणस्य विधित्वं समूलमकृन्तदिति तत्रभवतो वृत्तिं परिशीलयतां मनोमुकुरे विरोधः प्रतिभासते।....." (पृ० १२१)

यद्यपि ब्रह्मसूत्रमिताक्षरवृत्तेः विमर्शेऽस्मिन् ग्रन्थकारेण समुद्धृतग्रन्थानां स्थलसङ्केताः सर्वत्र नोल्लिखिताः इति ग्रन्थानुशीलनेऽनुसन्धानप्रिया विद्वांसः खेदमनुभवन्ति, तथापि शोधग्रन्थोऽयं ब्रह्मसूत्रमिताक्षरावृत्तेः सम्यग्बोधायाध्येतव्यः संग्रहणीयश्च वर्तते। □

* आत्मदर्शनम् ( अन्नम्भट्टकृतायाः ब्रह्मसूत्रमिताक्षरावृत्तेः विमर्शः ), ले०—डॉ० आञ्जनेयकुमारस्वामी, १९८७, मूल्यम् ६० ।—, पृ० स०—१० + १६४।
प्राप्तिस्थानम्—(१) मोतीलाल बनारसीदास, जवाहरनगर, नई दिल्ली—७,
(२) श्रीमती वी० कृष्णावेणी, १८७—A, ईस्टनेहरूनगर, सिकन्दराबाद—२६

# FIBROFLEX

## QUALITY AND COMFORT MATCHED TOGETHER




## FIBROFLEX

### The Rubberised Coir Mattresses

**Best blend of nature and science**

1. ISI Mark, the testimony of Superior quality mattresses.
2. Centre criss cross fleece arrangements for firm support to your back as specially recommended by Medical practitioners.
3. Special side walling as reinforcement to edges and for better durability and finish.
4. Quilted mattresses with matching cloth at the bottom in attractive colour designs.





Manufacturers:




**BHARAT MOTORS**

151 Mount Road
Madras – 600 002
Ph: 861923/865512
Tlx: 041-6136 BM IN.

37 Greames Road
Madras – 600 006
Ph: 471626 / 863250

IS : 8391



सम्पादक ! विश्वभाषा

महोदय ! गणतन्त्रदिवसाङ्कः अधिगतः। विलम्बेनागतोऽपि विविधविषयविलसिततया चेतसि सन्तोषं जनयति। नित्योपयोगि-भोज्य-पदार्थाः, ज्ञान-शिविरम् इत्यादयः विषया निश्चयेन संस्कृतजगति नूतनप्रयोगाः संस्कृतप्रेमिणां कृते ज्ञानवर्द्धकाश्च सन्ति। एवमेव आधुनिकान् अन्यानपि विषयान् अधिकृत्य विश्वभाषायां रचनाः प्रकाशनीयाः। विज्ञानजगत् इति नूतनस्तम्भस्य डा० रूपनारायणपाण्डेयमहाभागानां प्रस्तावोऽपि श्लाघ्यः।

भवदीयः
लोकेशमिश्रः पाटलीपुत्रम्।

सम्मान्याः सम्पादकमहोदयाः ! गणतन्त्राङ्कः अधिगतः। अङ्कः रमणीयो वर्तते। अन्योक्तयः रमणीयाः। तथापि मादृशस्य कृते दुर्बोधाः। केवलं तात्पर्यम् अवगतवान्। शब्दार्थः न ज्ञातः। पुस्तक-समीक्षा इति स्तम्भः अतीव उपयोगी वर्तते। समीक्षकः डा० रूपनारायणपाण्डेयमहोदयः धन्यवादयोग्यः। समीक्षापक्षपातरहिता अस्ति। एतद्रीत्या एव नवीनानां ग्रन्थानां समीक्षा विश्वभाषायां प्रकाशनीया। 'विश्वसंस्कृतम्' इति स्तम्भे अपि उपयोगि-सूचनाः मिलन्ति। संस्कृतप्रशिक्षणविषये अपि स्तम्भः चालनीयः।

भावत्कः
दीपकसदाशिव जोशी, अमरावती।

मान्याः महोदयाः ! जयतु संस्कृतम्। गणतन्त्र-दिवसाङ्कः विलम्बेन प्राप्तः। तथापि सन्तोषावहः। बह्व्यः अशुद्धयः इतोऽपि सन्ति तथापि पत्रिका प्रगतौ वर्तते। युवमञ्चे चन्द्रशेखेरविषयकः एकपात्राभिनयः अत्यन्तं प्रशंसनीयः। तथैव धारावाहिके नाटके 'प्रियाशा' 'मिलनसेतुः' अपि श्लाघनीये। भाषा किञ्चिदिव कठिना। ज्ञानशिविरे विश्वस्तरीया विषया उपस्थाप्याः। अत्याधुनिकान् अपि विषयान् स्वीकृत्य ज्ञानशिविरे चर्चा करणीया। सर्वं योजयित्वा अङ्कः प्रशंसार्हः वर्तते।

भवदीयः
धनीन्द्रझा, वाराणसी

श्रीयुत सम्पादकमहोदय ! अहं संस्कृतं न जानामि। अतः आंग्लभाषायां लिखामि। कृपया क्षम्यताम्। मम संस्कृते अतीव श्रद्धाऽस्ति। पठितुमपि इच्छामि। कृपया कोऽपि सरलो विधिः बोध्यताम्। विश्वभाषाया इव अन्यासामपि संस्कृतपत्रिकाणाम् अहम् आजीवनग्राहकोऽस्मि। इयं मम रुचिः अस्ति। विश्वभाषायां प्रकाश्यमाणा संस्कृत-अमर-चित्रकथा मत्कृते अतीव उपयोगिनी भवति। प्रति अङ्कं केषांचित् महापुरुषाणां जीवनविषये लेख-नाटक-कथा इत्यादिकं प्रकाशनीयम्। भाषाप्रशिक्षणविषयेऽपि सामग्री प्रकाशनीया। (अनूदितम्) भवदीयः
रामकृष्णभट्टः मैंगलूर

परमसम्मान्याः सम्पादकमहोदयाः ! गणतन्त्रांकः लब्धः। अयम् अंकः अनेकविधसामग्रीभिः विराजते। 'बालजगत्' इत्यस्य कथा अतीव रमणीयाः। अत्र बालोपयोगिन्यः कविताः अपि प्रकाशनीयाः। प्रतिष्ठानस्य एकं कुलगीतं विरचय्य प्रतिअङ्कं प्रकाशनीयमित्यपि प्रस्तावः। आगामिनि अङ्के प्रकाश्यमाणानां सामग्रीणां विषयेऽपि पूर्वाङ्के सूचनादेया। शेषं सम्यगेव—

भावत्कः
मोतीलालशर्मा, दिल्ली

सम्पादकमहोदय ! सादर नमः। विश्वभाषा नियमितं प्राप्यते। प्रत्यङ्कप्रगतया महान् मे सन्तोषः। प्राच्य-पाश्चात्यविद्यानाम् तुलनात्मकाध्ययनविषयकः लेखः प्रत्यङ्कं प्रकाश्यतामिति अनुरोध्यते। तथैव कश्चन शास्त्रीयः कश्चन शोधपरकश्च अपि लेखः प्रकाशनीयः। संगणकयन्त्रे संस्कृतस्य उपयोगविषये बहु चर्चा वर्तते। तद्विषयेऽपि सामग्री विश्वभाषायां देया। तेन महान् उपयोगः भवेत्। इति— भवदीयः
डा० मुरारजोत्रिपाठी, फरुखाबाद

# परमपावनदलाईलामामहाशयानां-चरितम्

डा० राधेश्यामधरद्विवेदी-काशीस्थः

भारतमिव तिब्बतमपि एकमाध्यात्मिकं क्षेत्रम्। भारतेन प्रभावितानि स्थानानि अपि तथैव आध्यात्मिकानि कथ्यन्ते। भारते राजसु ईश्वरस्याधिवासो मन्यते तथैव भारतस्य समोपस्थेषु राष्ट्रेषु विशेषतः भूटानतिब्बतनेपालादिष्वपि सैव प्रथा सम्प्रत्यपि प्रचलितास्ते। परमपावनदलाईलामामहाशया हि अवलोकितेश्वरस्य अवतारभूता भवन्ति इति भोटीयाः। अवलोकितेश्वरा हि बोधिसत्त्वः लोकहितानुशंसी। एतेषु दलाईलामासु मध्ये एकः भारतक्षेत्रेऽपि उत्पन्न इति श्रूयते। अन्ये तु विभिन्नेषु तिब्बतीयक्षेत्रेषु उदपद्यन्त।



चतुर्दशस्यास्य चयनप्रकारस्त्वित्थं जातः। प्रथमो हि दलाईलामा १३९१ वर्षे उत्पन्नः। स एव समस्तान् लोकान् उद्धर्तुं प्रतिज्ञातवान्। तत आरभ्य तस्यैव अवताररूपेण चतुर्दशदलाइलामानं यावत् अन्वेषणं विधाय चयनं विहितं तत्रत्यैः जनैः। १९३३ तमे वर्षे त्रयोदशो हि दलाईलामा दिवंगतः। नूतनस्यास्य दलाईलामामहोदयस्य चयनार्थं पण्डिताः भविष्यवक्तारः लामानः परामृष्टवन्तः। ते ल्हासातः उत्तरपूर्वस्मिन् अन्तरिक्षे विलक्षणमेघाडम्बरम् अवलोकितवन्तः। तस्मात् त्रयोदशस्य दलाईलामानः शवः 'नोर्बूलिखा' नामके ग्रीष्मावासे उपस्थापितः। स च शवः कतिचिद्दिनानन्तरं पूर्वाभिमुखो जातः। तस्मादुत्तरपूर्वस्यां दिशि एकं सुन्दरं नक्षत्रमिव गोमयच्छत्रं (Mushroom) झटित्यागतमवलोकितं तैः। एतेन अग्रिमस्य दलाईलामा-महाशयस्य जनिः तस्यां दिशि सुनिश्चिताभवत्। ततः १९३५ तमे वर्षे वनवाराहारण्ये सम्वत्सरे ल्हासातः चत्वारिंशत्क्रोश-दूरं 'छखुरग्यल' स्थाने ल्हामोलात्छो नामकं सरोवरं गतास्ते कतिचित् दिनं यावत् पूजां विधाय एकां तिब्बतस्य अनागतस्वरूपमूलिकां छायां दृष्टवन्तः। यत्र आ-का-मा अक्षराणि इव निर्मितानि पूजास्थलानि अवलोकितानि तत्रैव च अल्पहरित्पट्टिकानिर्मितं भवनमपि दृष्टम्। ततः रहस्यमिमं गुप्तं विधाय पण्डिताः लामानः तस्यां दिशि गतवन्तः। ये कुम्बुमाराख्ये ग्रामे तथाभूतं पूजास्थलं दृष्ट्वा तस्मिन्नातिदूरे ग्रामे ताक्क्षेराख्ये तद् भवनमपि प्राप्तवन्तः। तत्रैव गत्वा अधिकारिणस्तद्गृहस्य बालकेषु विचारितवन्तः। तस्मिन् गृहे उत्पन्नोऽयं चतुर्दशो दलाईलामामहाशयः द्विवर्षवयस्कः तत्र क्रीडन् आसीत्। तत्र सेरामठस्य लामालोसङ्गछेवङ्ग अन्वेषणोपाधिकारी मुख्याधिकारी लामा अभूत्। मुख्यश्च केत्सङ्गरिम्पोछे सामान्यवेशे सेवक इव तद्गृह प्रविवेश। तं दृष्ट्वा क्रीडन् बालकः तस्याङ्के आगतः। सेवक इव दृश्यमानस्य रिम्पोछेमहाभागस्य गले एकां त्रयोदशदलाईलामामहोदयस्य मालां दृष्टवान्, दृष्ट्वा च तं ययाच। ततः रिम्पोछे महाशयः बालकं स्वाभिख्यां पप्रच्छ। स च बालकः 'सेरा-आगा' इति उक्तवान्। ततः पुनः पृष्टवान् को हि अन्वेषणदलस्य नेता इति तदापि असौ उक्तवान् लोसङ्ग रिम्पोछे इति।

इत्थमभिज्ञातश्चतुर्दशो दलाईलामा 'पोताला' आनोय १९४० तमे वर्षे लौहरूपक्षनागाख्यस्य चतुर्दशे

दिनाङ्के चीन-भारत-नेपाल-भूटान-राज्यप्रतिनिधीनां डेपुंग-सेरा-गदन-मठानां अवतारिलामानां सम्मुखे धार्मिकप्रथानुरूपं कार्यं विधाय तिब्बतराज्यपरिषदः सदस्यैः सिंहासने उपस्थापितः। इत्थं सार्धचतुर्वयस्के अस्मिन् बालके तिब्बतस्य आध्यात्मिकं भौतिकं च शासनं समागतम्।

षड्वर्षात्मके वयसि राज्ञोऽस्य धार्मिकी शिक्षा प्रारभत। एते खलु प्रज्ञापारमितायां द्वन्दात्मकतर्कशास्त्रे, वैद्यके, मठानुशासने, अभिधर्मे, पूर्णतया दीक्षिताः अभूवन्। एतान् विषयान् अध्यापयितुं डेपुन-सेरा-गदेन-मठेभ्यः सप्त पण्डिताः ल्हासायां आनीताः। त्रयोदशात्मके वयसि भिक्षूणां सदसि एते परीक्षायै आहूताः। पृष्टाश्च ते सन्तोषास्पदमुत्तरं दत्तवन्तः। तदानीं ल्हासायां मृत्तराणि आसन् तेषु यान्त्रिकशिक्षणकार्यं तेन कृतम्। ततः षोडशे वयसि प्राप्ते राज्योपरि कम्यूनिष्टचीनस्याक्रमणस्य सूचनापि प्रदत्ता तत्रस्थैरधिकारिभिः। तस्य प्रतिरोधो हि एतैः विहितः। तिब्बतीयाः शान्तिवादिनो भवन्ति। अतः चीनाक्रमणस्य सम्पर्केण ते किमपि असामान्यं भावजातं अनुभूतवन्त इति। दलाईलामामहाशयानां तिब्बताधिवासे प्रजासु दशप्रतिशतं लामानः, शेषास्तु जनता बभूवुः। तेषां मन्त्रिमण्डले (खूशाग) चत्वारः सदस्या अभूवन्। ते तान् प्रति उत्तरदायिनः आसन्। मठानां व्यवस्था प्रजातान्त्रिकी, किन्तु जनतासु तु सामन्तवादिनी एवासीत्। तिब्बतस्य सेना अपि अत्यल्पसंख्यका आसीत्। तया कदाचिदेव साहाय्यं गृह्यते स्म, यतो हि तिब्बतीजनाः स्वभावत एव शिष्टा भवन्ति। तिब्बतस्य चीनेन सह कोऽपि सम्पर्कः नासीत् किन्तु त्रयोदशदलाईलामामहाशयस्य परिनिर्वाणे धार्मिकोत्सवे चीनीप्रतिनिधिमण्डलमागतम्। तत एव ते ल्हासायामवसन् किन्तु ते तथैवासन् यथा नेपालीयाः भूटानीयाः भारतीयाश्चासन्। १९४८ वर्षे केचन चीनी-अधिकारिणः गुप्तचररूपेण ल्हासामागत्य अवसन्। ते दृष्टवन्तः तिब्बतस्य सैन्यशक्तिम्। ततस्ते गत्वा तान् अवोचन्। तदनन्तरं ते १९४९ वर्षे एव सैन्याक्रमणं कृतवन्तः। एतेन तिब्बतीयाः स्तब्धाः बभूवुः। आक्रमणमिदं दृष्ट्वा ते ब्रिटेन-अमेरिका-भारत-नेपालदेशेभ्यः साहाय्यर्थं प्रतिनिधिमण्डलं नियुक्तवन्तः। ते सर्वकाराश्च तारद्वारासूचिताः, किन्तु तत्तत्सर्वकाराणां विषयेऽस्मिन् प्रतिक्रिया नैवाधिगता। भारतं तदानीमेव स्वातन्त्र्यं लब्धवत् तस्मात्तेन साहाय्यं दातुं नैवोत्साहमदायि। अस्यां स्थितौ तिब्बतीयाः एकाकिनः सन्तः स्वरक्षायै असमर्था अपि खम्याजनैः सह चीनी-आक्रमणं विरोद्धुमुद्यताऽभूवन्। छांदोस्थाने स्थापितौ रेडियोट्रांसमीटर—आपरेटरश्च चीनी अधिकारिभिः नीतौ। इत्थं वृत्तान्तस्य कोऽपि आधार एव तेभ्यः नाधिगतः। किन्तु चीनीयैः प्रोक्तं यत् ते इतोऽग्रे तिब्बतीक्षेत्रे नैवागमिष्यन्ति। तिब्बतस्य अधिकारिणः ल्हासानगर्यां चीनीनामाक्रमणं विभाव्य पोतालास्थं शासनकेन्द्रं 'यातुंग'नामके स्थाने विधातुं परामृष्टवन्तः। छांगोपर्यन्तं चीनीसेना आसीत् तत्रैव वार्तायै १९५० वर्षे तिब्बतस्य अधिकारिणः अहूताः, ते बलादेकस्यां सन्धौ हस्ताक्षरेण एव तिब्बतस्योपरि चीनस्य आधिकारिकं प्रभुत्वं प्रावर्धन्त "१९५४ वर्षे अहं (दलाईलामा) एव आन्तरिकस्वतन्त्रतायै पंचेनलामामहोदयैः सह पीकिंगमगच्छम्। यत्रमाओत्सेतुंगमहोदयेन सह वार्ता जाता। व्यवस्थाक्रमे चाऊ-एव-लाई महोदयैः सह अपि वार्ता जाता। पीकिंग-स्थाने एव (दलाईलामामहोदयस्य) श्रीनेहरू-खुश्चेव-बुलगानिनप्रभृतिभिः सह वादोऽभवत्। तत्रैव पत्रकारैः नेहरूमहोदयस्य नीतिमनुसृत्य तिब्बतस्य स्वातन्त्र्यनिर्णयस्य अधिकारः चीनशासने प्रदत्तः। एतेन यद्यपि ते अनभिमताः तथापि ते तिब्बतस्य स्वतन्त्रतायां विश्वसन्ति स्म। चीनी-अधिकारिणः कदाचित् तत्र मम भावं स्वीकृतवन्त इति उक्त्वा तत्रैव एका समितिः संघटिता यत्र एकपञ्चाशत्सदस्येषु केवलं पञ्च तिब्बतीयान् संख्यातवन्तः येन अहं न कदापि अभिमतोऽभवम्।"

"पीकिंगतः ल्हासामागमने मार्गे-मार्गे राजमार्गः त्रुटितः भूकम्पद्वारे इति मया श्रुतम्। यदा अहं ल्हसायामगच्छम् तथा समायोजितायाः समितेरुद्घाटनं अप्रैलमासे १९५६ वर्षे अभवत्। येनाहं निराशां अनुभूतवान्। अस्मिन्नेव क्षणे भारतयात्रायाः

निमन्त्रणमस्माभिः प्राप्तम्। तत्र भगवतो बुद्धस्य पञ्चविंशतिजन्मशती आयोज्यते स्म। अहं पणछेन-लामामहाशयेन सह भारतमागच्छम्। भारतस्य यात्रां विधाय अहं नेहरूमहोदयाय सर्वं निवेदितवान्। तथा चात्रैव अवस्थाय तिब्बतस्य समस्यां समाधातुं यतितवान्। किन्तु नेहरुणा प्रोक्तं यत् श्व एव चाऊ-एन-लाईमहोदयः आगच्छति, तेन सार्धं सर्वं मन्त्रयिष्यत इति। चाऊमहोदयेन सह अपि मम वार्तालापो जातः किन्तु तेन चाऊमहोदयः अतीव खिन्नोऽभवत्। अहं भारतस्य पुण्ययात्रां परित्यज्य मध्ये एव ल्हासामगच्छम्। तत्र राष्ट्रे मम संकटः समागत इव आसीत्"।

"अहं तिब्बतं दर्शयितुं नेहरुमहोदयं निमन्त्रितवान्। किन्तु परिस्थितिवशात् तन्निमन्त्रणं नैव मूर्तरूपतामध्यगच्छत्। भारतागमनानन्तरं ल्हासां प्राप्य पुनः चाऊमहोदयानां पिकिंगगमनानन्तरं तिब्बते पूर्वतोऽपि चीनस्य अधिकाराधिक्यं समपद्यत। ते मम सर्वकारस्योपरि दोषारोपणं विधाय तमायत्तीकर्तुं प्रायतन्।"

"मार्चमासे १९५९ वर्षे यदा अहं ल्हासापोतालाप्रासादे निषण्णः तत्त्वमीमांसायाः अन्तिमां परीक्षां दीयमानः आसम् तदा एव एकं चीनीदलम् अधिकारिणां समागच्छत्। ते मिलितुं मह्यं विवशीकर्तुमैच्छन्। सर्वं परित्यज्याहं परीक्षां दत्वा तदुत्तीर्णवान्। यदा हि मम परीक्षानन्तरे धार्मिकश्चैकः समारोह आयोज्यमाण आसीत् तदा मया निवेदितं-भवन्तः कदाचिदन्यस्मिन् दिने वार्तार्थं आगच्छन्तु आहोस्वित् अहं स्वयमेवागत्य वार्तां विधास्यमीति। कथमपि मार्चमासस्य १० तारिकायां वार्तायाः कार्यक्रमः निश्चितोऽभवत् किन्तु ९ मार्चं यावत् तत्र गमनस्य व्यवस्था न जाता। पुनश्च चीनीसैनिकानां कार्यजातं वीक्ष्य तिब्बतीयाः जनाः मां तत्र गन्तुं उचितं नैवामन्यन्त। मम प्रजा मत्स्थाने अधिकारिणः प्रेषितवती, ते ततः परावृत्ताः न्यक्कृता इत्यनुभूयमानाः वृत्तं वर्णयामासुः। अनन्तरं यद्धि वृत्तं तत्र जातं तेनाहं षोडशतारिकायां ततः पलायनस्य निर्णयं कृत्वा स्वसंस्कृतेः रक्षणाय भारतमाजमागतः।"

**भारते परमपावनदलाईलामामहाशयानां कृत्यानि**

ते त्रिविष्टपात् यदा भारतम् आगच्छन्त आसन् तदा स्वीयागमनस्य सूचनां नेहरूमहोदयेभ्यः प्रायच्छन्। नेहरूश्च तस्य स्वागताय स्वीयान् जनान् नेफाप्रदेशस्य देरांगस्थानं यावत् प्रैषयत्। ततः दलाईलामामहोदयाः सर्वैः तिब्बतीयैः सह तेजपुरमुपागच्छन्, तदनन्तरं नेहरूं सम्प्राप्य मन्त्रयामासुः। तिब्बतीयानामावासस्य व्यवस्था च भारते कृता तेन। चीनीशासका एतेन अतीव विरोधं प्रकटितवन्तः। विश्वस्य नेतारः अस्य शरणदायककर्मणः प्रशंसका अभूवन्। इत्थं दलाईलामामहोदयाः भारते स्वीयं सांस्कृतिकं वैभवं सुरक्षितु प्रयतितवन्त इति। १९५९ वर्षतः १९८९ वर्षं यावत् ते प्राचीनतिब्बतस्य परम्पराक्रमेण वैभवं संरक्षितुम् अहर्निशं यतन्ते। तस्मादेव तिब्बतस्य प्राच्यतिब्बतीयगोम्पानां भारतेऽपि निर्माणं कृतवन्तस्ते यत्र एतेषां शरणार्थिनामावासः कृतः। तद्यथा तिब्बतीयसेरागोम्पावत् मैसूरस्य समीपे बेलाकुप्पीस्थाने सेरा-गोम्पानिर्मिता सती अध्ययनपूजनयोः पूर्ववदेव कार्यं कुरुते। तथैव तत्र तन्त्रस्य कृतेऽपि ग्यूतोद्विश्वविद्यालयः स्थापितः वर्तते। टाशील्हुम्पागोम्पा अपि तत्रैव अधिराजते। कर्नाटके एते तिब्बतीयजनाः स्वीयाध्यवसायस्य महिम्ना कार्यं कुर्वन्ति। अथ च सुखेन निवसन्ति। मङ्गोटस्थले डेपुङ्गदनविश्वविद्यालयो वर्तते। इत्थं पूर्वोक्ततिब्बतीयसांस्कृतिकशैक्षिकपरम्परा इहाधिवासिस्थलेष्वपि अधिराजत एव।

न केवलमेतदेव प्रत्युत तैः भारते तिब्बतस्य निर्वासितः सर्वकारः स्थापितः। यैः स्वीयजनानां कृते अहर्निशं प्रयत्यते। पंजाबे धर्मशालायां स्थितोऽयं सर्वकारः जगति तिब्बतीब्यूरो इति नाम्ना सहायककेन्द्राणि अपि निर्माति। प्रसंगेऽस्मिन् अमेरिकायां न्यूयार्कस्थले, योरोपे लन्दननगरे, एशियायां जापाने एतेषां तिब्बतीब्यूरो कार्यं कुरुते। पूर्वं स्विटजरलैण्डदेशेऽपि एतेषां निर्वासितस्य सर्वकारस्य

अवमुख्यकेन्द्रमासीत् । अयं सर्वकारः भारते अनेकस्थलेषु 'हैण्डीक्राफ्टसेण्टर' संस्थाप्य विविधानि परिधानानि उपवेशनानि निर्मिणोति भारते विदेशे च । धर्मशालायां यत्र परमपावनाः वसन्ति तत्र एकः बृहत्पुस्तकालयः राजते, पारम्परिकचिकित्सालयः, पारम्परिकाध्ययनस्य माध्यमिकविद्यालयश्चापि तत्र संचलति । तत्रैव अनाथानां बालकानां संरक्षणगृहमपि राजते । न केवलं तत्रैव प्रत्युत भारतस्य अन्येष्वपि प्रधाननगरेषु एतत् क्रियते । स्वीयाशयानां प्रकाशनाय प्रचाराय च एते प्रकाशनब्यूरो वा तिब्बतसांस्कृतिकेन्द्रं स्थापितवन्तः दिल्ल्यां, येन प्रदर्शनी-प्रकाशनपरिचर्चादयः प्रतिवर्षं क्रियन्ते कार्यन्ते च । यथा कर्नाटके मोङ्गोटबेलकुप्पयोः पारम्परिकाध्ययनकेन्द्राणि प्रसिद्धि प्राप्नुवन्ति तथैव वाराणस्यां संस्कृततिब्बतीभाषयोः उद्धारकार्यकरणार्थम् एकं संस्थानं विश्वविद्यालयात्मकं निर्मितं भारतसर्वकारेण यत्र उद्धारकार्यक्रमः प्रारब्धः । केन्द्रे अस्मिन् परमपावनस्य सर्वदा निर्देशनं जायते । वाराणस्यां यथा भारतीयायाः संस्कृतेः वर्चस्वं दरीदृश्यते तथैव सारनाथे सम्प्रति बौद्धसंस्कृतेः वर्चस्वमपि राजत एव । तत्र महायानदर्शनस्य विकासाय यथा तिब्बतीसंस्थानमास्ते तथैव हीनयानस्य विकासाय आचार्यनरेन्द्रदेवसंस्थानेति नाम्ना एकं स्थानं निर्मितम् । तत्र च अन्ताराष्ट्रियसम्बन्धज्ञापनार्थं यथा भिक्षुजगदीशकाश्यपसंस्थानं चलति तथा बालकनां भिक्षुणां शिक्षायै महाबोधिसोसाइटी कार्यं करोति । इत्थं सम्प्रति दलाईलामामहोदयानां प्रभावात् वाराणस्याम् उपान्ते सारनाथे बोद्धाभिजनो राजते, पर्वतेषु धर्मशालायां, दक्षिणे कर्नाटके, पूर्वस्यां अरुणाचलप्रदेशे च । बोनधर्मस्य मुख्यं केन्द्रं सोलनस्य समीपे ओजोघाटाख्ये स्थाने वर्तते, ड्रुग्पाजनानां दार्जिलिंगे शाक्याम्याजनानां देहरादूने च केन्द्रं भवति । इत्थं शनैः-शनैः ते तिब्बतीयकार्यकलापानां भारतेऽपि स्थानं विधाय भारतमपि स्वीयमहिम्ना प्रभावयन्ति । न केवलं भारतमेव विश्वमपि परमपावनस्य वचसा प्रभावितं भवति । तेन अमेरिकायां तिब्बतीस्वातन्त्र्यार्थं यो हि प्रस्तावः उपस्थापितः तस्य सर्वत्र प्रशंसा अभूत् । तान् पञ्चसूत्रीयकार्यक्रमान् आलक्ष्य विश्वहितस्य च चिन्तनं विलोक्य जना विश्वसर्वकाराश्च अनुभवन्ति यद् दलाईलामानः नूनमेव आध्यात्मिकाः नेतारः सन्ति न तु भौतिकाः इति । तैः तिब्बतस्य स्वातन्त्र्याय तथा २० सितम्बर १९८७ वर्षे वाशिंगटननगरे कांग्रेसे मानवाधिकारमण्डलस्य सम्मुखे प्रस्तावाः उपस्थापिताः ते भवन्ति—

(१) तिब्बतं खलु शन्तिक्षेत्रं भूयात् ।

(२) तिब्बते चीनोजनाः स्थानान्तरणेन नैव आनेतव्या येन तिब्बतीयानामस्तित्वं विनश्येत् ।

(३) तिब्बतीयजनानां मानवाधिकाराणां गणतान्त्रिकस्वातन्त्र्यस्य च संरक्षणं भवेत् ।

(४) तिब्बतस्य प्राकृतिकी सम्पत् पूर्ववत् रक्षणीया परमण्वनुबन्धीनि अवकरजातानि नैव तत्र आनेतव्यानि ।

(५) तिब्बतचीनयोः सम्पर्कः भविष्यञ्च गम्भीरविचारविमर्शाभ्यां निर्णेतव्ये ।

इत्थं पञ्चसूत्रेण विश्वस्मिन् जना स्नेहान्विता भवन्ति तेषां स्वरूपं विधानं च आलक्ष्य तेभ्यः वर्षेऽस्मिन् नोबलशान्तिपुरस्काराय उद्घोषणा कृता पुरस्कारसमित्या । तच्च १० दिसम्बरे 'ओसलो' नामके स्थाने तेभ्यः नोबुलपुरस्कारसमितिः पुरस्कारं प्रायच्छत् । एतेन यथा तिब्बतीयाः प्रसन्नाः तथैव भारतीया अन्ये च बौद्धविश्वजनाः ।

अत्रैवं विचारणीयमास्ते यद् तिब्बतीयाः खलु षष्ठिसहस्राधिकाः दलाईलामामहोदयैः सह भारते समागताः । इदानीं तेषां संख्या एकलक्षात्मिका भवति । किन्तु ते तथापरिश्रमनिष्ठाः कुशलतन्तुवायवश्च भवन्ति येन ते स्वीयार्जनं तथैव पद्धत्या कुर्वन्ति, न तु भिक्षां याचन्ते, तथैव साम्प्रतिके परमाण्वनुसंधानयुगे युद्धभिया यदा सर्वे त्रसन्ति तदा तेषामहिंसारूपेण व्यक्तिस्वातंत्र्यस्य रूपप्रस्थापनं नूनं लोकानां कृते आकर्षकं जायते येन तेभ्यः शान्तिपुरस्कारः दत्तः । इत्थं ज्ञायते यद् सज्जनानां दृष्टिः विद्या च पृथक् सन्नपि लोकहितं कुर्वते । □

# मिलनसेतुः

डॉ० सुधामुखोपाध्याया
भू० पू० रीडर (संस्कृतम्) का० हि० वि० वि०

**गताङ्कादनुवर्तते—**

[गताङ्के—माधुरी जया जयाभ्राता च एकस्मिन् उद्याने सन्ति । माधुरी जयायाः चरणात् स्रवन्तं रक्तबिन्दुं दृष्ट्वा किञ्चिद्विमनस्का भवति । यावत् सा कमप्युपचारं कर्तुं यतते तावत् जया तां निषेधयति स्वभ्रात्रा जयेन सह भ्रमणाय गन्तुं वदति । तस्या गूढालापैः जयमाधुर्योः प्रीतिसम्बन्धः स्फुटीभवति । तयोर्गमनानन्तरं जया स्वभाग्यम् आक्रोशयति । सहसा आगच्छन् सुव्रतः दृश्यते । तं दृष्ट्वा सा घटितपूर्वां घटनां स्मरन्ती आत्मानं सान्त्वयति । इतः परम्....]

सुव्रतः—(उपसृत्य नातिदूरं, मुहूर्तद्वयं तुष्णीमवलम्ब्य) जये, जये त्वमेव ।

(जया दृष्टिमुन्नमय्य तन्मुखमवलोकयति, नमयति च दृष्टिम्)

सुव्रतः—जये, नाभिजानासि मां जये ?

जया—(मुहूर्त्तं तूष्णीं स्थित्वा पुनः दृष्टिमुन्नमय्य) अभिजानाम्येव किन्तु नास्त्यभिज्ञानप्रयोजनम् ।

सुव्रतः—जये, क्षमां याचे । मुञ्च कोपम् । मयानार्यमाचरितं, जानेऽहं स्वापराधस्य गुरुत्वम् । त्रिवर्षमध्ये दाम्पत्यसम्बन्धस्य किमपि कर्तव्यं न पालितं मया । कर्तव्यहानेरपराधेन अपराद्धोऽहम् । एतेन तव युष्माकं सर्वेषां-क्रोधोद्रेकः स्वाभाविक एव । किन्तु जये, याचे त्वां धैर्येण शृणु । न जानासि ममाभाग्यस्येतिवृत्तम् त्रिकालमपराधस्य गुरुभारमुहित्वा भृशं पीडितोऽस्मि अनुशोचनानलेन नितरां दग्धोऽस्मि । नास्ति कोऽपि यस्य सम्मुखं मम मर्मपीडां प्रकाशयामि । भगवदनुकम्पया अद्य त्वां सम्प्राप्तवानस्मि । अस्मिन् विशाले संसारे अहमद्यैकाकी । यदादेशान्मया एतावन्नैष्ठुर्यमवलम्बितं स पितृव्योऽपि परलोकं गतः ।

तदादेशपालनायैव एतावाननर्थः कृतः । कुतः
मृता मे शैशवे माता ततो यत्नेन पोषितः
आसं पितृपितृव्याभ्यां, विधेयश्च तयोरहम् ॥
एवं वृतं चिरेणैव, अस्वतन्त्रोऽस्मि सर्वदा ।
यद्यपि दलितं हृन्मे, संपीडितं च मानसम् ।
तथाप्यासं नाहमीशः कर्तुं यदीप्सितं मया ॥
अवरुद्धस्य स्नेहस्य प्रवाहोऽपीडयत् हृदम् ।
दारुणं हृदि मे शल्यं, देहबन्धश्च ध्वंसते ॥

पितृव्यादेशपरिपालनार्थं स्वहृत्पिण्डोत्पाटनतुल्यः सुमहान् क्लेशो मया सोढः । दशायाः प्रतिकूलतया अकाण्डोपनीतेन पितृमरणशंकिनः जडात्मनो मम बुद्धिनाशो जातः । अतएवैवमकर्तव्यं मया कृतम् ।

( जया भूतललग्नदृष्टिस्तूष्णीं स्तिष्ठति )

सुव्रतः—कथं तूष्णीं स्थीयते ? एहि जये प्रसीद । पितृव्यमरणपश्चात्तव पितरम् सकृत् पत्रप्रेरणेन क्षमां त्वां च याचितवानहम् । विफलं तत् सर्वम् ।

मे सुकृतफलेनाद्य, त्वमसि, अग्रतो मम,
न पुनर्याहि मां त्यक्त्वा कातरं दीनमानसम् ।
प्रसीदाद्य क्षमस्व मां दीने मयि दयां कुरु,
अपसारय हृच्छल्यं एहि मद्धृदये जये ॥

एहि जये एहि । प्रसारय तव त्रिवर्षपूर्वं पाणिग्राहगृहीतं हस्तम् । (हस्तेन हस्तं गृह्णाति) त्वं मम गृहलक्ष्मीः । 'गृहिणो गृहमुच्यते' । गृहणी त्वं, पथिकोऽहं, नय मां गृहम् ।

जया—(हस्तं मोचयित्वा) नास्ति कोऽपि सम्बन्धो मम भवता सह । अग्निसाक्षिको यः पवित्रः सम्बन्धः स्थापितः, स त्रुटित एव । सम्प्रति एवं सम्बन्धोऽन्यत्र स्थापयितुं यत्यते भवता । सफलो भवतु यत्नः ।

मया सहागतौ मम मातुलकन्यापुत्रावुद्यानं परितः भ्रमणं कृत्वात्रैव प्रत्यावर्तिनौ । ताभ्यां यथा एतादृश्यं न दृश्यते तथा कर्तव्यम् । ( शेषांशः ३९ पृष्ठे )

# शुकनासोपदेशः

गताङ्कादनुवर्तते—

चौ० श्रीनारायणसिंहः, सम्पादकः विश्वभाषा

[ पूर्वाङ्के—अष्टाभिर्वाक्यैः लक्ष्म्याः मिथोविरुद्धानि अष्ट कर्माणि निर्दिष्टानि। लक्ष्म्याः विचित्रा प्रकृतिः प्रदर्शिता। इतोऽग्रे—]

यथा दीपशिखा मलिनं कज्जलम् उद्वमति तथा इयं लक्ष्मीः मलिनं दुष्कर्मादिकं जनयति। इयम् उत्तरोत्तरं विषयप्रीतिं वर्धयति। यथा व्याधो गीतेन मृगान् वशीकृत्य नाशयति तथैव इयम् अपि इन्द्रियाणि विषयं प्रति आकृष्य जनान् नाशयति। इयं लक्ष्मीः सुचरित्रं तथैव कलुषीकरोति यथा धूमलेखा सुचित्राणि मलिनीकरोति। लक्ष्म्या मूढाः पुरुषाः कर्तव्याकर्तव्यविचारशून्याः भवन्ति। यथा जीर्णभवने पिशाचो निवसति तथैव चिरकालिकलक्ष्मीसम्पन्ने धनमदो भवति। यथा तिमिररोगः दर्शनशक्तिं विलोपयति तथैव लक्ष्मीः शास्त्रज्ञानं दूरीकरोति। लक्ष्म्याः हेतोरेव पुरुषेषु सर्वेषामविनयानामुत्पत्तिः भवति। यथा नद्यां ग्राहाः विचरन्ति तथैव लक्ष्म्यां कोपसम्भ्रमाः सञ्चरन्ति। लक्ष्म्या एव सत्त्वे विषयभोगान् प्रति आसक्तिः जायते। इयं लक्ष्मीः भ्रूभङ्गस्वरूपाणां निवासस्थलीव। यथा वेत्रप्रयोगेण सत्पुरुषाः अपसार्यन्ते तथा लक्ष्म्या शिष्टाचाराः उत्सार्यन्ते। असामयिकः वर्षाकालः यथा हंसानां विनाशकारणं भवति तथैव लक्ष्मीः दयादाक्षिण्यादिगुणानां विनाशकारणं भवति। शरीरे यथा विस्फोटाः दृश्यन्ते तथैव लक्ष्मीसत्त्वे जनापवादाः प्रसरन्ति। यथा नाटके प्रस्तावनाप्रयोगः दृश्यते तथैव लक्ष्म्यां स्थितायाम् अनेकविधः कपटाचारः दृश्यते। यथा कदलीसमूहे हस्तिनः स्वेच्छया विचरन्ति तथैव लक्ष्मीसत्त्वे अनेकविधाः कामविकाराः प्रादुर्भवन्ति। लक्ष्मीः साधुस्वभावं जनं विनाशयति, लक्ष्म्यां सत्यामेव सदाचरणस्य लोपो भवति। कुत्रापि तादृशः पुरुषः न दृश्यते यः अपरिचितया लक्ष्म्या गाढं न आलिङ्गितः प्रतारितो वा। इयं लक्ष्मीः चित्रस्थिताऽपि इन्द्रजालमिव आचरति। प्रस्तरादौ उत्कीर्णाऽपि विलोभयति। श्रुताऽपि अनुसंदधाति। बहुशः चिन्तिताऽपि प्रतारयति। एतादृश्या दुष्टाचरणशीलया लक्ष्म्या कथमपि दैववशात् स्वीकृता भूपाः विह्वला भवन्ति। तथाच ते सर्वेषाम् अविनयानाम् आश्रयस्थानं भवन्ति। (क्रमशः)

> यथा व्याधो गीतेन मृगान् वशीकृत्य नाशयति तथैव लक्ष्मीः अपि इन्द्रियाणि विषयं प्रति आकृष्य जनान् नाशयति।

( ३८ पृष्ठस्य शेषांशः )

सुव्रतः—शान्तम्। अलंवाक्यपरम्परया (सान्द्रस्वरेण)

जये! पितृव्येन पुनर्विवाहार्थं भूयो भूयोऽनुरुद्धेनापि मया सोऽनुरोधो न रक्षितः। हृदयस्य पवित्रताया एकनिष्ठताया अकृत्रिमस्नेहस्याद्य समुचितः पुरस्कारः प्राप्तः।

यस्या हि चिन्तने प्रीतिर्द्रवति स्मरणान्मनः।
दर्शनादद्य तस्या हि सोद्वेलं हृदयं मम॥
शमयितुं मनस्तापं धावितोऽहं त्वदान्तिकम्।
वाक्शल्येन पीडितेस्मिन् हृदि करुणा तव॥

किन्तु जये, त्वं नारी—भारतीया नारी यां 'सानुकम्पेति' कोमलहृदयेति भुवि प्रख्याता। त्वं कथं वज्रहृदया संवृत्ता? ममापराधो गुरुतर इति स्वीकरोमि। किन्तु नार्यां एवम्विधं नैष्ठुर्यमचिन्तनीयमेव। यामुन्मूलितप्रायामाशालतिकामहं नक्तन्दिनं प्रेमवारिसिञ्चनेन परमधैर्येण पोषितवान् तां त्वं सपदि चरणेन विदलितवती। त्वया पुनर्मिलनाशयैव मया दीर्घाणि दिनानि नीतानि। त्वं मम हृदयस्य विशुद्धिं पवित्रं प्रेम च अवधरितवती। अथवाऽलं विस्तरेण मम मर्मकृन्मर्मपीडा ममैवास्तु।

( जयन्तीं पूर्णदृष्ट्या सकृद् दृष्ट्वा प्रस्थितः, जयन्त्यपि अन्यतः प्रस्थिता। )

# अन्योक्तयः

पं० राजेश्वरशास्त्री, धारवाड

कामं भक्षय पल्लवान् प्रतिदिनं चूतस्य चेतोहरान्
माधुर्याय रवस्य कीचकगणानाम्नातुमङ्गीकुरु ।
मा संकूज सुमाकरेतरदिनेष्वादर्शय स्वं बलं
बालध्वांक्ष ! वनप्रियो नहि भवस्यस्मिन् वृथाजन्मनि ॥१॥

आयान्तु प्रसभं मृगाशनवराः कूजन्तु काकोदराः
बुक्कन्तां शुनकाश्च भिल्लतरुणी शब्दायतां किन्त्वपि ।
दंष्ट्राभीषणनक्रतुण्डममृशन् दन्तावलः सत्वरं
पद्मिन्या ह्रियमाणलोलकरणश्चावर्तमायास्यति ॥२॥

रे रे कीशशिशो ! त्वया बहुमुदा शाखासु चेखेल्यते
रिङ्गत्पुच्छमथारुरुक्षसि मुहुश्चाभ्रंलिहानोकहान् ।
लङ्कार्यन्वयसम्भवोऽहमिति मा मानी भव त्वं वृथा
ग्रामे गच्छसि चेत्तदा त्वयि भवेत्पाषाणपातो जनात् ॥३॥

पारावार ! तरङ्गिणीपरिवृढ ! त्वं लोकसौख्यप्रदः
त्वन्नीरं परिगृह्य मेघनिवहैः सेसिच्यते भूतलम् ।
मुक्तारत्नचयान् ददासि विमलान् यादोभिरभ्याश्रितः
स्वाचान्ते घटजन्मना हि सलिले क्वासीत्प्रभावस्तव ॥४॥

त्वामाश्रित्य जना व्रजन्ति सकला देशान्तरव्राजिनः
गन्तारः शकटाः स्फुटं त्वयि बलाद्वस्त्वाहरन्तोऽनिशम् ।
मेदिन्यां शतशः स्मरन्ति भवतो जातोपकारं मुदा
मार्ग ! त्वं यदि चेतनस्त्वदपरः क्षन्ता नाचालोक्यते ॥५॥

हारित्यं छदनेषु ते सुमगणे लौहित्यमव्याहतं
यज्ञे साधनतां गतो वरगुणो लेहेऽपि पात्रीकृतः ।
हं हो ! किंशुक ! मालतीपरिमले गर्वायमाणः खलो
रोलम्बो ह्यविलम्बितं तव सुमं नालम्बते सादरम् ॥६॥

स्यावधेः अनन्तरम् –

शुभः समाचारः
स्ति महाराज !
यस्मात् विभा-
त् आगताः सः
पि शकानाम्
धिकारे जातः !
प्रतारिताः।

अधुना किं भवेत् ? अस्माकं
प्राणाः संकटग्रस्ताः ? मन्त्रिन्
कमपि उपायं कुरु ?

तान्तः श्रेयः। शक-
शस्य का अभ्यय-
? सन्धिप्रस्तावः
करणीयः।

सन्धिः ? अन्यः
कः अपि उपायः
नास्ति वा ?

भवती इतः
गच्छतु ? राज-
कार्ये पदरोधनं
मा करोतु।

मगुप्तस्य दूतः शीघ्रमेव
प्रत्यागतः।

शकराजः किं
कथितवान् ?

महाराज, अहं तद्
उच्चारयितुं न
शक्नोमि।


मा बिभीहि। तेन, किं महन्मूल्यम् अभ्यर्थितम् अस्ति?
तस्य अभ्य-र्थना अतीव लज्जाकरी अस्ति?


अहं शान्त्यर्थं कियद्दपि मूल्यं दातुं सिद्धः अस्मि।
महाराज तेन कथितं यत् अतिपूर्वं महाराज्ञी ध्रुवदेव्याः विवाहः तेन सह भवितव्यः आसीत्।


अपि तेन महाराज्ञी प्रार्थिता अस्ति?
हं, महाराज!
एतदव-मानम् अस्ति! अपि अन्यः कः अपि
नास्ति?







देश: एव सुरक्षित: नास्ति तदा परंपराणां रक्षणं कथं शक्यम् अस्ति?

तथा मया ध्रुवदेव्या: त्याग: कर्तव्य:! दूत, शकराज: सूचित: कर्तव्य: तव प्रार्थना स्वीकृता इति।


महाराज्ञि, वयं भयंङ्कर संकट-ग्रस्ताः स्मः!
माधवि, किं संकटम् अस्ति? अपि महाराजेन सन्धिः स्वीकृतः वा?


हं- तस्य च मूल्यं दीयते भवत्याः दानेन?
माधवि, अपि मम कर्णौ मां न वञ्चयतः?


महाराज्ञि, मया सर्वा मन्त्रणा प्रच्छन्ना भूत्वा श्रुता अस्ति!
अप्यहमस्मात् घृणितापमानात् रक्षणीया इति कः अपि वीरः नास्ति?


अस्ति- राजकुमार चन्द्रगुप्तः अयमेव भवतीं रक्षितुं शक्नोति।
किमिदं सम्भवेत्? तथा त्वं सपद्येव तस्यान्तिक गच्छ।


अनन्तरम्-
महाराज्ञि, माधव्या सर्वमपि मह्यं कथितम्।
राजकुमार, भवतः बन्धुना मम विश्वासघातः कृतः।


न्ता भवतु -
यि जीवति कः
पि भवत्याः अप-
न कर्तुं न
क्नोति।
महाराज्ञि, राजकुमारः स्ववचन-पालने समर्थः।


न्तरम्-
महाराज, अहं भवते किमपि कथयितुकामः।
किं कथ-नम् आस्ति?


हाराज, किं भवता
त्यमेव महाराज्ञी
वदेवी शकराजाय
समर्पणीया
ति निर्णयः
गृहीतः?
अन्यः कः अपि उपायः नास्ति, चन्द्रगुप्त!
राजकुमार, देशस्य रक्षणार्थम् अस्माभिः एतत् करणीयमेव।










यस्मिन् दिने ध्रुवदेवी शकराजाय समर्पणीया आसीत् –



माधवि, अपि असि: सम्यक्तया प्रच्छन्न: ?

एवं प्रच्छन्न:। राजकुमार, कस्यापि सन्देह: न भवेत्!

तत: माम् आदिशतु, देवि।

राज-कुमार, ईश्वर: त्वां रक्षतु!







महाराज्ञी ध्रुवदेवी इत्यस्याः शिबिका अत्र प्राप्ता, शकराज !


अपि भवन्तः सर्वे अस्याः राजसी-स्वागतार्थं सिद्धाः स्युः ?
हं महाराज!


रक्षकेभ्यः सैनिकेभ्यः च निर्गमानुज्ञा दातव्या !


अद्य मम स्वप्नः पूर्णः भवितुम् अर्हति।


स्वागतं ते, महाराज्ञि ध्रुवदेवि ! अधुना भवती शकराजस्य सहधर्मिणी अस्ति- भीरोः रामगुप्तस्य न हि।



# सम्पूर्णानन्द संस्कृत विश्वविद्यालय, वाराणसी

के

# अभिनव–प्रकाशन

वर्ष १९८८ तथा १९८९ तक सम्पूर्णानन्द संस्कृत विश्वविद्यालय द्वारा "वेद", "व्याकरण-शास्त्र", "वेदान्त-शास्त्र", "मीमांसादर्शन", "ज्योतिष-शास्त्र", "तन्त्रशास्त्र", "पुराण", "धर्मशास्त्र", "साहित्य-शास्त्र", 'बौद्धदर्शन", "जैनदर्शन" एवं "नीतिशास्त्र" से संबन्धित ३८ ग्रन्थ प्रकाशित किए गए हैं। ये समस्त प्रकाशन विक्रयार्थ उपलब्ध हैं।

इस वर्ष आदि शंकराचार्य जी की बारह सौवीं जयन्ती के उपलक्ष्य में इस विश्वविद्यालय की त्रैमासिक अनुसंधान पत्रिका "सारस्वती सुषमा" का श्रीशंकराचार्य विशेषांक ग्रन्थों का प्रकाशन विगत कुछ महीनों में हुआ है :—

(१) सारस्वती सुषमा—श्रीशंकराचार्य-विशेषांक।

(२) शुक्लयजुःप्रातिशाख्यम्।

(३) अद्वैतदीपिका-तृतीय भाग।

(४) अथर्ववेदे राजनीतिः।

(५) नीतिविधिविमर्शः—प्रथम भाग।

(६) कौटिलीय अर्थशास्त्र—प्रथम तथा द्वितीय भाग।

(७) कूर्ममहापुराणविषयानुक्रमकोशः—पूर्वभाग।

(८) अट्ठसालिनी।

(९) वाक्यपदीयम्-ब्रह्मकाण्ड।

(१०) अष्टप्रकरणम् (तन्त्रशास्त्र)।

(११) तत्त्वमुक्ताकलापः—प्रथम भाग आदि।

उक्त ग्रन्थों के अतिरिक्त पूर्व में प्रकाशित प्रायः सभी शास्त्रों के ११५ ग्रन्थ विश्वविद्यालय के विक्रय-विभाग में विक्रयार्थ उपलब्ध हैं, जिनका कैटेलाग निःशुल्क मँगाया जा सकता है।

विशेष : - इस विश्वविद्यालय की त्रैमासिक संस्कृत अनुसंधान पत्रिका का वार्षिक चन्दा ३०.०० रुपये (तीस रुपये) तथा प्रति अंक १०.०० रुपये (दस रुपये) निर्धारित हुआ है।

---

पत्र-व्यवहार का पता :—**प्रकाशन-विभाग**
**सम्पूर्णानन्द सस्कृत विश्वविद्यालय**
**वाराणसी-२२१ ००२.**

Editor : Pandit Gulam Dastagir Abbas Ali Virajadar, Jengali Pir Dargah, Worli, Bombay-400 018, Publisher-Devadutt, Published at Vishva Sanskrit Pratishthanam, Fort Ramnagar, Varanasi-221 008, and Printed at The Tara Printing Works, Varanasi 221010.

# स्वतन्त्रतादिवसाङ्कः






...िया त्रैमासिकी संस्कृत-पत्रिका

International Sanskrit Quarterly

चतुर्थवर्षस्य द्वितीयोऽङ्कः १५ अगस्त १९९०

# प्रकाशन सूची

## रत्नभारती ग्रन्थमाला

१. भाषावृत्तिः (पुरुषोत्तमदेवकृता)
Bhāṣāvṛtti (of Puruṣottamadeva)
संपादकः प्रो० श्रीनारायण मिश्रः १००.००

२. अद्वैतसिद्धिः (बालबोधिनी टीका सहिता) भाग १
Advaitasiddhi (with Bālabodhinī Commentary) Vol. I
संपादकः डा० सितांशुशेषर बागचिः १००.००

३. अद्वैतसिद्धिः (बालबोधिनी टीका सहिता) भाग २
Advaitasiddhi (with Bālabodhinī Commentary) Vol. II
संपादकः डा० सितांशुशेषर बागचिः १००.००

४. श्लोकवार्तिकम् (न्यायरत्नाकरसहितम्)
Ślokavārttika with Nyāyaratnākara
संपादकः डा० द्वारिकादास शास्त्री १००.००

५. *काशिकावृत्तिः (पदमञ्जरी-न्यास-सहिता) भाग १
Kāśikāvṛtti (with Padamañjarī and Nyāsa) Vol. I
संपादकः डा० श्रीनारायणमिश्रः ८५.००

६. काशिकावृत्तिः (पदमञ्जरी-न्यास-सहिता) भाग २
Kāśikāvṛtti (with Padamañjarī and Nyāsa) Vol. II
संपादकः डा० श्रीनारायणमिश्रः ८५.००

७. काशिकावृत्तिः (पदमञ्जरी-न्यास-सहिता) भाग ३
Kāśikāvṛtti (witn Padamañjarī and Nyāsa) Vol. III
संपादकः डा० श्रीनारायणमिश्रः ८५.००

८. काशिकावृत्तिः (पदमञ्जरी-न्यास-सहिता) भाग ४
Kāśikāvṛtti (with Padamañjrī and Nyāsa) Vol. IV
संपादकः डा० श्रीनारायणमिश्रः ८५.००

* (सम्पूर्ण सेट (भाग १ से ६) का मूल्य ५००/- प्रति सेट)

९. काशिकावृत्तिः (पदमञ्जरी-न्यास-सहिता) भाग ५
Kāśikāvṛtti (with Padamañjarī and Nyāsa) Vol. V
संपादकः डा० श्रीनारायणमिश्रः ८५.००

१०. काशिकावृत्तिः (पदमञ्जरी-न्यास-सहिता) भाग ६
Kāśikāvṛtti (with Padamañjarī and Nyāsa) Vol. VI
संपादकः डा० श्रीनारायणमिश्रः ८१.००

११. अष्टाविंशत्युपनिषदः (गुटका)
Aṣṭāviṁśatyupaniṣadaḥ (28 Upaniṣada)
संपादकः डा० गंगासागर रायः १५.००

१२. दुर्घटवृत्तिः (शरणदेवकृत-विवृत्ति परिशिष्ट-सहिता)
Durghaṭavṛtti of Śaraṇadeva (with Vivṛtti and appendices)
संपादकः पं० श्रीनारायण मिश्रः ५०.००

१३. तन्त्रयात्रा
Tantra-yātrā
संपादकः व्रजवल्लभ द्विवेदी ७५.००

१४. सांख्यसूत्र अनिरुद्धवृत्तिः
Sānkhyasūtra Aniruddhavṛtti
संपादकः डा० रामशंकर भट्टाचार्यः १५.००

१५. शाङ्खायनब्राह्मणम् (हिन्दी अनुवाद-भूमिका परिशिष्ट-सहितम्)
Śāṅkhāyanabrāhmaṇa (with Hindi translation, Introduction and Appendices)
संपादकः डा० गंगासागर रायः १००.००

१६. धातुप्रदीपः
Dhātupradīpa
संपदकः पं० श्रीनारायण मिश्रः (प्रेस में)

17. Vedic Śākhās
Dr. Ganga Sagar Rai 100.00


# रत्ना पब्लिकेशन्स

बी० २१/४२ ए० कमच्छा
वाराणसी-२२१ ०१०, फोन ५६९५८



## अस्मिन् अङ्के



### स्थायिस्तम्भाः



आवरणचित्रम्—कुमारी रीना देव


विश्वसंस्कृतप्रतिष्ठानम् तस्य मुखपत्रम्

# विश्वभाषा
VISHVABHASHA

अन्ताराष्ट्रिया त्रैमासिकी संस्कृतपत्रिका

चतुर्थवर्षस्य द्वितीयोऽङ्कः स्वतन्त्रादिवसाङ्कः


## वेदवाणी

( महर्षि-श्रीअरविन्द-रचित-अग्निमन्त्रमालातः )

अग्ने॒ यं य॒ज्ञम॑ध्व॒रं वि॒श्वतः॑ परि॒भूरसि॑। स इद् दे॒वेषु॑ गच्छति ॥४॥

॥ पदविन्यासः ॥

१ अग्ने॑। २ यम्। ३ य॒ज्ञम्। ४ अ॒ध्व॒रम्। ५ वि॒श्वतः॑। ६ परि॒-भूः। ७ असि॑। ८ सः। ९ इत्। १० दे॒वेषु॑। ११ ग॒च्छ॒ति॒।

॥ व्याख्या ॥

१ हे अग्निदेव ! २ यम्, ४ ऊर्ध्वगमनशीलम्, यात्रारूपिणम्। ३ यज्ञम्, ५ अभितः, त्वम्, ६ निजपरितो व्यापिसत्तया स्थितः, ७ भवसि, ८ सः, ९ एव यज्ञो नूनं, १० देवानां मध्ये, ११ गन्तव्यं धाम प्राप्नोति ॥

## सदस्यता-विवरणम्

| | |
|---|---|
| आजीवनसदस्यता-शुल्कम् | १५०-०० |
| वार्षिकशुल्कम् | १५-०० |
| प्रत्यङ्कमूल्यम् | ५-०० |

### आवेदनम्

माननीयसम्पादकमहोदयाः !

अहम्.................................

विश्वभाषायाः आजीवनं/वार्षिकं सदस्यं भवितुम् इच्छामि। तदर्थम् ............रूप्यकाणि प्रेषयन्नस्मि। कृपया अधोलिखितसंकेतेन पत्रिका प्रेषणीया—

भवदीयः

नाम.................................

सङ्केतः.................................

.................................

## मधुसंचयः

१—संशयात्मा विनश्यति।

—भगवद्गीता

२—जगति सर्वे पदार्थाः उपलब्धाः सन्ति किन्तु अभाग्यः जनः तान् न प्राप्नोति। —तुलसीदासः

३—मुखरताऽवसरेषु विराजते।

—भारविः

४—आत्मानं प्रथमः राजा विनयेनोपपादयेत्। —कौटिल्यः

५—न रत्नमन्विष्यति मृग्यते हि तत्। —कालिदासः

६—पितुः पापानि पुत्रम् आक्रामन्ति। —शेक्सपियरः

७—यथा कस्तुरी मृगस्य नाभौ भवति मृगश्च तां बहिः अन्वेषयति तथैव ईश्वरोऽपि जनानां हृदये तिष्ठति किन्तु मूढ़ाः जनाः तं द्रष्टुं न क्षमन्ते। —कबीरदासः

८—श्रुतं हरति पापानि।

—सप्तशती।

## विश्वसंस्कृतप्रतिष्ठानम्

विश्वसंस्कृतप्रतिष्ठानस्य निम्नलिखितानि महत्त्वपूर्णानि बालोपयोगीनि च प्रकाशनानि (संस्कृतअमरचित्रकथाः) सन्ति।

| पुस्तकनाम | मूल्यम् |
|---|---|
| १-गङ्गा | ३.५० |
| २-शङ्कराचार्याः | ५.०० |
| ३-विक्रमादित्यः | ६.०० |
| ४-विश्वात्मविभूतयः | ५.०० |

### आवेदनम्

मान्याः निर्देशिका महाभागाः!

कृपया प्रतिष्ठानेन प्रकाशितस्य.................... इति पुस्तकस्य....प्रतिं/प्रतीः अधोलिखितसङ्केतेन प्रेषयन्तु। तदर्थमहं.......रूप्यकाणि प्रेषयन्नस्मि—

भवदीयः

नाम.................................

सङ्केतः.................................

.................................

प्रधानसम्पादकः
पं० गुलामदस्तगीर अब्बास अली

सम्पादकौ
चौ० श्रीनारायणसिंहः
पं० राजारामशुक्लः

विराजदारः
प्रबन्धसम्पादिका
महाराजकुमारी कृष्णप्रिया

परामर्शदातारौ
डॉ० राजेन्द्रनारायण शर्मा
डॉ० रूपनारायण पाण्डेयः

# महामन्त्रिणः वार्षिकप्रतिवेदनम्–१९८९-९०

अयि सुरभारतीसेवकाः !

प्रकृतशताब्द्याः चरमे दशके संस्कृतस्य महनीययोगस्य उल्लेखेन सह प्रतिवेदनमिदं प्रस्तूयते। सम्प्रति विश्वस्य अनेकेषु देशेषु संस्कृतं प्रति वेगेन वर्द्धमानं समादरं परिलक्ष्य जनैः परिकल्प्यते यत् आगामिन्यां शताब्द्यां संस्कृतमेव विश्वभाषापदमलंकरिष्यतीति। संगणकयन्त्रे संस्कृतस्य वर्द्धमानप्रयोगेण गुप्तचराणां कृते निर्धारितेषु संकेतेषु संस्कृतस्य उपयोगेन च संस्कृतं प्रति सार्वभौमं महत्वं प्राप्तम्। एतस्मिन् परिप्रेक्ष्ये विश्व-संस्कृतप्रतिष्ठानम् न केवलम् एका संस्था अपितु स्वकीयान् प्राचीनसिद्धान्तान् अधारीकृत्य सर्वाभिः संस्थाभिः संस्थानैः विश्वविद्यालयैश्च सम्पर्कसाधिकासंस्थारूपेण कार्यं कर्तुं प्रयतते।

**त्रिभाषासूत्रम्**—यद्यपि विगताधिवेशनस्य विचार्यविषयः त्रिभाषासूत्रं नासीत् तथापि तत्र अनेकैः वक्तृभिः विषयोऽयं महत्वपूर्णं इति निर्दिश्य विस्तरेण तद्विषयिकी चर्चा कृता। प्रतिष्ठानस्य इदं सुचिन्तितं यत् संस्कृतं नैका सूचीनिबद्धा भाषा अपितु सर्वतन्त्रस्वतन्त्रा। "कुपुत्रो जायेत क्वचिदपि कुमाता न भवति" इति सूक्त्यनुसारं ये संस्कृतात् स्वयं पराङ्मुखाः सन्ति ते वस्तुतः दयापात्राण्येव। अस्माभिः तान् प्रति करुणैव कर्तव्या। हर्षस्य विषयोऽयं यत् सम्प्रति तान् प्रति महान् आक्रोशः दरीदृश्यते। किन्तु, अत्र विचारणीयमेव यत् अद्य संस्कृतस्य शिक्षणं प्रात्यक्षिकवैज्ञानिकविधिना न क्रियते अपितु अनुवादपद्धत्या अस्य शिक्षणं भवति। फलतः संस्कृतोच्चारणे विकारो जायते तथा च भाषेयं चाक्षुषी भाषा इति विज्ञायते। संस्कृतविद्यालयेष्वपि संस्कृतमाध्यमेन संस्कृताध्यापनं न भवति। हर्षस्य विषयोऽयं यत् लन्दननगरस्थे "सेन्ट जेम्स इण्डिमेण्डेण्ट स्कूल फार ब्वायज एण्ड गर्ल्स" इति विद्यालये छात्राणां पंचवर्षतः प्रात्यक्षिकविधिना संस्कृतशिक्षणं प्रारभ्यते।

**वियनानगरे अन्ताराष्ट्रीयं संस्कृतसम्मेलनम्**—अस्माभिः विश्वाध्ययन-संस्थायाः अध्यक्षस्य श्रीरामचन्द्र दाण्डेकरस्य सविधे प्रस्तावः प्रेषितः यत् उपर्युक्तसम्मेलने तद्देशीयभाषया सह संस्कृतस्यापि प्रयोगः करणीयः। अपि च, संयुक्तराष्ट्रसंघेऽपि स्वीकृतभाषाभिः सह संस्कृतस्यापि सम्पर्कभाषारूपेण व्यवहारो भवेत्। अस्माकं उपाध्यक्षस्य पं० पियरे फिलियोजमहोदस्य आह्वानम् अवलम्ब्य फ्रान्स-इटली-जर्मनीप्रभृतिदेशाः अस्मदीयं पक्षम् समर्थयित्वा अस्मान् बहूपकृतवन्तः सन्ति। किन्तु, दौर्भाग्यमेवात्र यत् भारते एव कैश्चित् स्वनामधन्यैः अस्मत्पक्षस्य विरोधः क्रियते। भारतसर्वकारं प्रति अस्माभिः अनुरोधः क्रियते यत् यदि पूर्वोक्तसम्मेलने संस्कृतभाषायै स्वकीयं महत्वपूर्णं स्थानं न दीयते तर्हि भारतीयाः प्रतिनिधिभूताः विद्वांसः विदेशयात्राप्रलोभनम् न्यक्कृत्य सम्मेलनात् विमुखाः भविष्यन्ति।

**अनौपचारिकशिक्षणक्षेत्रम्**—विश्वसंस्कृतप्रतिष्ठानम्, हिन्दूसेवाप्रतिष्ठानम्, लोकभाषाप्रचारसमितिः इत्येतासां संस्थानां कर्मठाः प्रचारकाः अस्मिन् क्षेत्रे प्रशंसनीयकार्यं कुर्वन्तः सन्ति। किन्तु, अद्यावधि अस्मिन् क्षेत्रे एतादृशस्य तन्त्रस्य विकासः न घटितः येन भारतदेशस्य पंचलक्षेषु ग्रामेषु संस्कृतस्य व्यावहारिकं रूपं प्रस्थापितं स्यात्। मानवसंसाधनविकासमन्त्रालयस्य नीतिरपि अस्यां दिशि उत्साहवर्धनं न करोति। अतएव अस्माभिः शिक्षानीतौ एतादृशान् दोषान् अपाकर्तुं अभियाचनं कृतम्। दौर्भाग्यवशात् अस्मिन् क्षेत्रेऽपि सर्वकारीयः तन्त्रः भ्रष्टाचारविमुक्तो न वर्तते। यद्यपि संस्कृतप्रचारकाणां कृते अनुदानम् स्वीकृतं तथापि वयं संस्कृतानुरागिणाम् साहाय्यं आश्रित्य संस्कृतव्रतिनाम् प्रचारकाणां साहाय्यार्थं बद्धपरिकराः स्मः।

**औपचारिकं शिक्षणम्**—वयं राष्ट्रीयशिक्षानुसंधानसंस्थानं प्रति अनेकवारम् आग्रहं कृतवन्तः यत् संस्थानं भाषारूपेण संस्कृतस्य प्रात्यक्षिकवैज्ञानिकविधिना अध्ययनाध्यापनविषये प्रेरणास्रोतः स्यात्। किन्तु अधिकारिणः अद्यावधि पाणिनिमुनिना निर्दिष्टानां ध्वनिनामपि अभिव्यञ्जिकां वर्णमालां न आलोकपथम् आनीतवन्तः। प्रतिष्ठानपक्षतस्तु श्रीवीरभद्रमिश्रेण शिशुकक्षातः दशमवर्गं यावत् प्रत्यक्षविधिना अध्ययनाध्यापन-योग्यः पाठ्यक्रमः निर्मितो वर्तते। अस्माकं उपाध्यक्षेण नेपालराजगुरुणा श्री ६ अम्बिकाप्रसाद अधिकारी-महोदयेन स पाठ्यक्रमः मानवसंसाधनविकासमन्त्रालयस्य अधिकारिणे श्री सोमदत्त दीक्षिताय प्रदत्तः। किन्तु मन्त्रालयतः इदानीमपि तं पाठ्यक्रमम् अधिकृत्य किमपि अभिमतं न प्राप्तम्।

**विडियो (दृश्यचित्रांकनम्)** :—प्रतिष्ठानद्वारा "पठत संस्कृतं पश्यत काशीम्" इत्येतेन शीर्षकेण एकादशाङ्कात्मकस्य विडियोचित्रांकनस्य निर्माणं क्रियमाणं वर्तते। यतः संस्कृतपरिज्ञानेन सहैव काशीपरिचयोऽपि उपलभ्यः स्यात्। शोधकर्तॄणाम् एकेन समूहेन वाराणस्याः दश स्थानानि निरीक्ष्य निर्धारितानि। पाण्डिचेरीस्थे श्रीअरविन्दाश्रमे निवसितः श्रीराधिकारंजनमहोदयः प्रस्तावितस्य विडियोचित्रांकनस्य पटकथां लिखन् अस्ति। भारतीयदूरदर्शनम्, श्रीलंकायाः रूपवाहिनी, नेपालदेशीयं दूरदर्शनम् इत्येभिः दूरदर्शनैः अस्माकम् उपक्रमे अभिरुचिः प्रकटिता। विगतवर्षे काश्यां घटितेन प्राकृतिकप्रकोपेण सामाजिकक्षोभेण राजनैतिकनिर्वाचनादि-जन्यविघ्नैश्च चित्रांकनस्य उपक्रमे अवरोधो जातः। शिशिरवसन्तयोः एव काश्यां चित्रांकनं कर्तुं शक्यते। अतएव दिल्लीवासिना सुप्रसिद्धेन श्रवणलोककारेण सांसदेन श्री जैनेन्द्रकुमारजैनमहोदयेन सह परामृश्य चित्रांकनं सम्प्रति अकृतमेव तिष्ठति। अस्मिन् वर्षे चित्रांकनं सम्पन्नं भविष्यतीति विश्वसिमो वयम्। चित्रांकने प्रायशः नवलक्षरूप्यकात्मकस्य धनस्य व्ययः सम्भाव्यते। भारतसर्वकारेण एतदर्थं ७,५००=०० रूप्यात्मकम् अनुदानं प्रतिष्ठानाय प्रदत्तं वर्तते।

**संस्कृतस्य प्राथमिकविद्यालयाः**—संस्कृतभाषिणाम् अल्पसंख्यकानां बालकानाम् कृते शिक्षणाय विद्यालयाः अल्पतमा एव। मुम्बईप्रदेशीयं श्रीवत्सबालमन्दिरम्, पाण्डिचेरीप्रदेशस्य श्रीअरविन्दान्ताराष्ट्रिय-शिक्षाकेन्द्रम्, वाराणसीस्थं श्रीराष्ट्रभाषासंस्थानम् इत्येते विद्यालयाः संस्कृतस्य अध्ययनाध्यापनं यथाविधि कुर्वन्ति। लक्ष्मणपुरे स्थितः अस्माकं प्रतिनिधिः श्रीवीरभद्रमिश्रः संस्कृतमाध्यमेन संस्कृतशिक्षणप्रदायिन्याः पाठशालायाः यथाशीघ्रं संस्थापनं कर्तुम् उद्यतः वर्तते। एतस्यां पाठशालायां आंग्लभाषा, हिन्दी, गणितम् इत्येतेषां विषयाणां अध्यापनं संस्कृतमाध्यमेन भविष्यति।

**विश्वभाषा** :—पण्डितगुलामदस्तगीर अब्बासअलीविराजदारमहोदयानां सम्पादकत्वे प्रकाश्यमाना "विश्वभाषा" पत्रिका निरन्तरं प्रगतिं करोत्येव। वयं प्रान्तीयशाखाभ्यः अपेक्षामहे यत् ताः विश्वभाषायाः प्रसारसंख्यां द्विसहस्रतः पंचसहस्रं यावत् वर्धनाय उद्योगं कुर्युरिति। स्वपोषकेभ्यः अनुरोधः क्रियते यत् ते स्वतः न्यूनातिन्यूनमेकस्य ग्राहकसदस्यस्य वृद्धिं कुर्युरिति। यतः विश्वभाषा आफ्सेटरीत्या मुद्रिता स्यात्।

**प्रकाशनम्** :—अस्मिन् वर्षे अस्माभिः "शंकराचार्यः", "विक्रमादित्यः" इति शीर्षकेण चित्रकथाद्वयं प्रकाशितम्। सहर्षम् उल्लिख्यते यत् शंकराचार्यस्य प्रकाशनार्थं केन्द्रियसर्वकारेण व्ययस्य ८० प्रतिशतम् अनुदानरूपेण स्वीकृतम्।

**विश्वसंस्कृतसूचनाकेन्द्रम्** :—विश्वसंस्कृतप्रतिष्ठानम् काश्याम् अन्ताराष्ट्रियं संस्कृतसूचनाकेन्द्रं संस्थापयितुं प्रयतते। तदर्थं विविन्नैः राजदूतावासैः सह सम्पर्कः साधितः। कतिपयेभ्यः स्थानेभ्यः अनुकूलम् उत्तरम् अधिगतम्। सम्प्रति प्रक्रियेयम् प्रारम्भावस्थयामेव तिष्ठति। आशास्महे यथाशीघ्रं अस्यां दिशि किंचिद् उल्लेखयोग्यं कार्यं सम्पादितं भविष्यति।

१७ मई १९९० इति दिवसे नवदेहल्यां प्रतिष्ठानपक्षतः अस्माभिः संस्कृते शपथग्राहकाणां सांसदानाम् अभिनन्दनं कृतम् । अस्मिन् प्रसंगे अत्र सखेदम् उल्लेख्यं यत् बिहारप्रदेशे नवनिर्वाचितानां विधायकानां संस्कृते शपथग्रहणे तत्रस्थैः राज्यपालमहोदयैः समुत्पादितः अवरोधः सर्वथा गर्हणीयः आपत्तिजनकश्च । सर्वैः संस्कृतानुरागिभिः एतादृशस्य व्यवहारस्य विरोधः करणीयः। अस्मिन् वर्षे अनेके संस्कृतप्रचारकाः संस्कृतविद्वांसः दिवंगताः तान् प्रति अस्माकं क्रियमाणं कार्यमेव श्रद्धाकुसुमाञ्जलिः भविष्यतीति ।

सम्प्रति स्वसहयोगिनः प्रति आभारप्रदर्शनं कुर्वन् प्रतिष्ठानकार्ये समाचरिताय दोषाय संस्खलनाय च क्षमायाचनां समाचरन् गुरुस्थानीयायाः श्रीमातुः श्री अरविन्द महाभागस्य च चरणकमलयोः श्रद्धाकुसुमाञ्जलिं समर्पयन् दायित्ववहनसामर्थ्यप्रदानाय अहं विनम्रां प्रार्थनां करोमि ।

पुरतः समुपस्थिते संस्कृतकार्ये अस्माकं विश्वाध्यक्षाः श्री काशीराजाः पुनः अध्यक्षरूपेण अस्माकं मार्गदर्शनं सम्पादयिष्यन्तीति श्री विश्वेश्वरस्य अन्नपूर्णाजनन्याश्च कृपैव ।

आगामिवर्षे सर्वे सुरभारतीसेवकाः वारम्वारं स्मरणं कुर्युः यत् :—

देवभाषाप्रसारस्य कार्यं यत् पुरतोऽस्ति नः ।
न केवलं तदस्माकं कर्तव्यं धर्मं एव वा ॥
यत्सत्यं तत्तु पूर्वेषामृषीणामृणशोधनम् ।
महाफलं महत्पुण्यमिति मे निश्चितं मतम् ॥

# सम्यक् त्वया विभज्य किमम्बुद

डॉ० परमानन्दः शास्त्री
सिद्धार्थसदनम्, मन्दिरमार्गः, अलीगढ़म्

सम्यक् त्वया विभज्य किमम्बुद !
जीवनमत्र वितीर्णं घोषय ?
रत्नाकरादागतं रिक्थं
मुधा गर्जनं विना विशोधय ॥

मा विस्मर भृत्योऽसि कस्यचित् सततलोककल्याणनियुक्तः,
जनादीनवाया[1]पादयितुं स्वैराचारं केनास्युक्तः ?
कार्पण्यं दर्शितं वर्षता क्वचित् क्वचिद्वर्षितमत्यर्थम्
अनावृष्टिमतिवृष्टिं दधता विषमतयाऽऽचरितं नु किमर्थम् ?
तुङ्गस्थितोऽसि तदपि न दूरं पश्यसि, रे दृष्टिं सम्भालय।
रत्नाकरादागतं रिक्थं विना मर्मरं शुचि निर्यातय ॥

क्वचित् पचेलिमकलमाः शुष्काः पल्लयः क्वचिदपगाभिर्गिलिता,
क्वचिदुल्लसति जीवनं क्वापि व्यायताननं मृत्युर्मिलिता।
क्वचिद् धराऽपां प्लवैर्विगलिता दरकितमुरः क्वचिच्च सरस्याः,
गताः स्थाणुतां सरसास्तरवो गर्तावटाः क्वचिच्च पयस्याः ॥
सङ्कोची त्वं क्वचिदुत्कोची कामरूपताया अतुलालय !
रत्नाकरादागतं रिक्थं विना प्रवादं लघु निर्यातय ॥

क्वचिदन्तर्ज्योतिर्दीप्तोऽपि प्राज्यं तमो वितन्वन् यासि,
क्वचिद् विकीर्योपलसंघातं दम्भोलेर्गर्जनमावहसि।
स्फुटसि क्वचित् सागरोदरमिव रणन्नूपुरं क्वचिद्वर्षसि,
क्वचित्क्षणं शम्यामुखभासा नभो द्विधा कुर्वन्नभिमर्शसि ॥
कस्मादियमत्यार्द्रहृदस्तेऽनर्गलतेति भेदमुद्घाटय।
रत्नाकरादवाप्तं रिक्थं शुचिमनसा मौनं निर्यातय ॥

वर्षणोन्मुखीं धरां स्पृशन्निव बत ! सहसा लुप्यन् वञ्चयसे,
इतस्ततो निस्सरन् पार्श्वतः ऐन्द्रजालिकानहो विजयसे।
बिन्दुमात्रनिर्वाप्यपिपासे चातकशुक्तिमुखे नो पश्यसि,
कण्टकारिजङ्गलं क्वचिद्बहु धारासारैः स्नपयन्नञ्चसि ॥
प्रतिवेशिनोः प्रवृष्यैकस्मिन् परमभिमृश्य यासि छलनामय।
रत्नाकरादवाप्तं रिक्थं जलद ! विना वादं निर्यातय ॥

अस्मिन् नभसो विस्तृतकोणे नैकान्तिकस्तवाप्यधिकारः,
अस्मास्वेव केनचिच्छंवः स्यात् करणीयो भवतो व्यापारः।
वर्ष वर्ष रे वृषभ ! समतया सकलधरोर्वरताप्रतिभूते,
लज्जास्पदमद्यापि धराऽऽस्ते रजोमयी त्वयि सति जीमूते ॥
गगनपदाप्त्यवसरे प्रतिश्रुतमद्य जनान् प्रत्येकं प्रापय।
रत्नाकरादागतं रिक्थं शुचि समतया सखे ! निर्यातय ॥

१. जनादीनवाय—जनाकल्याणाय (दोष आदीनवम् इत्यमरः)।

युवमञ्चः

# सङ्गणकीय-संस्कृतम्

## संस्कृत-भाषा-प्रचारि-सभायाः अभिनवः अभ्यासक्रमः

डॉ० चन्द्रगुप्त-श्रीधर-वर्णकरः
८१ अभ्यंकरनगरम्, नागपुरम्

साम्प्रतं सङ्गणकयुगं वर्तते। प्रमुखतः गणित-प्रयोगस्य कृते निर्मितमिदं नवयन्त्रम्। अस्य गणकयन्त्रस्य सञ्चालन-पद्धतिषु अस्माकं भारतीयानां बीजाङ्क-रेखा-गणित-प्रक्रियाणां, संस्कृत-भाषारचनायाः व्याकरण-वैशिष्ट्यानां, न्यायाङ्गानां च विशेषेण प्रकारेण प्रयोजनं विद्यते इति सद्यस्तनाः सङ्गणक-विशेषज्ञाः प्रतिपद्यन्ते। एतासां विद्याशाखानां विपुला मौलिक्यः रचनाः संस्कृते विद्यन्ते इति वयं साभिमानं वदामः। परं तासां किञ्चित् विस्मरणेन, दुर्लक्षिततया वा केवलं वृथाभिमानवत् भासते सः स्वाभिमानः। नूनम् अधुना एनं दुरभिमानं परित्यज्य तासां संस्कृत-रचनानां पुनरवलोकनं संशोधनं वा अस्माकं कर्तव्यमेव। परन्तु सामान्यतः सङ्गणकविशेषज्ञाः संस्कृत-भाषां न जानन्ति, एवं च संस्कृतज्ञाः सङ्गणकानभिज्ञाः खलु। अतएव अस्माकं भारतशासनस्य सहकार्येण संस्कृतज्ञानां सङ्गणकवैज्ञानिकानां च सम्मेलनानि नातिपूर्वं समायोजितानि। एषु सम्मेलनेषु येषां विषयाणां चर्चा अभवत् तान् अधिकृत्य 'सङ्गणकीय-संस्कृतम्' इति नाम्ना एकः वार्षिकः अभ्यासक्रमः तस्य परीक्षा च संस्कृत-भाषा-प्रचारी-सभा-द्वारा नागपुरे प्रचालितः। अस्मिन् अभ्यासक्रमे निम्नलिखितानां विषयानाम् अध्ययनं भवति—

(१) प्राथमिक-संस्कृतभाषाध्ययनम्।

(२) व्याकरणप्रवेशः, सङ्गणकप्रयोगाश्च। (Syntax)

(३) सङ्गणकार्थं संस्कृत-रचना-वैशिष्ट्यम्, कारक-प्रकरणम् च। (Semantic Nets)

(४) उच्चारणवैशिष्ट्यम् (Phonetic Transcription)

(५) शाब्दबोध-परिचयः। (Semeiotics of Language)

(६) संख्याशास्त्रम्। (Number System) गणितप्रक्रियाश्च।

(७) सङ्केतरचनाः (Encoding)। वृतप्रकाराणां सम्बन्धश्च। कटपयादि-सूत्रम्।

(८) सङ्गणकपद्धतिषु अङ्कगणितस्य, बीजगणितस्य, रेखागणितस्य, नव्यन्यायस्य च प्रयोजनम्। एतेषु विषयेषु सोदाहरण-संस्कृत-रचनाश्च।

(९) सङ्गणकसाहाय्येन देवनागरी लेखनम्; संस्कृत-रचनायाः संग्रहः अध्ययनम् च। (Word and Text Processing)।

(१०) सङ्गणकेन जन्मपत्रिका-निर्माणम्। सम्बन्धितानि सूत्राणि च।

(११) गणादेशाः (Program-Instructions), गणकपत्रनिर्माणम् (Programming) रचना-प्रकाराश्च।

(१२) विषयानुरूपाणि सम्मेलनानि, संशोधनपत्र-काणि च। □

# मण्डेलाऽभिनन्दनम्

हरिश्चन्द्ररेणापुरकरः (गुलबर्गा)

अफ्रीकाया असितजनतां श्वेतवर्णीयदास्या-
न्मोक्तुं भीमं प्रखरसमरं कुर्वते दीर्घकालम् ।
मण्डेलाय त्रिभुवननमस्याय वीरोद्भटाय
हार्दं मुक्तं मुदितमनसा स्वागतं व्याहरामः ॥१॥

अफ्रीकाराष्ट्रियजनसभाक्रान्तिकारिप्रधानो
ह्यश्वेतान्तःकरणदयितो वर्णभेदप्रतीपः ।
अष्टाविंशत्यधिकशरदो घोरकारानिबद्धो
विश्वाक्रोशं प्रबलविमतिं स्पष्टमालोक्य मुक्तः ॥२॥

हर्षोत्फुल्लैरगणितजनैः स्वागतं तस्य चक्रे
शोभायात्रा ह्यपि च महती राजमार्गेण तस्य ।
नीतोत्स्फूर्तैरुदितजयघोषैश्च लोकैः प्रचण्डा
मण्डेला वै सकलदलितोत्पीडिताऽऽशाप्ररोहः ॥३॥

ईदृग्दीर्घावधिकगुरुणा दण्डितो दण्डनेन
ह्यन्यः कश्चिन्मधुरसमयैः शत्रुवश्योऽभविष्यत् ।
मण्डेला तु स्थिरतममतिर्धीरवीराग्रगण्यो
गाढं तस्थौ नहि समचरद् वैतसीं वृत्तिमत्र ॥४॥

स्वल्पैर्गौरैर्मनुजदनुजै-र्नूनमागन्तुकैश्च
तत्रस्थाद्यान् सरलमनुजान् कृष्णवर्णीयलोकान् ।
दासीकृत्य स्वयमिह पशूनेडमूकानिवैते
मानुष्यस्याधिकृतिरहिताः प्रापिता हीनभावम् ॥५॥

कृत्वा तेषां निरतिशयितं शोषणं सर्वगामि
नीत्वा सर्वान् कृपणपशुवच्छोचनीयामवस्थाम् ।
श्वेतत्वग्भिः परिमितजनैर्वंशवर्णाविलिप्तैः
स्वस्वामित्वं विरचितमहो पञ्चकृत्वोऽधिकेषु ॥६॥

गौराङ्गैस्तैरसितहृदयैः सभ्यमन्यैश्च लोकै-
र्मानुष्यैक्यं स्मरणसरणेः सारयित्वा विमूढैः ।
तेषां वासा असितवपुषामापणाः पाठशाला-
श्चाण्डालानामिव तनुभृतां कल्पिताः पूर्णभिन्नाः ॥७॥

सार्धं गौरैरसितमनुजाः साधिकारा न वस्तुं
स्थातुं भोक्तुं ह्यपि च सह तै रेलयानेन गन्तुम् ।
लोकान् निर्वाचयितुमपि ते साधिकारा न कृष्णा
इत्थं दास्यं निरतिशयितं स्थापितं तेषु गौरैः ॥८॥

नीग्रोसंज्ञेष्वनघनिरवद्येषु गौराङ्गलोकैः
सामान्यस्वाधिकृतिनिवहान् याचमानेषु घोराः ।
अत्याचाराः कठिनहृदयैर्नूनमारोपिता ये
मण्डेलानेल्सनसमजनास्तस्य दृष्टान्तभूताः ॥९॥

वर्णायत्तो भुवि नरकृतो भेदभावो नरेषु
नूनं मिथ्या भवति नितरां गर्हणीयः समेषाम् ।
मर्त्याः सर्वे परमपुरुषस्यैव पुत्राः समानाः
सोदर्येषु प्रभवति कथं वंशवर्णादिभेदः ॥१०॥

गान्धीजीभिः शतमितसमापूर्वमेव प्रवृत्त-
मफ्रीकायामसितजनतास्वाधिकारासियुद्धम् ।
मण्डेलासन्निभनरवरैश्चाल्यमानं सधैर्यं
सिद्धिं प्राप्स्यत्यचिरमिति नो शङ्कनीयं कदाचित् ॥११॥

मुक्तेरूर्ध्वं जगति दलितोत्पीडितानां विमुक्त्यै
संघर्षार्थं जनहितकृतो लोकतन्त्रस्य हेतोः ।
यत्तेनोक्तं निजदृढमतं ज्ञापकं निश्चयस्य
रुद्धः श्वासः खलु समभवन्नेल्सनो मानवानाम् ॥१२॥

गौराङ्गाणां कुटिलजटिला वर्णभेदप्रवृत्तिः
श्यामाङ्गानां प्रति च सितवर्णीयपार्थक्यनीतिः ।
मालिन्यं स्याद्विमलविपुले भव्यमानुष्यभाले
मण्डेलाख्यप्रबलहुतभुग्ज्वालमालावलीढम् ॥१३॥

□

# कथे

## चोरिते आम्रे

आलोकः नाम कश्चिद् बालकः आसीत्। सः पठने अत्यन्तं निपुणः। परीक्षायां सदा प्रथमं स्थानं प्राप्नोत्। खेलने अपि सः अत्यन्तं पटुः। किन्तु तस्मिन् एकः अवगुणः आसीत्—असन्तोषः, विशेषतः खाद्यपदार्थेषु।

एकदा असौ तस्य लघुभ्रातरौ श्यामविवेकौ च मातुः समीपे उपविष्टाः आसन्। माता चिन्ततवती—अद्य यानि आम्राणि आनीतानि तानि त्रिभ्यः अपि पुत्रेभ्यः वितरेयम्। सा आलोकम् अकथयत्—आम्राणि आनय इति।

आलोकः तं कक्षं गतः यत्र आम्राणां करण्डः आसीत्। तत्र तस्य मनसि अयं विचारः आगतः—माता सर्वेभ्यः समानं दास्यति। कुतः न अहम् एषां मध्यतः द्वे आम्रे पूर्वमेव गृह्णीयाम्।

यदा आलोकः आम्रकरण्डम् आनीतवान् तदा माता सर्वेभ्यः चत्वारि आम्राणि वितरितवती।

आलोकः मनसि अकरोत् इमानि आम्राणि पश्चात् खादिष्यामि। पूर्वं चोरिते आम्रे खादितव्ये।

तेन तयोः एकम् आम्रफलं छिन्नम्। तत् पूतिगन्धयुतम् आसीत्। ततः द्वितीयं छिन्नम्। तदपि पूतिकं दृष्टम्। ततः तस्य मनसि महाग्लानिः उत्पन्ना। तेन अवगतं यत् चौर्यात् न कः अपि लाभः भवति। ततः प्रभृति एव स चौरकर्म त्यक्तवान्। एवम् एव बालकाः! युष्माकं माता युष्मभ्यं यत् किमपि भोजनार्थं दद्यात् तेन एव युष्माभिः सन्तोषः कार्यः—

स्वदते नहि चौरान्नं रोटिकेव श्रमार्जिता।
क्षोभयेदेव नश्चित्तं चौर्यं दुःखदपातकम्॥
तृष्णा माता हि पापस्य लोभश्चास्य पिता मतः।
सुखार्थी तौ परित्यज्य सन्तोषं सेवतां सदा॥

जगन्नाथः

## शिवः व्याधश्च

आसीत् पुरा कस्मिंश्चित् ग्रामे कश्चित् व्याधः। सः प्रतिदिनं वनस्य पशूनाम् आखेटं करोति स्म। अनेन व्यवसायेन सः स्वपरिवारस्य पालनम् अकरोत्।

एकदा सः मृगयार्थं चिराय वने अभ्रमत्। परन्तु किमपि मृगं न प्राप्तवान्। तस्मिन् दिने शिवरात्रिः आसीत्। वने भ्रमतः तस्य सन्ध्या सञ्जाता। यथासमयं गृहं प्रति निवर्तनं शक्यं न आसीत्। अतः असौ कस्य अपि वृक्षस्य उपरि उपविश्य रात्रिं यापयितुं मतिम् अकरोत्। सः एकस्य बिल्वस्य शाखाम् आरूढः।

रात्रिः आपतिता। व्याधः स्वप्तुं न अशकत्। यतः सः प्रातः कालादेव क्षुधितः आसीत्। रात्रेः चतुर्थे प्रहरे एका हरिणी तत्र आगता। सः शीघ्रम् एव स्वबाणं संयोज्य तां लक्ष्यम् अकरोत्।

सा तु स्वयम् एव तत्समीपम् आयाता करुणभावेन प्रार्थयत्—बन्धो! मा मारय माम् अधुना। इदानीम् अहं शावकानां स्तन्यपानार्थं गच्छामि। अचिरेण च प्रत्यागच्छामि। तदा एव त्वं मृगयां कुरु। व्याधः तत्स्वीकृतवान् मृगी च गता।

सद्यः तस्यां बाणसन्धानसमये व्याधेन अजानता बहूनि बिल्वपत्राणि वृक्षात् अधः पातितानि। वृक्षस्य मूले शिवस्य एका अपूजिता मूर्तिः आसीत्। तस्या उपरि एव तानि बिल्वपत्राणि पतितानि। एवं च शिवस्य अनायासपूजा अभवत्। तया आशुतोषः भगवान् शिवः अत्यन्तं प्रसन्नः। स च प्रकटीभूय व्याधाय दर्शनम् अददात्।

व्याधः धन्यः अभवत्। शिवस्य दर्शनेन तस्य मनसः सर्वे अपि विकाराः नष्टाः। सः जीवहत्यायाः त्यागस्य निश्चयं कृतवान्।

अचिरेण सा हरिणी अपि तत्र प्राप्ता। किन्तु तदा व्याधेन सा उक्ता—त्वं सुखं विचर स्वशावकान् च सुखय। एतत् श्रुत्वा हरिणी तस्मै आशिषः प्रायच्छत्।

# त्वं निवारय

**सत्यनारायण शर्मा**
कोटा

किं भविष्यति लोकवर्गाणां स्थपतिसंघं निहत्य ।
हृत्तरोर्वृन्तस्य छेत्तारं कुठारं त्वं निवारय ॥
रक्तसरितां नो प्रवाहः पूर्तिमेष्यति पावनस्य
कर्मणोऽपि तु पूतिमयतां कलुषतां च स मंक्षु यास्यति ।
बीजमपि गरलस्य वार्ता नो समं सुधया विधास्यति
प्रत्ययोऽपि च सन्निधानं विमुच्य स दूरं प्रयास्यति ॥
स्नेहवर्त्मनि वर्तिकाया मनुजतूलस्य स्मितस्य,
दीपकं प्रज्वाल्य तं विततान्धकारं त्वं निवारय ।
हृत्तरोर्वृन्तस्य छेत्तारं कुठारं त्वं निवारय ॥

कर्मणामपि वर्मणां सततं सतां कुरु धारणं त्वं,
मार्गणानामपि च दुर्वृत्तेर्विचारय विशसनं भुवि ।
यशोभुवि पदवीं विधाय भवोद्ध्वंगामी सद्विजेता,
दृक्परम्परयाऽमराः पश्यन्तु सरसां विकसनं भुवि ॥
लोकतः संगृह्य सदसून् सज्जितान् कृत्वा गृहान् स्वान्
स्वार्थपरतायाः पराकाष्ठाधिकारं त्वं निवारय ।
हृत्तरोर्वृन्तस्य छेत्तारं कुठारं त्वं निवारय ॥

चौर्यमत्याचारमपि वा सुकृततरवारं गृहीत्वा,
नित्यमेव निहत्य सलिलाञ्जलिं देहि तदीयपितरम् ।
भ्रष्टलोकानां प्रवृत्तिं मूलतश्चोन्मूल्य नितरां,
सत्प्रवृत्तेः शाद्वलं संधेहि जगतीतले सुतरम् ॥
शोणितानां द्रोणिका तृप्तेनं पर्याप्तत्वमेष्यति,
शवोपरि विहितस्य नर्तनझणत्कारं त्वं निवारय ।
हृत्तरोर्वृन्तस्य छेत्तारं कुठारं त्वं निवारय ॥

किं भविष्यति गर्दभानां चर्मकृन्तनमेव कृत्वा,
किं भविष्यति वाऽप्यजापुत्राय बलिवेदिं च दत्वा ।
किं भविष्यति पूर्णघटमापूर्य रत्नैर्जीवनैश्च,
किं भविष्यति वैरिणे वर्षं च सुमहत् स्वयं कृत्वा ॥
केहरीणां हर निपातं मृगकुलानामुपरि सततम्
सास्त्रमुखलोकस्य विषमाकारसारं त्वं निवारय ।
हृत्तरोर्वृन्तस्य छेत्तारं कुठारं त्वं निवारय ॥ □


स्वतंत्रता से
स्वाधीनता की ओर
43 वर्ष पूर्व हमने विदेशी शासन की ज़ंजीरें तोड़ीं और स्वतंत्रता प्राप्त की और उसके साथ ही शुरू हो गया स्वतंत्रता से स्वाधीनता की दिशा में हमारा संघर्ष।
यह संघर्ष जारी है – ताकि हमारे मेहनतकश देशवासियों का जीवन सुखमय बन सके।
यह संघर्ष जारी रहेगा – जब तक कि दलितों और पीड़ितों के आंसू पोंछ नहीं दिये जाते।
यह संघर्ष जारी रहेगा – जब तक कि हमारी महिलाओं का स्तर ऊंचा नहीं उठ जाता।
यह संघर्ष जारी रहेगा – जब तक कि हम प्रत्येक नागरिक को समुचित रोज़गार उपलब्ध नहीं करा देते।
यह संघर्ष जारी रहेगा – जब तक कि हम अपने गांवों में खुशहाली नहीं ले आते।
यह संघर्ष जारी रहेगा – जब तक कि हमारे लोकतंत्र की जड़ें पूरी मज़बूती नहीं पकड़ लेतीं।
स्वाधीनता की ओर हमारे कदम निरंतर बढ़ रहे हैं।

# ज्ञान शिविरम्



## ऐतिहासिकम्

१—१२०५ वर्षे कः तुर्की योद्धा बिहारप्रान्तं बंगालप्रान्तं च आक्रान्तवान् ?

| | |
|---|---|
| क | ख |
| इल्तुतमिशः | बल्बनः |
| ग | घ |
| कुतुबुद्दीनऐबकः | बख्तियार खिलजी |

२—सल्तनतकाले न्यायविभागस्य प्रमुखः कः आसीत् ?

| | |
|---|---|
| क | ख |
| काज़ी | सुल्तानः |
| ग | घ |
| वज़ीरः | उक्तेषु कोऽपि न |

३—कश्मीरस्य अकबरः इति नाम्ना कः प्रसिद्धः आसीत् ?

| | |
|---|---|
| क | ख |
| ज़ाईन-उल-अबीदीनः | शमशुद्दीनशाहः |
| ग | घ |
| सिकन्दर-बट-शिकनः | यूसुफशाहः |

४—चित्तौड इत्यत्र विजयस्तम्भः केन निर्मितः ?

| | |
|---|---|
| क | ख |
| राणा हमीरदेवः | राणा कुम्भा |
| ग | घ |
| राणा सांगा | राणा प्रतापः |

## त्रैमासिकम्

१—नेपाले प्रजातान्त्रिक-शासनारम्भः।

२—पूर्वजर्मनी-पश्चिमजर्मनी इत्यनयोरेकीकरणम् निश्चितम्।

३—श्रीरामकृष्ण हेगडे इत्यस्य योजना-आयोगस्य उपाध्यक्षपदतः त्यागपत्रं तत्स्वीकृतिश्च।

४—विश्वकप-पादकन्दुक-स्पर्धायां पश्चिमजर्मनी-दलं पूर्वविजेतृ अर्जेन्टीनादलं पराजित्य विजयि जातम्।

## विश्वप्रसिद्धपुस्तकानि

| पुस्तक नाम | रचयिता |
|---|---|
| १—गीतगोविन्दम् | —जयदेवः |
| २—पृथ्वीराजरासो | —चन्दबरदाई |
| ३—हुमायूनामा | —गुलबदन बेगम |
| ४—मैकबेथ | —विलियमशेक्सपियरः |

**परीक्षा—**

१—न्यूट्रान इत्यस्य शोधकः कः ?

२—गुरुत्वाकर्षणस्य सिद्धान्तः कस्यास्ति ?

३—वर्तमानवर्षीयः ज्ञानपीठपुरस्कारः केन लब्धः ?

४—१०० रु० नोटस्य उपरि कस्य हस्ताक्षरं भवति ?

५—योजना-आयोगस्य अध्यक्षः कः भवति ?

६—वर्तमानः भारतीयस्थलसेनाध्यक्षः कः ?

परीक्षा—उत्तराणि सम्पादक, विश्वभाषा-दुर्गरामनगरम् वाराणसी, अनेन संकेतेन प्रेषयन्तु

**उत्तराणि**

ख—४ क—३ ख—२ घ—१



# मिलनसेतुः

डॉ० भक्तिसुधा मुखोपाध्याय
भू० पू० रीडर (संस्कृतम्) काशी हिन्दू विश्वविद्यालयः, वाराणसी

**गतांकादनुवर्तते—**

[गताङ्के—जयन्तीसुव्रतयोर्मेलनम्। सुव्रतः भार्यात्यागस्य कृते स्वभार्यां जयन्तीं क्षमां याचते। तदर्थं सः मृतं स्वपितृव्यं कारणं मनुते। बहुधा तोषिताऽपि जयन्ती न तुष्यती। सुव्रतः आत्मानमपराधिनं मन्यमानः एकतः निष्क्रान्तः जयन्ती चापरतः। इतः परम्....]

**द्वितीयं दृश्यम्**

(द्वितीय—यवनिकाया उत्थानम्। ततः प्रविशति कयाचित् तरुण्या आलपन्ती जयन्ती, वाराणस्यां स्वकक्षमध्ये)।

जया—ह्यः एव त्वया सह मैत्री संजाता तथापि मे मनः त्वयि अत्यन्तं स्निह्यति। अद्य सार्ध-पञ्च-घटिकापर्यन्तं प्रतीक्षमाणाया मे त्वामदृष्ट्वा खिन्नमासीत् मनः। दिष्ट्या त्वमागतेति सुखिता अस्मि।

तरुणी—अहमपि अत्रागमनाय उत्सुकमनस्का आसम्। किन्तु किञ्चित् कार्यमापतितम् अतो विलम्बः संवृत्तः।

जया—न जाने कदा वाराणसीं परित्यज्य कलिकातायां स्वगृहं गम्यते त्वया इति विचिन्त्य दूयते मे हृदयम्।

तरुणी—यदि दैवं विपरीतं न भवेत् तर्हि शान्तिमयीं काशीनगरीं परित्यज्य मम कलिकाताप्रत्यावर्तन-सम्भावना नास्त्येव।

जया—आः परमपरितोषो मे श्रुत्वेदम्, आपरिणयम् अत्रैव त्वं स्थास्यसि।

तरुणी—(स्वोच्छ्वासम्) क्व परिणयकथा क्व चाहम्। अन्यां काञ्चित् वार्तां कुरु।

जया—तव ललितेति नाम अतिमधुरं सार्थकमपि। उक्तं हि ह्यस्त्वया मम वाराणसीनाम ललितेति। कथं वाराणसीनाम?

तरुणी—पश्चिमे वयसि मज्जन्मना सानन्देन मम पित्रा यन्नाम दत्तं तत् मह्यं नहि रोचते। अतो मातामहदत्तं ललितेति नाम उच्यते।

जया—भगिनि! मां समदुःखभागिनीं सखीं जानीहि। कथं स्वनामापि तुभ्यं न रोचते? एकदिननिरीक्षणेनैव मयानुमितोऽस्ति कश्चिन्निर्वेदः तव हृदये। स्वनामापि न प्रीतिकरम्। कथमेतत्, रहस्यं न चेत्, वक्तुमर्हसि माम्।

तरुणी—(दीर्घं निःश्वस्य) नास्ति रहस्यम्। शृणु, मात्रा मे विवाहसम्बन्धिनी वार्ता क्रियते स्म स्वजनैश्च। किन्तु अहं प्रागेव कञ्चित् पतित्वेन वृतवती। नाहं द्विराचारिणी भवेयम्। अतः मातुप्रयत्नं स्वजनानां मद्विवाहसम्बन्धिनीं वार्तां च परिहर्तुमेव अहं वाराणसीम् आश्रितवती।

जया—मैवम्, मातरं स्वहृदयवृत्तान्तं निवेद्य तमेव भाग्यवन्तं वरं वृणुष्व।

तरुणी—सर्वथेदम् असम्भवम्।

जया—कथमिव, नेच्छति माता तव तं जामातृरूपेण?

तरुणी—न तथा, भृशमिच्छति सा। कथं न भविष्यति अखिलजनप्रियः—असौ असामान्यगुणपरम्परया रामणीकतया च। धनैश्वर्यवानपि सः। किन्तु सः दुर्लभः—न केवलं दुर्लभः अप्राप्य एव सः।

जया—महती मे विस्मयपरम्परा। कः पुनः प्रतिबन्धकः तव वाञ्छितप्राप्तिविषये?

तरुणी—स एव स्वयं नेच्छति। तस्यैव असम्मतिः।

जया—कथं त्वादृशी गुणवती, रूपलावण्यवती तस्मै न रोचते। अति निरनुक्रोशः खलु सः।

तरुणी—नहि स निरनुक्रोशः। त्वं वस्तुस्थितिं न जानासि अतः एवं वदसि। प्रत्याख्याताऽपि अहम् आत्मानं बहु मन्ये यत् एवं विधाय लोकोत्तरचरिताय मम हृदयं समर्पितम्। दीर्घप्रतीक्षानन्तरं यदा एकदा मया निर्लज्जया स्वहृदयभावो निवेदितः तदा तेनोक्तं भगिनि! सिह्न्यामि त्वयि भगिनी असीति कृत्वा। मा माम् अन्यथा चिन्तय। श्रुतमेव त्वया यत् अहं परिणीत इति। मयोक्तं—श्रुतम्, किन्तु →

# पठत संस्कृतं पश्यत काशीम्

श्री वंशनारायण मिश्रः

(प्रतिष्ठानेन संकल्पितस्य संस्कृतचलचित्रस्य 'पठत'-संस्कृतं पश्यत काशीम्' प्रस्तावितं शीर्षकगीतम्)

वारि गाङ्गमिव विमलमतुल्यम्
शिव-सुन्दर-भावामृत-भव्यम् ।
वाणी-वीणा-निक्वण-रम्यम्
ऋषिगण-मुनिवर-रिक्थनिबन्धम् ॥
पठत संस्कृतम् ॥
पश्यत काशीम् ॥

निगमागमपुराणविभवाढ्यम्
मानवबोधधनं परमाढ्यम् ।
भारतभारतिरूपमनिन्द्यम्
बहुविध-भाषामूलसुविद्यम् ॥
पठत संस्कृतम् ॥
पश्यत काशीम् ॥

संसृति-संस्कृति-बोधमगाधम्
शास्त्र-विवेक-विहित-शुभलाभम् ।
साधुशब्द-सन्तति-कलिताभम्
सर्वाङ्गीण-विकास-विलासम् ॥
पठत संस्कृतम् ॥
पश्यत काशीम् ॥

---

→ ( १४ पृष्ठस्य शेषांशः )

त्वत्पत्न्याः तव सकाशे नास्ति प्रत्यावर्तनसम्भावना। अतो नाममात्रेणैव त्वं परिणीतः। सर्वैः त्वम् अकृतदार इव मन्यसे। तेनोक्तं—भ्रम एव एषः। स्थूलमिलनमकिञ्चित्करम्। अहं तया सह अन्तः-करणेन सदा मिलितोऽस्मि। कदापि सा मत्सकाशम् आगमिष्यति। अहं तत्कृते आमरणं प्रतीक्षां करिष्यामि। सैव मम हृदयेश्वरी न काऽप्यपरा।

जया—(सोच्छ्वासं सोत्कम्पं तरुण्याः हस्तं गृहीत्वा) किं तव पितृदत्तं नाम "सुनन्दा"?

□

[क्षमा प्रार्थना—मिलनसेतोः लेखिकायाः नाम पूर्वाङ्केषु त्रुटिवशात् अशुद्धं मुद्रितं—डॉ० सुधामुखोपाध्याय इति। तत्रभवत्याः शुद्धं नाम—डॉ० भक्ति-सुधामुखोपाध्याय इति। सहृदयाः पाठकाः कृपया शुद्धीकृत्य पठन्तु इति-सं०]

# प्रियाशा

राजारामशुक्लः

[गताङ्के—सुस्मिता-सागरिके प्रियाशाम् अलङ्कृत्य गच्छतः। ततो विष्णुमयस्य प्रवेशः। तयोः मधुरालापः। तावत् इन्दुमयस्य कोऽपि दूतः आगच्छति। सः शून्यालोकेन करिष्यमाणस्य इन्दुमयस्य वधविषये सर्वं वृत्तान्तं कथयति। शोकाकुलः विष्णुमयः एषोऽहमागच्छामीत्युक्त्वा तं प्रेषयति। इतः परम्.........]

**विष्णुमयः**—हा धातः! विलक्षणा ते गतिः। अद्य त्वया मधुरेण व्युपक्रम्योपसंहारः कटुः कृतः। यद्वा

योजितः शवयात्रायामुद्वाहार्थमुपागतः ॥ २६ ॥

**प्रियाशा**—(प्रविश्य) कथं धीरधुरन्धरोऽपि धैर्यं विधुरत्यार्यपुत्रः?

**विष्णुमयः**—प्रिये! किमिदानीं करवाणि?

यो मामुपकरोति स्म सदाऽऽपत्सु महामनाः।
सोऽद्यात्मानं विपत्सिन्धौ मत्कृते समपातयत् ॥२७॥

**प्रियाशा**—आर्यपुत्र! सत्वरमिदानीं दुर्जनोऽसौ समुपगम्य दत्तस्य विंशद्गुणितमपि धनं प्रतिगृह्य प्रियमित्रं मोचयितुं याचनीयोऽत्रभवता। मदीयं निखिलमपि धनमस्मिन्नेव शुभकार्ये व्ययीभवतु

धनं तु मध्यमं स्वार्थे परार्थेऽर्पितमुत्तमम्।
वेद्मि नोभयहीनं किं पाषाणमथवा धनम् ॥२८॥

**विष्णुमयः**—(सोल्लासम्)

प्राणावलम्बनाऽस्माकं प्रिया प्रियहितैषिणी।
उपमानं न पश्यामि भवत्येव भवादृशी ॥२९॥

**प्रियाशा**—तद्धन्या भविष्यामि। इदानीं त्वरामाचरत्वार्यपुत्रः।

**विष्णुमयः**—अयि! प्राणवल्लभे!

हस्तोपगम्यापि पयोजिनीं धिक्
रसं द्विरेफो न शशाक पातुम्।
नहीप्सितं सिद्धिमुपैति सर्वं
मदृष्टसाद्धयं निखिलं जगत्याम् ॥३०॥

**प्रियाशा**—आर्यपुत्र! मधुरं भवति खलु कालेनासादितं फलम्। इदानीं साम्प्रतिकं चिन्तयामः। ननु चिरायते भवान्। त्वरतामधुना। शुभा भवन्तु पन्थानः।

**विष्णुमयः**—सत्यं प्रिये नात्र विलम्बः श्रेयान्

सर्वस्वमप्युपाहृत्य मित्रमुद्धार्य यत्नतः।
भूयः प्रसन्नवदनो दिदृक्षेऽहं तवाननम् ॥३१॥

**प्रियाशा**—हन्त मदीयं हृदयं तु

प्रस्थाय नूनमधमामित आर्यपुत्रो
मां संस्मरिष्यति नवेति विशंकतेऽद्य।

**विष्णुमयः**—एतेन भिद्यते मे हृदयम्

छायामवाप्य फलदाममरद्रुमस्य
किं विस्मरिष्यति कदापि महाधमोऽपि ॥३२॥

**प्रियाशा**—आर्यपुत्र! तथापि-अभिज्ञानाङ्गुरीयकमिदं भवदङ्गुलिमलङ्करोतु (निवेश्य) अस्त्यत्रैकः समयः।

**विष्णुमयः**—कश्च सः?

**प्रियाशा**—आर्यपुत्र! नेदमङ्गुरीयकं कस्याप्यन्यस्य हस्ते पततु। मयि याचमानायां मदीयमेव स्यात्।

**विष्णुमयः**—तथा। प्रिये! साधयाम्यधुना। जनमेनं मास्म विस्मार्षीः (निष्क्रान्तः)।

**प्रियाशा**—हन्त! आर्यपुत्रस्तु प्रस्थितः। परं प्रायः कोपमदान्धाः महाधनदानेनापि न तुष्यन्ति। तत्किमिदानीं कारवाणि? (विचिन्त्य) आम्, अस्ति खलु मत्सखी नीरसा विचारनिपुणा,। सैव कमपि पन्थानं निर्देशयिष्यति। तत्तामेवापगच्छामि (निष्क्रान्ता)।

इति तृतीयोऽङ्कः ॥

(क्रमशः)

# महान् गणितज्ञः जार्जबूलमहाभागः

डॉ० रूपनारायण पाण्डेयः
प्र० ना० रा० इ० का० रामनगरम्, वाराणसी

वयं जानीमः—गणितस्य क्षेत्रे पुरा भारतीयानां ज्ञानं विदेशोद्भूतानां विदुषां कृते अपि समादरणीयम् आसीत्। भारतीयबीजगणितस्य प्राचीनां परम्परां परिहाय नवबीजगणितस्य संस्थापनं जार्जबूलमहोदयेन कृतम्। तस्य महानुभावस्यैकः परिचयोऽत्र प्रस्तूयते।

बूलमहोदयस्य जन्म १८१५ तमे ख्रिष्टाब्दे नवम्बरमासे द्वितीयदिनाङ्के आङ्लदेशे लिङ्कननगरेऽभूत्। तस्य जनकः एक चर्मजीव आसीत्। तस्यैकं लघु आपणम् अभूत्। बाल्ये अर्थाभावात् तस्योत्तमा शिक्षा न समद्यत। कथमपि तेन ग्रीकलैटिनभाषयोरध्ययनं कृतम्। षोडशवर्षानन्तरं तेन परित्यक्तमध्ययनम्। चत्वारि वर्षाणि यत्र तत्र विद्यालयेषु पाठयित्वा विंशतितमे वर्षे तेन लिङ्कननगरे एकः विद्यालयः प्रारब्धः। स्वविद्यालये छात्रान् पाठयितुं स गणितस्य पाठ्यपुस्तकानाम् अभ्यासं चकार। तेन आबेलगाल्वामहाभागयोर्मूलकृतयः समधीतः ततश्च कमपि गुरुं विना लाप्लास-लाग्राजयोः दुरूहग्रन्था आद्यन्तं चिन्तिताः।

अस्मिन्नेव काले बूलमहाभागेन स्वाध्यायेन गणितस्य क्षेत्रे निश्चरतायाः गणितीयसिद्धान्तोऽन्विष्टः। सिद्धान्तम् इमम् आश्रित्य अग्रे आइंस्टीनमहाभागेन आपेक्षिकतायाः सिद्धान्तो विकसितः कृतः। स्कॉटलैण्डदेशस्य गणितज्ञस्य डी० एफ० ग्रेगोरीमहोदयस्य सम्पादकत्वे 'द कैम्ब्रिजमैथमेटिकलजर्नल' इति नाम पत्रिकायां तेन स्वनिबन्धाः प्राकाश्यं नीताः। १८४८ तमेऽब्दे 'तर्कशास्त्रस्य गणितीयं विश्लेषणम्' इति एकः शोधनिबन्धो बूलमहोदयेन प्राकाश्यत। कृतिमिमां विलोक्य भारतजातो महान् गणितज्ञः अगस्तदेमोर्गेनमहोदयो* नितरां प्रभावितो बभूव। अस्याः कृतेः प्रभावात् तस्य भाग्योदयो जातः। सः १८४९ तमे वर्षे आयरलैण्डस्य कार्कनगरे 'क्वींस कालेज' इति नाम महाविद्यालये गणितप्राध्यापकपदमलभत। तस्य महनीया कृतिः 'चिन्तनस्य सिद्धान्तः' (द लाज आफ थाट) १८५४ तमे वत्सरे प्राकाश्यं नीता। अस्यां कृतौ तर्कशास्त्रं बीजगणितस्य सरलाकृतौ प्रस्तुतम्।

यद्यपि लघुलेखेऽस्मिन् बूलीयबीजगणितस्य विवेचनं कर्तुं न शक्यते, तथापि तस्य किमपि वैशिष्ट्यं द्रष्टव्यमस्ति, यथा—य+य=य, य×य=य इत्यादि। पूर्वं तर्कशास्त्रस्य विषयं मत्वा तस्य कृतिरुपेक्षिताभूत्, किन्तु साम्प्रतं बूलीयबीजगणितस्योपयोगेन संगणकयन्त्रं (Computer) गणनानां शक्तिमत् साधनमस्ति।

१८५५ तमे वर्षे तस्य परिणयः मेरी-एवरेस्ट महाभागया साकम् अभूत, या तु जार्ज एवरेस्टमहाभागस्य भ्रातृजासीत्। १८५७ तमे वत्सरे सः 'रायल-सोसायटी'—इति संस्थायाः सम्मानितसदस्यत्वेन मनोनीतः। एकस्य चर्मजीवस्य गृहे सम्भूय एतादृश्याः कीर्तेर्लाभो गणितस्य क्षेत्रे एका विलक्षणा घटनासीत्। दुर्दैवात् खलु १८६४ तमे वर्षे दिसम्बरमासेऽष्टमे दिनाङ्के स दिवङ्गतः।

जार्जबूलमहाभागो नूतनबीजगणितस्य संस्थापको मन्यते। १९०१ तमे वर्षे बर्ट्राण्डरसेलमहोदयेन लिखितम्—"शुद्धगणितस्यान्वेषणं जार्जबूलेन स्वकृतौ →

* देमोर्गेन महोदयः (१८०६-१८७१) तमिलनाडुप्रदेशे मदुरैनगरे जातः।

# हैमी पानकं च

राजकुमारीकृष्णप्रिया

**मृद्वीकायाः (किशमिश), नारङ्गस्य च हैमी (आइसक्रीम)**

सामग्री—१०० ग्राम परिमिता मृद्वीका, २ चषकपरिमितः नारङ्गरसः, ३ चषकपरिमितं क्वथितं शीतलं दुग्धम्, ४-५ चषकपरिमिता प्रत्यग्रस्निग्धश्वेतिका[1] (ताजा क्रीम), ३/४ चषकपरिमिता शर्करा, १ लघुचमसपरिमिता घृष्टा नारङ्गत्वक्, १ चमसपरिमिता उत्कृत्ता नारङ्गखण्डिका (सन्तरे की छिली फाँक)।

विधि—१ चषकपरिमिते नारङ्गरसे मृद्वीकाम् एकघंटापर्यन्तं निमज्जयेत्। ततः अवशिष्टे १ चषकपरिमिते नारङ्गरसे शर्करां मेलयेत्। ततः तस्मिन् आर्द्रमृद्वीकां, दुग्धं, स्निग्धश्वेतिकां, नारङ्गफलकांश्च मेलयित्वा मिश्रितं द्रवं निर्मापयेत्।

ततः हिमस्थालिकायां (आइस ट्रे) द्रवं निधाय शीतायकयन्त्रे (फ्रिज) हिमीकुर्यात्।

परिवेषणसमये गम्भीरचषकेषु २ पृथुचमसपरिमितां हैमीं निक्षिपेत्। तदनन्तरं नारङ्गफलिकाभिः विभूषयेत्।

**आम्रस्य पानकम्**—

सामग्री—एक किलोपरिमितम् आम्रफलकम्[2], १ किलोपरिमितम् जलम्, १ $\frac{1}{2}$ किलोपरिमिता शर्करा, २ चमसपरिमितं कृष्णलवणम्, एक चमसपरिमिता कृष्णमरीचिका, एकचमसपरिमिता रक्तमरीचिका, २ चमसपरिमितं सम्पिष्टं शुष्कपुदीनपत्रम्, २ चमसपरिमितं भृष्टं पिष्टं जीरकम्; २ चमसपरिमितं लवणभास्करचूर्णम्, १—$\frac{1}{2}$ चमसपरिमितं पोटेशियममेटाबायसल्फाइडम्।

विधिः—फलकानां त्वचम् उत्कृत्य [3]उत्कर्तनिकोपरि घर्षयेत्। निर्यासं (गूदा) गलनं यावत् पाचयेत्। शीतलीकृत्य चालन्या छालयेत् ततः सर्वोपस्करद्रव्य[4]-सम्पेषितं शुष्कं पुदीनं पोटेशियममेटाबायसल्फाइडं च परस्परं मेलयेत्। ततः प्रपाणकं छालयित्वा काचपात्रेषु[5] सम्पूर्य ४-५ दिनपर्यन्तम् आतपे स्थापयेत्। आवश्यकतानुसारं जलं मेलयित्वा पिवेत्। परिरक्षितम् इदं प्रपाणकं ४-५ मासं यावत् अविकृतं तिष्ठति॥

> अस्मिन् स्तम्भे प्रकाशनार्थं विविध-भोज्य-सामग्री-आभरण-परिधानादि-अत्याधुनिकविषयेषु लेखाः सादरमामन्त्र्यन्ते। उत्तमेषु एकः द्वौ वा प्रकाशतामेष्यतः-सं०

१—हैयङ्गवीनम्—सद्यो निःसरितं नवनीतम्! २—टिकोरा ३—कद्दूकश ४—मसाला ५—बोतल।

→ (१८ पृष्ठस्य शेषांशः)

'चिन्तनस्य सिद्धान्ते' विहितम्।......"तस्य ग्रन्थे प्रतीकात्मकं तर्कशास्त्रं विवेच्यते, प्रतीकात्मकस्य तर्कशास्त्रस्य तात्पर्यमस्ति—गणितम्।"

(लेखोऽयं 'विज्ञानप्रगति' (३८/८) इति हिन्दीपत्रिकायां श्रीगुणाकरमुळेमहाभागस्य 'जार्जबूल' (पृ० ३६१-३६४) इति नाम लेखम् आश्रित्य समासेन लिखितोऽस्ति)।

> सहृदयाः पाठकाः! भवतां परामर्शानुसारं 'विज्ञानलोकः' इति नाम्ना नूतनः स्तम्भः विगताङ्कतः प्रारब्धः। अस्य साफल्यं भवदधीनम्। कृपया अत्र प्रकाशनाय विज्ञानस्य कमपि विषयमवलम्ब्य लेखाः सानुग्रहं प्रेष्यन्ताम्। तेनास्माकं प्रयासः सार्थक्यं भजिष्यति—सं०

# रघुवंशमहाकाव्यम्

## [ जन्मशुद्धिः ]

रेवाप्रसादो द्विवेदी

२८, महामनःपुरी, वाराणसी-५

[पूर्वतोऽनुवर्ति-]

[पूर्वाङ्के—रघुवंशमहाकाव्यस्य परिचयः, तत्र वर्णितानां महापुरुषाणां नामानि, अध्यायसंख्या, पद्यसंख्या, छन्दसां संख्या नामानि च, नायकनाम, तस्य संक्षिप्तः परिचयश्च निरूपिताः। इतः परम्-]

परस्परं बद्धभावौ, तुल्यानुभावौ सदृशशीलौ चास्ताम्। अनुहरतः स्म तौ, तत एव, दक्षिणाध्वरौ [१·३१], शचीपुरन्दरौ, उमावृषाङ्कौ [३·२३], सन्ध्यादिवसौ [२·२०], विद्युदैरावतौ [१·३६] च चित्राचन्द्रमसाविव [१·४६]। आसीत् किल सुदक्षिणा मगधवंशभवा कन्या। आसीदस्या अनितरसामान्यं दाक्षिण्यमैक्ष्वाकवे भर्त्तरि दिलीपे। 'सुतरां दक्षिणा अनुकूला सुदक्षिणे'-त्यत एवास्या अन्वर्थम् अभिधानम्। आसीदस्या दाक्षिण्यरूपमानुकूल्यं संयमप्रधानैराचारैरपि बद्धमूलम्। आसीदस्या नारीशरीरमपि मातृत्वसमेधितम्। दिलीपस्य हि भूयांस्येवाभूवन् कलत्राणि, किन्तु सुदक्षिणादेव्यैव अभ्यमन्यत असौ आत्मानं कलत्रवन्तम्, वसुधाधिपत्ययुक्तमिव लक्ष्म्या [१·३२]। सुदक्षिणैवासीद् आधाने, धारणे, पोषणे, प्रसवे चानघत्वमेदुरे समर्था गर्भस्य। अस्यामेव जायेति मातृत्वमहिता पदवी यथार्थायते स्म दिलीपाय। ऐक्ष्वाकवो महाराजो दिलीपोऽपि प्रतिदिनमुपचीयमानेन अत एव देहपदवाच्येन सयौवनवैभवेन, शोभनधातूच्चयेन कान्तिप्लवसंप्लुतेन च वपुषा दृश्यते स्म क्षात्र इव धर्मः शरीरबन्धेन सहितः। दैवयोगेन पुनर्नाविन्दतासौ सन्तानम्। आसीदसौ निरपत्यः। नाजायतास्यैकमप्यपत्यं पुत्रो वा पुत्री वा। सन्तानं प्रतीक्षमाणस्यास्य व्यतीयाय महीयानवधिः। यजमानस्य सर्वासामप्यापदां प्रतिकर्त्तृत्वधूः पुरोधसि तिष्ठतीति दिलीपः कुलगुरुं वसिष्ठमैच्छदुपेतुम्। प्रातिष्ठत स सुदक्षिणा-द्वितीयो वसिष्ठायाश्रमपदाय यात्रानुकूले मुहूर्त्ते यथाशास्त्रं विधातारमभ्यर्च्य। प्रावृषेण्यं पयोवाहं विद्युदैरावताविव ताविमौ स्निग्धगम्भीरनिर्घोषं स्यन्दनमेकमारुह्य गच्छन्तौ मार्गे आधूतवनराजिभिः, पुष्परेणूत्किरैः, सालनिर्यासगन्धिभिः सुखस्पर्शैश्च वातैः सेव्यमानौ सन्तौ रथनेमिस्वनोन्मुखानां मनोऽभिरामाः षड्जसंवादिनीः केकाः श्रावं श्रावम् अदूरोज्झितवर्त्मसु स्यन्दनाबद्धदृष्टिषु च मृगद्वन्द्वेषु निरवर्णयेतां परस्पराक्षिसादृश्यम्। बद्धश्रेणीका वितन्वन्ति स्म अनयोर्मूर्धनि सारसाः तोरणस्रजमस्तम्भावष्टम्भतया विभ्राजमानातिशयाम्। उन्नामयाञ्चक्रतुस्तौ स्वं स्वमाननपुण्डरीकं तेषां कलान् निर्ह्लादानाकर्ण्य। प्रार्थनासिद्धिशंसिनो वाता अपि तयैव दिशा प्रावर्त्तन्त अनुसस्रतुर्यामिव स्यन्दनोद्धूतै रजोभिरस्पृष्टालकवेष्टनाविभौ। उपजघ्रतुरिमौ स्वनिश्श्वासानुकारिणमरविन्दानां वीचि-

---

सूच्यम् : श्लोकाः पाठाः सन्दर्भाश्चाऽत्र काशीहिन्दूविश्वविद्यालयतः १९८६ वत्सरे प्रकाशितायां कालीदासग्रन्थावल्यां द्रष्टव्याः।

विक्षोभशीतलमामोदं सरसीषु। परिवार्य पर्यवीवृधन् यज्वानोऽध्यानुपदीनाभिराशीभिरिमौ यूपचिह्नेष्वात्मविसृष्टेषु अग्रहारनाम्ना प्रसिद्धेषु ग्रामेषु। हैयङ्गवीनमादाय उपतिष्ठमानानपृच्छतामिमौ वन्यानां मार्गशाखिनां नामधेयानि घोषवृद्धान्। 'एष मृगः, एष वराहः, अयं वेशन्तः, इयं वनराजिरित्येवं तानि तानि वस्तूनि धर्मपत्न्यै दर्शयन् दिलीपो लङ्घितमप्यध्वानं नाबुध्यत, प्रापच्च गुरोराश्रमं सायन्तने समये। अत्र खलूपावर्त्तन्तेतरां तपस्विनो वनान्तरात्। सन्त्येतेषां स्कन्धेषु समिधः कुशाश्चासक्ताः। प्रत्युद्गम्यन्त एते अदृश्येनाश्रमवह्निना। आसीदेष आश्रमः समाकीर्णः ऋषिपत्नीनां नीवारभागधेयोचितैरपत्यैर्मृगैश्च। आलवालाम्बुपायिनां विहङ्गानां विश्वासाय पर्यत्यज्यन्त तत्र वृक्षाः मुनिकन्यकाभिः सेकान्ते, अवर्त्तयन्त मृगा आतपापायसंक्षिप्तनीवारासु उटजाङ्गनभूमिषु रोमन्थम्, अपावयन्ताश्रमोन्मुखानतिथीन् आहुतिगन्धिनोऽभ्युत्थिताग्निपिशुनाश्च यज्ञधूमाः। तदिदमाश्रमपदमिति सुव्यक्तमेव लक्षणैरेतैः।

रथात् सुदक्षिणामवतार्य स्वयमप्यवतीर्णो दिलीपो यन्तारमादिदेश धुर्यान् विश्रामयेति। 'मा भूदाश्रमपीडेति परिमेयपुरस्सरोऽप्यनुभावविशेषेण सेनापरिवृत इव सभार्यो राजा मुनिभिरुपहृताभिस्तत्तभिरर्हणाभिर्विनीतपरिश्रमः सुस्थश्च भूत्वा सायन्तनस्य सवनविधेरन्ते स्वाहया सहितं हविर्भुजमरुन्धत्या समेतं वसिष्ठं च युगपदेवाक्षिसादकरोत्। पादौ गृहीत्वा विहितवन्दनौ ताविमौ सुदक्षिणा-दिलीपौ गुरुदम्पत्यपि प्रीत्या प्रतिननन्दतुः। अथ सूनृतवाक्षु बृहस्पतिर्महामुनिर्वसिष्ठः पप्रच्छ 'राजन्, अपि भवान् सपौरजनपदः कुशली'-ति। राजाऽपि सप्रश्रयं प्रत्यावोचत्—

(क्रमशः)

---

# द्विप्रहरः

डॉ० केशवचन्द्रदाशः
दर्शन-प्राध्यापकः श्री जगन्नाथ संस्कृतविश्वविद्यालयः पुरी-७५२००२

दूरायते द्विप्रहरः
निदाघस्य स्वेदं गालयितुं
हेमन्तस्य प्रत्यूषकुसुमे,
स्मृतिसिक्तवर्त्तमाने
तुलसीव पुण्यायते
सन्तानवत्सला या
मामकीनी मुद्रा—।
तरणितरङ्गयोः प्रस्थविनिमये
देहतो वयो विगलति
भाषाया व्याकरणमिव
प्रतीक्षाया नामान्तरे
अवहेला अन्तरङ्गायते
मातुर्मुखं निलीयते
दूरताया यामलकपाटे।
स्वप्नसूचीपत्रे विभासते
उर्वरशपथः ···· ···
मालाकारनयने यथा कुसुमवृत्तान्तः।
न दृश्यते परं वशंवदपथः—।
पल्वलजले तथैव विधुरो भवति
बिम्बनिवहः ··· ····
विधवामातुर्लोतकदर्पणे यथा
इन्द्रियाणां विषयपर्यायः,
अयमेव परिचयः
उपलब्धेरयं च प्रचयः
राधाया यन्त्रणातले
चपलायते यमुनायाः पयः।
स्खलति द्विप्रहरः ···· ····
सत्यं यथा अन्वेषणचिह्ने
हृदयं तु विहरति
अपरविपिने ···· ····।

पुस्तकसमीक्षा

# महर्षिश्रीबोधायनप्रणीतम् 'श्रीगृह्यसूत्रम्'*

**डॉ० रूपनारायण पाण्डेयः**
संस्कृतप्रवक्ता, प्र० ना० रा० इ० का० रामनगरम्, वाराणसी, २२१००८

वेदो ह्यस्माकं धर्मस्य संस्कृतेः परम्परायाश्च मूलम्। वेदानां गम्भीरत्वात् तेषां सुबोधाय वेदार्थविद्भिर्महर्षिभिर्वेदाङ्गानि प्रणीतानि। तेषु वेदाङ्गेषु कल्पसूत्रस्य प्राधान्यं विद्यते। कल्पसूत्रं चतुर्विधं वर्तते—श्रौतसूत्रम्, गृह्यसूत्रम्, धर्मसूत्रम्, शुल्वसूत्रं च। श्रौतयागानां विवेचनं श्रौतसूत्रेषु विलसति, गृह्यकर्माणि गृह्यसूत्रेषु विवेच्यन्ते, वर्णाश्रमधर्मादयो धर्मसूत्रेषु वर्ण्यन्ते, यागार्थं वेदिसंरचनादिकं च शुल्वसूत्रेषु प्रतिपाद्यते। गृह्यसूत्रेषु बौधायनगृह्यसूत्रं प्राचीनतमं मन्यते। पूर्वं चेन्नपुर्यां १८९६ तमे ख्रिष्टाब्दे, ततः १९०४ तमे ख्रिष्टाब्दे मैसूरस्थ-'ओरियण्टल-सोसायिटी' संस्थया, पुनः १९२० तमे ख्रिष्टाब्दे च मैसूरविश्वविद्यालयतः बौधायनगृह्यसूत्रं प्रकाशितमभूत्। तं ग्रन्थम्, अन्यान् च हस्तलेखान् समवलोक्य विद्वद्वर्येण श्रीरामचन्द्रशास्त्रिणा स्वपरम्परां चानुगम्य संजीविनीव्याख्यासहितो ग्रन्थोऽयं प्राकाश्यं नीतः।

अस्य ग्रन्थस्य प्रथमे भागे चत्वारः प्रश्नाः सन्ति। **प्रथमे प्रश्ने**—सप्तपाकयज्ञानां निर्वचनम्, विवाहः, कन्यादानम्, मधुपर्कः, सर्वसाधारणाग्निमुखम्, विवाहहोमः, वधूप्रवेशः, विवाहव्रतम्, स्थालीपाकः, चतुर्थीपक्वहोमः, उपसंवेशनम्, रजस्वलाया नियमाः, गर्भाधानम्, पुंसवनम्, सीमन्तोन्नयनम्, विष्णुबलिः, षोडशोपचाराः च; **द्वितीये प्रश्ने**—जातकर्म, फलीकरणहोमः, नामकरणम्, उपनिष्क्रमणम्, अन्नप्राशनम्, कर्णवेधः, चूडाकर्म, उपनयनम्, पक्वशेषप्राशनम्, भिक्षानियमाः, संध्यादिनियमाः, अग्निकार्यम्; समावर्तनम्, स्नातकाः, अग्न्युद्वाते प्रायश्चित्तम्, शूलगवः, वैश्वदेवबलिहरणम्, ब्रह्मयज्ञः, प्रत्यवरोहणम्, अष्टकाश्राद्धम्, अष्टकाधर्मातिदेशश्च; **तृतीये प्रश्ने**—उपाकर्म, अनध्यायः, पञ्चकाण्डमन्त्राः सविवरणम्, कारीरीव्रतादि, शुक्रियव्रतम्, सर्वव्रताङ्गनियमाः, उपनिषद्व्रतम्, गोदानव्रतम्, सम्मितव्रतम्, अध्ययनव्रतम्, आचारमहत्त्वप्रतिपादनम्, वास्तुशमनम्, अद्भुतशान्तिः, ग्रामोत्पातशान्तिः, आयुष्यचरुहोमः विरूपाक्षपत्न्यै पूजा, उत्सर्जनम्, सर्पबलिः, अष्टकानुकृतिर्मासिकं, नान्दीश्राद्धं, मध्यमपिण्डप्राशनं च, **चतुर्थे प्रश्ने**—ऋतुसंवेशनाद्यतिक्रमे छेदनभेदनादौ च प्रायश्चित्तम्, सर्वपापक्षयसूक्तम्, सप्तपाकयज्ञप्रायश्चित्तानि, व्रतस्थदीक्षितानां प्रायश्चित्तम्, भयादिप्राप्तौ दुःस्वप्ने च प्रायश्चित्तम्, प्रायश्चित्तहोमानां समयः, हविर्दोषाः, नानाविधानि च प्रायश्चित्तानि-इत्यादयो विषया प्रतिपादिताः सन्ति। ग्रन्थारम्भात् प्राक् श्रीमद्राघवेन्द्रभारतीस्वामिप्रभृतीनां संदेशः, पण्डितप्रकाण्डानां श्रीभालचन्द्रशास्त्रिणां भूमिका, व्याख्याकारस्य परिचयः, तस्यात्मनिवेदनं च वर्तन्ते, ग्रन्थान्ते च पुरुषसूक्तं सोमोत्पत्ति बार्षदर्भी-इतिहासं चरणव्यूहं चेति खिल पञ्चकम्।' (बौ० गृ० २।२२।६४) इतिसूत्रस्य विस्तृतं विवरणं विराजते। ततोऽशुद्धमुद्रितानां शब्दानां शुद्धिपत्रिका वर्तते।

स्वपितृपादात् समधीत्य सकलं कल्पसूत्रं विद्वद्वर्येण श्रीरामचन्द्रशास्त्रिणा पूर्वमुद्रितगृह्यसूत्राणि, अन्यान् च हस्तलेखान् समीक्ष्य, स्ववंशपरम्परयाधिगतं ज्ञानं च समाश्रित्य महर्षिबोधायनप्रणीतम् इदं गृह्यसूत्रं

---

* श्रीगृह्यसूत्रम्, प्रथमभागः—श्रीरामचन्द्रशास्त्रिसूरिविरचितया 'सञ्जीविनी'-समाख्यया व्याख्यया समलङ्कृतम्। प्र०—श्रीसुब्रह्मण्यप्राच्यविद्यापीठम् कवलक्कि, भाक्केरि ५८१३३४, होन्नावर (उ० क०)। पृ० सं० ३४+२०+२५२+२६ मूल्यम्—उल्लिखितं नास्ति।

भूरिपरिश्रमेण सम्पादितम् । सम्पादनेऽस्मिन् गृह्यसूत्रस्य विशुद्धः पाठ एव स्वीकृतः, हस्तलेखादीनाम् अपपाठाः पाठभेदा वा प्रायशोनैव प्रदर्शिताः; पाठान्तराणि च यत्र कुत्रैव प्रदर्शितानि । पण्डितप्रवरेण विहिता संजीविनीव्याख्या यथास्थानं संक्षिप्ता विस्तृता च वर्तते । कानिचित् सूत्राणि पदानि वा विशदार्थत्वाद् नैव विशदीकृतानि परिहृतानि वा, परन्तु गृह्यशास्त्रानभिज्ञानां जनानां कृते तानि सूत्राणि पदानि वा भावावबोधे क्लेशमेव जनयन्ति; तद् यथा—'उपलिप्य दध्योदनं···' (बौ० गृ० १।२।११) इति सूत्रे 'ब्राह्मणानन्नेन परिविष्य' इति सूत्रभागो व्याख्याभावाद् गृह्यशास्त्रबोधविहीनाय सुस्पष्टो न भवति । तथैव 'अथैनामन्तरेण दर्भेण भ्रूमुखे सम्मार्ष्टि—····' (बौ० गृ० १।२।१४) इति सूत्रे 'सम्मार्ष्टि' इति पदं व्याख्यातं नास्ति । अविदितशास्त्रार्थेन सम्मार्जनं व्याख्यानं विना विधातुं न शक्यते । अतोऽहं मन्ये—बौधायनगृह्यसूत्रस्य संजीविनीव्याख्यायामस्यां गृह्यशास्त्रतत्त्वज्ञेन शास्त्रिमहाभागेन समेषां समुपयोगाय स्थाने स्थाने व्याख्यानं विना परित्यक्तानि बहूनि सूत्राणि पदानि चाग्रे (अग्रिमे संस्करणे, अन्तिमे भागे वास्य ग्रन्थस्य) व्याख्यातव्यानि ।

वैदिकानां धार्मिकाणां च जनानां भारतीयधर्मसंस्कृतिपरम्पराध्ययनतत्पराणां विदुषां कृते सञ्जीविनीव्याख्योपेतं गृह्यसूत्रमिदमतीवोपकारि ज्ञानवर्धकं चास्ति । अत्र शास्त्रिवर्यस्य सञ्जीविनीव्याख्येयं रघुवंशे टीकाकारशिरोमणेर्मल्लिनाथस्य सञ्जीविनीं संस्मारयति यत्र मूलानुसारं सर्वम् अपेक्षितमुच्यते, किन्तु निर्मूलम् अनपेक्षितं किमपि नास्ति शास्त्रविदां कृते । व्याख्याया वैशिष्ट्यं विद्वद्भिरत्र विलोकनीयमस्ति—**यं कामं कामयते तं मनसा ध्यायेत्**—यं कामं =काम्यं पुत्रम् ऋषिकल्पं भ्रूणादिकं वा कामयते = कामयतः । ध्यायेत्=ध्यायेताम् । ऋतुसंवेशनकाले यादृशीं भावनां कुरुतः, तादृशं पुत्रं लभेते इति शास्त्रम् । युक्तं चैतत्–रेतसः सेककाले मातापित्रोः मनसि उद्भूतः तज्जन्यः सूक्ष्मः संस्कारः मनोजन्ये रेतसि प्रविशति—इति वैज्ञानिकम् ।' (बौ० गृ० सं० ४।१३।१८, प्रथमो भागः, पृ० २५१) सूत्रेषु सङ्केतेन संक्षेपेण वा गदिता वैदिकमन्त्राः, पारिभाषिकपदानि वा प्रयुक्तानि संजीविन्यां समग्रविवरणेन संप्रस्तूय सामान्यजनानां जिज्ञासोपशमनस्य नितरां प्रशंसनीयः प्रयासोऽकारि सम्पादकमण्डलेन । कर्णाटकभाषाभाषिणां सुबोधाय कर्णाटकभाषया ग्रन्थस्य विशिष्टभूमिकाया अनुवादः तेभ्योऽतितरां रोचेत !

अर्घ्यंमधुपर्कयोर्विभेदं सर्वे जानन्ति, किन्तु कथं गृह्यसूत्रव्याख्यायां द्वयोरेकार्थता विद्यते—इति नैव प्रकटीकृतं व्याख्यात्रा ।[1] 'यः प्राह, स तस्मा उपाकरोति ।' (बौ० गृ० १।३।३७) इत्यादिसूत्रेषु गोवधो दृश्यते । शास्त्रदृष्ट्या लोकदृष्ट्या चाप्यत्र विशिष्टं व्याख्यानम् अपेक्ष्यते ग्रन्थेऽस्मिन् । अस्य लोकोपयोगिनो ग्रन्थस्य द्वितीयोऽपि भागः[2] प्राकाश्यं नीतो विलसति भागेऽस्मिन् चत्वारः प्रश्नाः (परिभाषाप्रश्नः, सूक्तसमुच्चयप्रश्नः, शेषसूत्रस्य प्रथमः प्रश्नः, द्वितीयश्च) प्रकाशिताः सन्ति । इत्थं समग्ररूपेण प्राकाश्यं नीयमानम् इदं बोधायनाचार्यप्रणीतं गृह्यसूत्रं संजीविनीसमाख्यया व्याख्यया समलङ्कृतं न केवलं धर्मानुयायिभिरेव संग्रहणीयं पठनीयं चास्ति, अपितु गीर्वाणवाणीसमाराधनातत्परैरपि वैदिकसंस्कारपरम्परादीनां सुबोधाय ।

'वेदो वा हरिभक्तिर्वा भक्तिर्वापि महेश्वरे ।
स्वाचारात् पतितं मूढं न पुनाति द्विजं नरम् ॥'
(बौ० गृ० ३।८।२०)

'अहिंसकस्य दान्तस्य धर्मार्जितधनस्य च ।
नित्यं च नियमस्थस्य सदा सानुग्रहा ग्रहाः ॥"
(बौ० गृ० ७।१३।५४)

स्तम्भेऽस्मिन् नवीनानां तथैव प्राचीनानां ग्रन्थानां योग्याः समीक्षाः प्रकाश्यन्ते । अत्र समीक्षार्थं मूलग्रन्थस्य प्रतिद्वयं प्रेषणीयं भवति । यदि कोऽपि स्वयमेव समीक्षां विलिख्य प्रकाशयितुमीहते तर्हि तेन समीक्षया सह मूलग्रन्थस्य एका प्रतिः कार्यालये प्रेषणीया—सं०

१. 'अर्घ्यम्=मधुपर्कः' (बौ० गृ० सं० १।३।१, प्र० भा०, पृ० ११, २।१५।१२, प्र० भा०, पृ० ९८) ।
२. गृह्यसूत्रम् (महर्षिबोधायनाचार्यप्रणीतम्), द्वितीयः भागः । १९८९, पृ० सं० २४+१५४+२०, मूल्यम्—१००/-

# पादकन्दुकम् (Football)

**कु० मिताली देव**
एम० ए० (संस्कृतम्); का० हि० वि० वि०, वाराणसी

वृन्दावने हि यमुनापुलिनेऽतिरम्ये
तद्द्वापरान्तसमये निजबधुवर्गैः।
क्रीडन् करोतु किल कन्दुककेलिलीला-
मस्माकमुष्मशमनं ननुनन्दसूनुः॥

अथातः पादकन्दुकं व्याख्यास्यामः—

१९९० वर्षः पादकन्दुकक्रीडाजगति सर्वदा स्मर्तव्यः, ऐषम एव 'विश्वकप' प्रतिस्पर्धाऽऽयोजनात्, यत्र च रोमांचितस्पर्धायां स्वर्णकपविजेतारम् अर्जेन्टीनादेशं पश्चिमजर्मनी जिगाय।

**उपक्रमः**

पुरा प्रभृत्येव पादकन्दुकं क्रीडाजगति कामपि विशेषकोटिमाटीकते, तत्तत्काले च भिन्नरूपा इयं खेला, कदाचित् सामन्तप्रियाऽपि कालान्तरे सार्वजनीना जाता। पाश्चात्त्यैः च साग्रहम् इयं स्वीकृता। ग्रीकरोमन्सजनैः च एषा महत्त्वमारोपिता। सम्प्रति तु प्रकामं विस्तृता जाता, एतदुपकरणानां स्वल्पमूल्यसाध्यत्वेन अधिभारतं प्रायः प्रति ग्रामं प्रसिद्धा।

**अस्याः स्वरूपम्**

अस्यां दलद्वयम्, सम्मिल्य च द्वाविंशतिः क्रीडकाः, अतश्च बहवः बालाः लब्धाऽवसरा अत्र। व्यायामात्मिका इयं खेला उन्मुक्तक्षेत्रसाध्यत्वेन सर्वथा स्वास्थ्यप्रदा। अस्यां खेलायां क्रीडकानां मानसिकविश्वासः, खेलाप्रवृत्तिः, एकता च विकसति।

विश्वसंस्कृतप्रतिष्ठानस्य विश्वाध्यक्षाः श्रीमन्तः महामहिमकाशीनरेशमहोदयाः तत्तत्खेलासु पादकन्दुकप्रतियोगितामपि महत्त्वं प्रापयन्ति।

**अस्याः इतिहासः**

पादकन्दुकं प्रकामं प्राचीनम्। अष्टादशशताब्यामध्ये क्रीडाजगति पादकन्दुकव्यवस्थाप्रस्तावप्रसङ्गे विशेषज्ञानां मतानि इत्थम् अविद्यन्त यत् हस्तपादस्य कतरेण इदं खेलनीयम्। तत्र हस्तपक्षाभिमानिनां मते अस्य नाम '*Rugby Football*' इति। पादपक्षाभिमानिनां मते च अस्य नाम '*Association Football*' इति जातम्। सम्प्रति तु '*Football*' अथवा '*Soccer*' इति नाम्ना एव एतस्याः प्रसिद्धिः। एसोसियेशनफुटबालवादिनां संघटनं १८६३ वर्षे जातम्।

**केचन पारिभाषिकाः शब्दाः**

१—Half Line—मध्यरेखा, २—Penalty Area—दण्डभूमिः, ३—Penalty Spat—दण्डताडनस्थानम्, ४—Gool Area—सीमक्षेत्रम्, ५—Gool Line—सीमरेखा, ६—Corner Area—कोणभूमिः, ७—Flag—ध्वजः, ८—Touch Line—स्पर्शरेखा।

क्रमानुसारं स्थानानि क्रीडाङ्गणस्य चित्रे द्रष्टव्यानि—

**उपकरणम् प्रयोजनानि च**

एतत्खेलार्थम् एकम् अस्थपुटम् (स्थपुटम्=निम्नोन्नतम्) आयतञ्च क्षेत्रम् आवश्यकम्, यस्य दैर्घ्यं ११०-१२० गजपरिमितम्, प्रस्थं च ७०-८० गजपरिमितम्। चित्रानुसारम् अस्य क्षेत्रस्य द्वौ समांशौ भागौ भवतः। एकादशक्रीडकानां समूहद्वयम्, प्रतिभागं यथास्थानं तिष्ठति। दैर्घ्यस्य द्वयोः अन्तिमप्रान्तयोः मध्ये, नाट्यमञ्चे कुतपसन्निवेश इव, साम्प्रतिकम्

आर्कैष्ट्रापार्टीस्थानमिव वा 'गोलपोस्ट' (स्तम्भविशेष-द्वयम्) अंकितं भवति। निर्दिष्टपरिमाणस्य निर्दिष्ट-भारस्य च चार्मस्य वायुपूर्णस्य कन्दुकस्य स्थितिः विस्तृतक्षेत्रस्य मध्यरेखायाः केन्द्रे भवति।




(क्रीडाङ्गणम्)

### खेलप्रक्रिया

अस्यां क्रीडायां निर्णायकः वंशी[1]ध्वनिना खेलां प्रारम्भयति। सार्धैकघण्टात्मिकायाः अस्याः खेलायाः समयविभागः समानः अर्थात् ४५ क्षणात्मकं वारद्वयं खेला भवति। मध्ये च विश्रामः, स च '*Half time*' इति कथ्यते। प्रतिदलम् एकं गोलपोस्टचिह्नं भवति। क्रीडकेषु एकः अपरदलीयस्य गोलपोस्टचिह्ने कन्दुकं प्रापयति, सति च तस्मिन् अंकलाभो भवति। इदमेव 'गोल' इति कथ्यते। अधिकगोलभाक् दलं विजयि भवति। प्रतिस्पर्धायां दलद्वयस्य अंकः समानश्चेत्, तदानीम् '*Penalty Shoot Out*'[2] विधिना विजयः निश्चीयते। सम्प्रति तु अनेकनियमपरतन्त्रीतन्त्रीयन्त्रिता इयं खेला। निर्णायकस्तु सावहितेन चेतसा सर्वं विविनक्ति।

### एतस्याः लाभः

क्रीडकानां शारीरो मानसो विकासः, खेलाभावना च वर्धते। किञ्च क्रीडकेषु अनुशासनं सहयोगभावना च वर्धेते।

### नियमोल्लंघने दण्डविधानम्

क्रीडानियमोल्लंघने च निर्णायकैः क्रीडकाः दण्ड्यन्ते। यथा हरित-पीत-रक्तपत्रात्मकाः बहवो दण्डाः अस्यां क्रीडायां विधीयन्ते। तथाहि प्रथमं तावत् क्रीडकेन अनुशासनभङ्गे कृते निर्णायकः पूर्वोक्त विभिन्नवर्णात्मकं पत्रं प्रदर्श्य सावहितं करोति। अनवहिते च क्रीडके रक्तपत्रप्रदर्शनात् परं क्रीडाक्षेत्रात् यथासमयं सः निष्कास्यते।

### उपसंहारः

पूर्वोक्त कारणैः अनया खेलया क्रीडकेषु जागरूकता, नियमानुसारिता, औचित्यभावना च वर्धते। एभिरेव कारणैः प्राचीनाऽपि पादकन्दुकक्रीडा सम्प्रति विश्वस्मिन् तत्तद्देशेषु क्रीडाजगति स्वाधिपत्यं लोकप्रियत्वं च प्राप्तवती।

**यच्चैकादशबालकद्वयदलेन क्रीड्यते साग्रहं**
**भूयो यत्रस्थपुटेतरायतमहीमध्ये भवेद् विस्तृता।**
**चर्माऽऽवेष्टितवायुपूरितमहाचार्मं तु गोलात्मकं**
**राराजीति च पादकन्दुकमहाक्रीडाभिधानं महः॥**

---

१. शुषिरिका (सीटी), २. अस्मिन् समये दण्डभूमौ (पेनाल्टी एरिया) गोलरक्षकातिरिक्तः तद्दलीयः कोऽपि न तिष्ठति।

# अक्षरबन्धः

## (प्रतियोगिता)

—चौडूरि उपेन्द्र रावः
महबूबुनगरम्, आन्ध्रः प्रदेशः

| क | वि | रा | जः | का | ल |
|---|---|---|---|---|---|
| वा | था | व | भा | द | क्ष्मी |
| टः | स | ण | र | म्ब | प |
| भा | क | व | विः | री | तिः |
| र | णः | ध | द | भू | भा |
| ती | मा | म् | व | त्ता | सः |
| शी | ला | भ | ट्टा | रि | का |

**विषयाः**

१—'राघवपाण्डवीयम्' इत्यस्य कर्ता अयम् ।
२—गद्यकाव्यं द्विप्रकारकं, तयोः अन्यतरः प्रकारः ?
३—दशरूपकेषु अन्यतमोऽयम् ।
४—'भट्टिकाव्यं' कविना अनेनैव नाम्ना आहूतम् ।
५—इयं संस्कृतकवयित्री ।
६—अद्य लभ्यमानेषु गद्यकाव्येषु प्राचीनतमं गद्यकाव्यम् ?
७—अयं प्रसिद्धः गद्यग्रन्थः कथानायिकायाः नाम्ना ख्यातः ।

नाम··· ··· ··· ··· ··· ···

सङ्केतः······ ··· ··· ···· ···

··· ··· ··· ··· ···

**सूचना**

पृष्ठेऽस्मिन् वामभागे चतुष्कोणे कोष्ठके कानिचन अक्षराणि दृश्यन्ते। तेषु अक्षरेषु केचन साहित्य-सम्बन्धिनः विषया गुप्ताः सन्ति ।

तस्य अधः क्रमशः ससंख्याकाः केचन विषया सन्ति। तेषाम् आधारेण तान् विषयान् उपस्थितेषु कोष्ठकस्थ-अक्षरेषु प्रदर्शयन्तु ।

कथं वा प्रदर्शनीयम् इति एकम् उदाहरणम् अपि वयं दत्तवन्तः। तद् उदाहरणं मनसि निधाय, अवशिष्टानि नामानि रेखांकितानि कुर्वन्तु ।

एवम् एनम् अक्षरबन्धं सम्पूर्य—अधःस्थितं कूपन् अपि सम्पूर्य वामभागं सर्वं निर्दिष्टस्थलेषु परितः कर्तयित्वा, अङ्कप्राप्तेः एकमासाभ्यन्तरे अधोनिर्दिष्ट-संकेतानुसारं प्रेषयन्तु। स्पर्धायाः अस्याः कृते एकशतं रूप्यकाणि दातव्यानि इति निश्चितम्। अतएव चत्वारः विजेतृरूपेण उद्घोषिताः भविष्यन्ति। यदि चतुर्भ्यः अधिकाः उत्तमपूरकाः भविष्यन्ति, तर्हि 'लाटरी' पद्धतिद्वारा चतुर्णां नामानि निष्कास्य ते एव विजेतारः इति उद्घोष्य तेषामेव पुरस्कारान् प्रेषयिष्यामः। यदि चतुर्षु अपि एकः-द्वौ-त्रयः एकेन दोषेण दोषद्वयेन दोषत्रयेण वा प्रेषयन्ति, तदा द्वितीय-तृतीय पुरस्काराः भविष्यन्ति ।

विजेतॄणां चतुर्णां कृते एकैकस्य पञ्चविंशति-रूप्यकपरिमितानि पुस्तकानि प्रेषयिष्यामः।

**अक्षरबन्धविभागः**
विश्वभाषा, दुर्ग—रामनगरम् वाराणसी-८

## "मेरी सरकार का संकल्प है कि प्रदेश में लघु एवं ग्रामीण उद्योग, हथकरघा, हस्तशिल्प जैसे रोजगारोन्मुख उद्योगों को विशेष प्रोत्साहन देकर उनका जाल बिछाया जाये।"

—मुलायम सिंह यादव

उत्तर प्रदेश, जिसकी जनसंख्या पूरे देश की जनसंख्या का १६ प्रतिशत और जिसका क्षेत्रफल पूरे देश का ९ प्रतिशत है, का आर्थिक विकास पूरे देश की आर्थिक प्रगति में विशेष महत्व रखता है। अब उत्तर प्रदेश भारत का सर्वाधिक वार्षिक विकासदर—१२.५ प्रतिशत वाला राज्य हो गया है। राज्य में औद्योगीकरण की गति को और बढ़ावा देने के उद्देश्य से उत्तर प्रदेश शासन ने माननीय मुख्य मंत्री मुलायम सिंह यादव के कुशल मार्गदर्शन में एक नई गतिशील औद्योगिक नीति की घोषणा की है।

आठवीं पंचवर्षीय योजना में २० हजार करोड़ रुपये का पूंजी विनियोजन किया जाना प्रस्तावित है। बड़ी, मध्यम तथा लघु इकाईयों के अतिरिक्त खादी तथा ग्रामोद्योग की ५ लाख इकाईयाँ स्थापित करने का भी लक्ष्य है। उत्तर प्रदेश में आठवीं पंचवर्षीय योजना के अंत तक विद्युत की प्रतिष्ठापित क्षमता ७५०० मेगावाट हो जाने की संभावना है। वास्तव में उत्तर प्रदेश औद्योगिक विकास को नए आयाम प्रदान करने के लिए हर संभव सुविधाएँ प्रदान करने के लिए तैयार है।

**नई औद्योगिक नीति के कुछ प्रमुख उद्देश्य --**

१. अधिकाधिक रोजगार के अवसर सृजित करने हेतु प्रदेश में लघु उद्योग, हथकरघा, हस्तशिल्प, कुटीर उद्योग ग्रामीण व रेशम उद्योग जैसे रोजगार प्रधान व रोजगारोन्मुख उद्योगों को विशेष प्रोत्साहन देना।

२. क्षेत्रीय असंतुलन समाप्त करना तथा पिछड़े जनपद विशेषकर ग्रामीण अंचलों के औद्योगिक विकास हेतु विशेष सुविधाएँ देते हुए तीव्र विकास सुनिश्चित करना।

३. आधारभूत उपभोक्ता सामग्रियों का उत्पादन लघु एवं ग्रामीण उद्योगों के क्षेत्र में बढ़ाना तथा बुनकरों को सस्ती दरों पर कच्चा माल उपलब्ध कराना व उत्पादित माल की विपणन-व्यवस्था सुनिश्चित करना।

४. मध्यम एवं वृहत् उद्योगों की कोर सेक्टर व अन्य क्षेत्र जो लघु औद्योगिक क्षेत्र की क्षमता के बाहर हैं और लघु व ग्रामीण उद्योग के विकास में सहायक हैं, में स्थापना सुनिश्चित करना।

५. नये उद्योगों की स्थापना द्वारा प्रदेश की जनता विशेष कर शिक्षित युवकों, महिलाओं, भूतपूर्व सैनिकों, कारीगरों, समाज के कमजोर वर्गों, अनुसूचित जाति/जनजाति के लोगों लिये अधिकाधिक रोजगार के अवसरों का सृजन करना।

६. औद्योगिक अवस्थापना सुविधाओं का आवश्यकतानुसार विकास।

७. वर्तमान में स्थापित उत्पादन क्षमता का अधिकतम उपयोग सुनिश्चित करने के उद्देश्य से इकाईयों का पुनर्वास व रुग्णता की ओर उन्मुख इकाईयों की समुचित सहायता व परंपरागत ग्रामीण व लघु उद्योगों का आधुनिकीकरण।

८. प्रदेश में स्वस्थ उत्साहजनक एवं प्रतिगामी औद्योगिक वातावरण का सृजन।

इन उद्देश्यों को प्राप्त करने के लिये उत्तर प्रदेश सरकार ने औद्योगीकरण के विभिन्न स्तरों पर उद्यमियों को सहायता प्रदान करने हेतु अनेक प्रोत्साहन दिये जाने की घोषणा की है।

**पिछड़े क्षेत्रों का वर्गीकरण**

नई औद्योगिक नीति में विभिन्न जिलों को "अ" "ब" "स" एवं "द" श्रेणियों में वर्गीकृत किया गया है। "अ" श्रेणी में सर्वाधिक पिछड़े क्षेत्र रखे गये हैं। जबकि "द" श्रेणी में गैर पिछड़े क्षेत्र आते हैं।

**पूँजी-विनियोजन उपादान योजना**

इस योजना के अनुसार ऐसे उद्योगों को जिनमें संयत्र एवं उपकरणों पर रु० ५ लाख से ज्यादा न लगे हों बिना किसी शर्त पूँजी उपादान दिया जायेगा। श्रेणी "अ" "ब" एवं "स" में आने वाले पिछड़े जनपदों में क्रमशः रु० २० लाख, रु० १५ लाख एवं रु० १० लाख तक का राज्य पूँजी उपादान दिया जायेगा। इसके अलावा ऐसे उद्योगों को जिनमें संयत्र एवं उपकरणों पर रु० ५ लाख से अधिक का पूँजी निवेश किया गया हो उपादान दिया जायेगा बशर्ते ये उद्योग निर्धारित क्षेत्रों में ही स्थापित किये गये हो। रु० ५ करोड़ से अधिक स्थाई पूँजी विनियोजन वाली इकाई को कोई पूँजी उपादान देय न होगा।

**बिक्री कर से छूट/आस्थगन की योजना**

इस योजना के अन्तर्गत बिक्री कर में छूट को स्थाई पूँजी विनियोजन से सम्बद्ध किया गया है। श्रेणी "अ" में स्थायी पूँजी विनियोजन का १५० प्रतिशत अथवा १०, वर्ष श्रेणी "ब" में १२५ प्रतिशत अथवा ९ वर्ष तथा श्रेणी "स" में १०० प्रतिशत अथवा ८ वर्ष, जो भी पहले हो, बिक्री कर से छूट दी जायेगी। लघु औद्योगिक इकाईयों के लिए प्रत्येक श्रेणी में छूट की राशि २५ प्रतिशत अतिरिक्त होगी। छूट के विकल्प में आस्थगन सभी इकाईयों को उपलब्ध होगा।

**विद्युत के उपयोग पर विशेष छूट**

सभी श्रेणी के नये उद्योगों को उत्पादन शुरू होने की तिथि से ५ वर्ष तक विद्युत कटौती से मुक्त रखा जायेगा तथा उत्पादन शुरू होने की तिथि से ५ वर्ष तक न्यूनतम माँग-भार से भी मुक्त रखा जायेगा।

बुंदेलखण्ड में ५ वर्षों के लिये ५० प्रतिशन की छूट एवं पहाड़ी क्षेत्रों में निर्धारित स्थानों पर इतने ही समय के लिए ३३.३३ प्रतिशत तथा पूर्वी उत्तर प्रदेश के जिलों में २० प्रतिशत की छूट दी जायेगी।

**"सिंगल विण्डो" योजना**

उद्यमियों की कठिनाइयों को दूर करने के लिए जिलास्तर, मंडल स्तर तथा राज्य स्तर पर सिंगल विण्डो योजना लागू की जायेगी। उद्योग-बंधु की सहायता से हर स्तर पर इसे सुदृढ़ बनाया जाएगा। वित्तीय सहायता तथा अन्य सुविधाओं के लिए पिकप, यू० पी० एस० आई० डी० सी०, यू० पी० एफ० सी० आदि संस्थाएँ हर संभव सहायता प्रदान करेंगी।

**अन्य आकर्षण**

उपरोक्त के अतिरिक्त अनेक अन्य सुविधाओं को उपलब्ध कराने का प्रावधान है, जिनमें से कुछ निम्नलिखित हैं :

- ब्लॉक स्तरीय पायनियर इकाई को ५ लाख रुपये तक का विशेष राज्य पूँजी उपादान
- तहसील स्तरीय पायनियर इकाई को १० लाख रूपये तक का विशेष राज्य पूँजी उपादान
- प्रेस्टिज इकाईयों के लिए १५ लाख रूपये तक का विशेष राज्य पूँजी उपादान उद्यमियों को सस्ते मूल्य पर भूमि
- प्रदेश की लघु औद्योगिक इकाईयों का आधुनिकीकरण तथा उनकी उत्पादकता एवं गुणवत्ता में सुधार लाये जाने से सम्बन्धित योजना
- रूग्ण औद्योगिक इकाईयों का पुनर्वासन
- भारत सरकार की योजना के अंतर्गत पर्वतीय क्षेत्रों में परिवहन अनुदान
- राज्य सरकार द्वारा पर्वतीय क्षेत्रों में विशेष परिवहन अनुदान
- अनुसूचित जाति/जनजाति, महिला एवं भूतपूर्व सैनिकों की श्रेणियों के कर्मियों को विशेष सुविधायें
- प्रवासी भारतीयों के लिए विशेष सुविधायें
- विशिष्ट सेक्टरों के वरियता प्राप्त उद्योगों के लिये विशेष योजना

- शत प्रतिशत निर्यातमूलक इकाईयों को १० लाख रूपये तक का विशेष राज्य पूँजी उपादान
- नई औद्योगिक इकाईयों को चुंगी में छूट
- व्यवहार्यता रिपोर्ट पर अनुदान
- जिला उद्योग केन्द्रों एवं अन्य संस्थाओं में परामर्शकक्षों की स्थापना
- १५ लाख रूपये तक मार्जिन मनी ऋण योजनाएँ
- अल्पसंख्यक समुदाय के उद्यमियों को विशेष सुविधाएँ
- विभिन्न प्रकार की सहायताओं एवं सुविधाओं हेतु प्रार्थना-पत्र का समयबद्ध निस्तारण

कृषि के साथ-साथ उत्तर प्रदेश में तीव्र गति से औद्योगिक विकास हो, यही सरकार की नई औद्योगिक नीति है। उत्तर प्रदेश कृषि तथा खनिज पर आधारित, इलेक्ट्रॉनिक्स, रासायनिक, यांत्रिकी, पैट्रो-रसायन, पर्यटन से संबंधित, प्लास्टिक, चर्म, कपड़ा, स्पोर्टस, ग्लास व सेरामिक, फाउन्ड्री आदि उद्योगों की स्थापना के लिए एक आदर्श स्थान है।

प्रदेश में ३० से भी अधिक तकनीकी एवं अभियांत्रिकी संस्थायें हैं जिनमें आई० आई० टी० कानपुर एवं आई० आई० एम० लखनऊ भी शामिल है। यहाँ पर हर प्रकार की अन्य सुविधाएँ जैसे प्रबंध कौशल, प्रशिक्षित जनशक्ति, यातायात के साधन, विद्युत एवं संचार सुविधाएँ कोने-कोने में उपलब्ध हैं।

इस स्वर्णिम अवसर का लाभ उठाईये, उत्तर प्रदेश में अपना उद्योग लगाइये और अपने सपनों को साकार होते देखिये। विस्तृत जानकारी के लिए अपने जिले के उद्योग केन्द्र, अपने क्षेत्र के संयुक्त निदेशक, उद्योग अथवा निदेशक उद्योग, उद्योग निदेशालय उत्तर प्रदेश, कानपुर से सम्पर्क स्थापित करें।

## उद्योग विभाग उत्तर प्रदेश शासन

# शुकनासोपदेशः

चौ० श्रीनारायण सिंहः

गताङ्कादनुवर्तते—

[ इतः पूर्वं शुकनासेन लक्ष्मीदोषाः विस्तरेण उपवर्णिताः। इदानीं श्रीमत्सु नृपेषु कीदृशाः विकाराः सहजतया प्रादुर्भवन्तीति विशदीक्रियते। ]

तथाहि—राज्याभिषेककाले एव अभिषेकार्थं प्रयुक्तैः पुण्यघटोदकैः इव राज्ञां सर्वत्र पुण्यम् अपमृज्यते। हवनादिजनितेन धूमेन इव नृपस्य चित्तं कलुषीक्रियते। पुरोहितप्रयुक्ताभिः कुशाग्ररूपाभिः सम्मार्जनीभिः राज्ञां क्षमाभावः अपनीयते। राज्ञां मुकुटस्य क्षौमवस्त्रेण इव नृपस्य जरागमनस्य स्मृतिः आव्रियते। राज्ञां मस्तकोपरि प्रयुक्तेन च्छत्रेण यथा ऊर्ध्वकेशदर्शनं निरुध्यते तथैव तेषां लोकान्तरज्ञानं दूरीक्रियते। राज्ञः प्रति प्रयुक्तैः चामरान्दोलनजनितैः अनिलैः तेषां सत्यभाषणं निवार्यते। वेतसयष्टिभिः तेषां शौर्यधैर्यादयो गुणाः दूरीक्रियन्ते। नृपं प्रति अभिहितानि हितवचनानि तं प्रति प्रयुक्तेन 'जय जय' इति कोलाहलेन तिरस्क्रियन्ते। भूपतीनां ध्वजस्वरूपैः किसलयैरिव तेषां यशांसि अपमृज्यन्ते।

अपि च, केचित् राजानः परिश्रमात् शिथिलमयूरादिपक्षिणः कण्ठपुटमिव चञ्चलाभिः, खद्योतस्य प्रकाश इव कञ्चित्कालं यावत् चित्तापहारिणीभिः, सुधीजनैः निन्दिताभिः सम्पद्भिः प्रलोभं प्राप्यमाणाः अल्पधनलोभात् उत्पन्नाहङ्कारेण विस्मृतपूर्वस्थितिकाः, वातपित्तकफादिरूपैः अनेकदोषैः वृद्धिगतं रक्तमिव कामक्रोधादिरूपैः विकारैः वृद्धिगतेन विषयाभिलाषं प्रति अभिनिवेशेन पीड्यमानाः शब्दस्पर्शादीनाम् अनेकविषयाणाम् उपभोगे अत्यन्तासक्तैः पञ्चसंख्यकैरपि श्रोत्रत्वक्चक्षूरसनघ्राणरूपैः बहुसहस्रसंख्यकैः इन्द्रियैः पीड्यमानाः स्वभावचपलेन प्राप्तावकाशेन एकसंख्यकेनापि शतभावं सहस्रभावं वा प्राप्तेन चित्तेन व्यग्रीक्रियमाणाः विह्वलाः भवन्ति। अनेकविधविकारप्रदर्शनात् राजानः शनैश्चरादिग्रहाभिभूताः इव प्रतीयन्ते। ते बालग्रहादिभिः तिरस्क्रियमाणाः इव लक्ष्यन्ते। ते तान्त्रिकैः भूतादिक्रियां क्रियमाणाः इव दृश्यन्ते। तथा च ते दुष्टप्राणिभिः हठात् गृह्यमाणा इव लक्ष्यन्ते। ते वातेन इतस्ततः विक्षिप्यमाणाः इव प्रतीयन्ते। किं बहुना ते पिशाचनामकैः देवयोनिविशेषैः भक्ष्यमाणा इव दृश्यन्ते। (क्रमशः)।

## प्रतिष्ठानस्य सत्प्रयासः

बिहारप्रान्ते सम्पन्ने विगत निर्वाचने विजेतृभिः भारतीयजनतादलस्य कैश्चित् सदस्यैः विश्वसंस्कृत प्रतिष्ठानस्य बिहारशाखायाः कार्यकर्तृणां सत्प्रेरणया बिधानसभायां संस्कृते शपथग्रहणं कृते। संस्कृते शपथ ग्रहीतारः—सर्वश्री इन्दरसिंह 'नामधारी' सुशीलकुमार मोदी, ज्ञानेश्वर यादवः, लालमुनि चौबे, जवाहिर प्रसाद प्रभृतयः संस्कृतप्रेमिभिः अभिनन्द्यन्ते।

अस्मिन् सत्प्रयासे पटनाविश्वविद्यालयस्य संस्कृत-संरक्षण-समितिः प्रष्ठिानस्य सहयोगं कृतवती।



# संस्कृतवार्ता:

## उत्तरप्रदेशीया वार्ता

१७ जुलाई १९९० इति दिनाङ्के जालौनजनपदे ठक्करबापा इण्टरकालेज इत्यत्र हिन्दीभवनस्य स्वर्णजयन्तीसमारोहे समवेतान् मुख्यातिथिरूपेण सम्बोधयन् उत्तरप्रदेशस्य महामहिमराज्यपालः श्रीसत्यनारायण रेड्डीमहोदयः बभाषे यत् संस्कृतं सर्वासां भाषाणां जननीति। यदि देशे संस्कृतस्य लोपो जायते तर्हि भारतीया संस्कृतिरपि लुप्ता भविष्यति। संस्कृतादेव सर्वाः भारतीयाः भाषाः उत्पन्ना इति।

**श्रीकपिलदेवद्विवेदी पुरस्कृतः**—१९ जून १९९० इति दिनाङ्के उत्तरप्रदेश-संस्कृत-अकादमीद्वारा "भक्तिकुसुमाञ्जलिः" इति नामकस्य ग्रन्थस्य प्रणयनार्थं हरिद्वारस्थ-गुरुकुलकांगड़ीविश्वविद्यालयस्य उपकुलपतिः श्रीकपिलदेवद्विवेदिमहाभागः पुरस्कृतः।

## दिल्लीप्रदेश वार्ता

७ जुलाई १९९० इति दिनाङ्के नरेलाग्रामे आर्यसंस्कृत-महाविद्यालयकन्यागुरुकुलस्य विद्यार्थिन्यः सम्बोधयन् प्रदेशीयः उपराज्यपालः धर्मसंस्कृताभ्यां विमुखान् जनान् प्रति खेदं प्रकाशयन् अवादीत् यत् संस्कृतस्य शिक्षा भूयः प्रवर्तनीया इति। भारतीयदर्शनस्य, वेदस्य संस्कृतस्य च अध्ययनेनैव नैतिकमूल्यानां संस्थापनं सम्भाव्यते।

**संस्कृतनिष्ठा हिन्दीभाषा**—१८ जून १९९० इति दिनाङ्के नवदेहलीतः प्रकाशिते "जनसत्ता" इति नामके दैनिके वृत्तपत्रे रजनीरमण झा महोदयस्य वक्तव्यमेकं प्रकाशितम्। तत्र झामहोदयेन युक्तियुक्ततया प्रतिपादितं यत् संस्कृतनिष्ठा एव हिन्दीभाषा भारते सामान्यजनस्य भाषा भवितुम् अर्हति। सम्प्रति 'आमभाषा' इति रूपेण प्रचारिता हिन्दीभाषा वस्तुतः वर्गविशेषस्य क्षेत्रविशेषस्य च भाषाऽस्ति। संस्कृतनिष्ठा हिन्दीभाषा हिन्दीतरभाषीयेऽपि प्रदेशे सहजतया बोधगम्या भवति।

## मध्यप्रदेशवार्ता

७ जुलाई १९९० इति तारिकायां देवी अहिल्या विश्वविद्यालयस्य स्कूल आफ लिटरल स्टडीज इत्यत्र यू० जी० सी० इत्यस्य तत्त्वावधाने आयोजितायाः संस्कृताध्यापकानां कृते दिशानिर्देशकार्यशालायाः उद्घाटनसमारोहे मध्यप्रदेशीयः शिक्षामन्त्री श्रीविक्रमवर्मा अवोचद् यद् अस्माकम् अतीतगौरवस्य स्मारिका संस्कृतभाषा अद्यापि परिपूर्णा वर्तते। कम्प्यूटरस्य मानदण्डे संस्कृतभाषा पूर्णतया विशुद्धवैज्ञानिक-भाषारूपेण अधिमानिता वर्तते। संस्कृतभाषामेव राष्ट्रभाषारूपेण स्वीकृत्य भाषासमस्यायाः समाधानं सम्भवेत्।

## शोकवार्ता:

**देवरहवा बाबा समाधिस्थः जातः**—अहो दुर्दैवादस्माकं चिरकालिकः "महासन्तः", श्रीदेवरहवा बाबा इति नाम्ना विश्रुतः, बहुजनप्रेरकः, संस्कृतभाषानिष्णातः, परमतपस्वी, सनातनधर्मधुरीणः साधुमण्डल-शिरोमणिः श्रीविष्णुपुरमगात्। महात्मनोऽस्य गोरक्षादिविषयकस्य बहुधा सुस्पष्टतया प्रकाशितस्य सङ्कल्पस्य पूरणार्थम् अस्माभिः यत्नः करणीय इति।

**श्री रामशर्मा आचार्यः दिवं प्रस्थितः**—गायत्रीमन्त्रसाधकः, यज्ञप्रचारकः, धर्मोपदेशकः, वयोवृद्धः स्वतन्त्रतासङ्ग्रामसेनानी श्रीरामशर्मा आचार्यः स्वकीयं स्थूलदेहं परित्यज्य विष्णुरूपम् अवाप्तवान्। आचार्येण प्रायः सर्वेषां वेदानां पुराणानाञ्च भाषानुवादम् अकरोत्। मथुरायां हरिद्वारे अनेन महात्मना प्रतिष्ठापितो साधनाश्रमो वर्तते यत्र धर्मोद्धारविषयकं महत्त्वपूर्णं कार्यं सम्पाद्यते।

**प्रभुदत्त ब्रह्मचारिणः गोलोकप्रस्थानम्**—हन्त! महान् गोभक्तः संस्कृतप्रेमी 'सन्तशिरोमणिः' स्वतन्त्रता-सेनानी श्री प्रभुदत्तब्रह्मचारी गोलोकमगमत्। इत्थं भारतवासिनः धर्ममार्गप्रदर्शकेन महात्मना वियुक्ता जाताः।

# प्रतिष्ठानवार्ता

**वाराणसीगोष्ठी**—स्थानम् नदेसरप्रासादः, दि ९-६-९०। विश्वसंस्कृतप्रतिष्ठानस्य वार्षिकी गोष्ठी प्रतिष्ठानाध्यक्षानां श्री काशिराजानाम् सभापतित्वे सम्पन्ना। अत्र प्रतिष्ठानस्य अष्टौ सदस्या उपस्थिताः।

मङ्गलाचरणानन्तरम् महामन्त्रिणा श्रीमता देवदत्तमहोदयेन पूर्वगोष्ठ्याः विवरणं प्रस्तुतम्। तदनन्तरं महामन्त्रिणः प्रतिवेदनम् जातम्। प्रतिवेदनस्य प्रतिलिपयः सर्वैरधिकृता (प्रतिवेदनम् अस्मिन्नेव अङ्के द्रष्टव्यम्)।

ततः निम्नलिखिताः विषयाः विचारार्थमुपस्थिताः।

१—स्टेटबैंक रामनगरे तथा बनारस स्टेटबैंकस्य दिल्ली-बम्बई-कलकत्ता-शाखासु प्रतिष्ठानस्य लेखाः स्थापनीयाः। एतदर्थं महामन्त्री प्रयतताम्।

२—प्रतिष्ठानस्य लेखाः पारिताश्च।

३—विभिन्नमन्त्रालयेषु अनुदानार्थम् आवेदनपत्राणि प्रेषणीयानि इत्यर्थं स्वीकृतिः प्रदत्ता।

४—श्रीमतां श्रीधरभास्करवर्णेकमहोदयानां सम्मानं प्रतिष्ठानम् कुर्यादिति निर्णयो जातः।

५—पाठ्यपुस्तकानां प्रकाशनार्थं श्रीराजेन्द्रनारायणशर्मा श्रीवंशदेवमिश्रः च अधिकृतौ।

६—जनगणनावसरे जनता मातृभाषायाः कोष्ठे व्यवहारभाषाया कोष्ठे वा संस्कृतम् उल्लिखेत्। एतदर्थं प्रतिष्ठानं प्रयतताम्।

७—नवशिक्षानीतौ संस्कृतस्य स्थानम् अनिवार्यं भवेत् एतदर्थं समिति-अध्यक्षं श्रीराममूर्तिमहोदयं प्रति स्मरणपत्रं देयम्। (द्रष्ट० अस्मिन् अङ्के)

८—प्रतिष्ठानस्य आंध्रप्रदेशशाखायाः राष्ट्रियसम्मेलनं भवितुम् अर्हति इत्यस्यापि स्वीकृतिः मिलिता।
अस्यामेव सभायां प्रतिष्ठानस्य नवीन पदाधिकारिणाम् मनोनयनम् अध्यक्षमहोदयैः कृतम्।

अन्ते महामन्त्रिमहोदयेन समुपस्थितेभ्यः सर्वेभ्योऽपि धन्यवादाः वितरिताः। शान्ति पाठानन्तरं सभा विसर्जिता॥

## नवीनपदाधिकारिणां नामानि

| नामानि | | सङ्केताः |
|---|---|---|
| **अध्यक्षः** | | |
| १. श्री काशीनरेश डॉ० विभूति नारायण सिंहः | | दुर्ग-रामनगरम्, वाराणसी–२२१००८ |
| **उपाध्यक्षाः** | | |
| २. पं० पियरे फिलियोजः | (फ्रान्स) | फ्रैंच इन्स्टयूट, पाण्डिचेरी पिन–६०५००२ |
| ३. पं० अम्बिका प्रसाद अधिकारी | (नेपाल) | ६३, भीम गोला, वानेश्वर काष्ठमण्डपम्–१० |
| ४. पं० कैलाशनाथ कुरूक्कुलः | (श्रीलंका) | विभागप्रमुखः—हिन्दू सिविलाइजेशन, यूनिवर्सिटी आफ श्रीलंका, जाफना कैम्पस, जाफना। |



५

| | | |
|---|---|---|
| ५. | पं० गुलामदस्तगीर अब्बासअली विराजदारः (भारतम्) | हजरत जंगली पीर दर्गाह, बरकी मुम्बई–४०००१८। |

**कोषाध्यक्षौ**

| | | |
|---|---|---|
| ६. | पं० बनवारी लाल शर्मा | श्री वैद्यनाथ आयुर्वेद भवनम् लिमिटेड वैद्यनाथ मार्ग; पटना–८०० २०। |
| ७. | डॉ० शान्तिलाल के० सोमैया | दी गोदावरी सुगर मिल्स लि० फजलभाय बिल्डिंग, ४५-४७, महात्मा गाँधि रोड, मुम्बई–४०० ०२३। |

**महामन्त्रिणौ**

| | | |
|---|---|---|
| ८. | पं० देवदत्तः | श्री अरविन्द आश्रम, पाडिचेरी पिन-६०५ ००२। |
| ९. | पं० राजाराम शर्मा | शंकर क्लिनिक, खूहबाम्बेवाला, अमृतसर-१४३००१। |

**मन्त्रिणः**

| | | |
|---|---|---|
| १०. | डॉ० राजेन्द्र नारायण शर्मा | सराय गोवर्धन, चेतगंज, वाराणसी |
| ११. | पं० पी० टी० जी० वी० रंगाचार्यलु | गौरमेण्ट जूनियर कालेज, पालकोण्ड जनपद–श्रीकाकुलम्–५३२४४० |
| १२. | श्री राधाकृष्ण मनोड़ी | १९०, गली नवाबान, बरेली–२४४००१। |

**निर्देशिका**

| | | |
|---|---|---|
| १३. | महाराजकुमारी कृष्णप्रिया | दुर्ग-रामनगरम्, वाराणसी–२२१००८ |

**सदस्याः**

| | | |
|---|---|---|
| १४. | पं० वासुदेव द्विवेदी | ३८/११०, हौजकटोरा, वाराणसी |
| १५. | पं० विश्वेश्वर द्रविड़ः | सांग्वेदविद्यालयः, वाराणसी |
| १६. | पं० वागीशः शास्त्री | बी० ३/१३१ ए, शिवाला, वाराणसी |

---

**नागपुरगोष्ठी**—१८ जून १९९० दिनांके नागपुरे श्रीमतां श्रीधरभास्करवर्णेकरमहोदयानां निवासस्थाने विश्वसंस्कृतप्रतिष्ठानस्य अञ्चलप्रमुखाणाम् एका विचारगोष्ठी जाता। अत्रोपस्थितेषु सर्वश्री मोरोपन्तपिंगले, श्री भा० वर्णेकरमहोदयः, प्रतिष्ठानस्योपाध्यक्षः पं० गुलामदस्तगीर अब्बास अली विराजदारः, महामन्त्री देवदत्तः च प्रमुखा आसन्। अत्र प्रतिष्ठानम् इतोऽपि सक्रियं विधातुं विचाराः जाताः। सभां सम्बोधयन्तः श्रीपिंगलेमहाभागाः उक्तवन्तः यत् प्रतिष्ठानं विश्वस्तरीया संस्था अस्ति अतः एतत् महत्संगठनरूपेण सज्जीकरणीयम्। मान्यैः श्रीवर्णेकरमहोदयैरुक्तं यत् संस्कृतस्य निपुणप्रचाराय विविधाः कार्यक्रमाः यथा—संस्कृत-गीतमण्डली, भजनमण्डली, श्लोकोच्चारणप्रतियोगिता, अभिनय-सम्भाषण-कविगोष्ठीप्रभृतयः कार्यक्रमाः विपुलरूपेण करणीयाः। सामाजिकक्रान्त्यर्थं वैज्ञानिकोपकरणानामपि उपयोगः करणीयः।

श्रीचन्द्रगुप्तवर्णेकरमहोदयेन कथितं यत्—संगणक (computer) यन्त्रे संस्कृतोपयोगस्य प्रचारः करणीयः। अयं मार्गः संस्कृतप्रचारार्थमुत्तमः प्रतिभाति।

सभायाम् अयं निर्णयः गृहीतः यत् सर्वेऽपि प्रान्तप्रमुखाः संस्कृतसम्बन्धिन्यः सर्वा अपि सूचनाः संकलयन्तु। पुनः अक्टूबरमासे तेषां प्रान्तप्रमुखानां वाराणस्याम् एका गोष्ठी भवतु यत्र ताः सूचना अधिकृत्य विचाराः प्रवर्तन्ताम्। अन्यच्च दिल्याम् शिक्षकप्रशिक्षणशिविरस्यायोजनमपि कार्यम्।

अन्ते शान्तिपाठेन सह सभा विसर्जिता जाता।

**उडीसाशाखायाः कार्यक्रमाः**—विश्वसंस्कृतप्रतिष्ठानस्य उडीसाशाखया विगतदिवसेषु सप्त संस्कृतसम्भाषणप्रशिक्षणशिविराणि आयोजितानि। तस्य विवरणम् अधस्ताद् दीयते—

| दिनावधिः | स्थानम् | विद्यार्थिसंख्या |
|---|---|---|
| १—९-५-९० तः १८-५-९० | विश्वहिन्दूपरिषदः कार्यालयः ब्रह्मपुरम् | ३५ |
| २— ” | गीताभवनम् ब्रह्मपुरम् | २० |
| ३— ” | चाचा नेहरू यू० पी० स्कूल ब्रह्मपुरम् | १२ |
| ४—२०-५-९० तः २९-५-९० | तिगिरिया कटक, जिल्हा | ४५ |
| ५—१-६-९० तः १०-६-९० | गजपति के० जी० संस्कृत कालेज परालखे मुण्डी | ७० |

शेषशिविरद्वयस्य विवरणम् अद्यावधि न प्राप्तम्। एषा वार्ता प्रतिष्ठानस्य उडीसाशाखायाः सचिवेन श्रीमता यदुनाथसत्पथमहोदयेन सूचिता।

## दिल्लीकार्यक्रमविवरणम्




१७-५-९० दिनाङ्के नवदेहल्यां कांस्टीट्यूशन क्लब इति नामके सभागारे विश्वसंस्कृतप्रतिष्ठानद्वारा संस्कृते शपथग्राहिणां सांसदानाम् अभिनन्दनाय समारोहः सम्पादितः। लोकसभाध्यक्षः श्री रविरायमहोदयः समारोहस्य अध्यक्षताम् अकरोत् स्वकीये भाषणे संस्कृतस्य महत्त्वं प्रतिपादयन् अध्यक्षमहोदयः विज्ञापितवान् यत् यदा चीनदेशः भारतोपरि आक्रमणं कृत्वा हिमालयोपरि स्वीयाधिकारं प्रकटीकृतवान् तदा हिमगिरिं प्रति भारतीयस्तवं द्योतयन् राममनोहरलोहियामहोदयेन साधिकारं कथितं यत् विश्वस्य प्राचीनतमायां संस्कृतभाषायां हिमालस्य बहुशः उल्लेखो दृश्यते। किन्तु चीनदेशीये वाङ्मये कुत्रापि हिमालस्य उल्लेखो नैव वर्तते। अतएव हिमालयस्योपरि भारतीयं स्वत्वं सर्वदैव अक्षुण्णं तिष्ठति।

समारोहे प्रतिष्ठानस्य दिल्लीशाखायाः मन्त्री श्रीरामदयालुशास्त्रिमहोदयः श्वेतपत्रं प्रस्तुतवान्। प्रारम्भे दिल्लीशाखाध्यक्षेण प्रो० वेदव्यासमहोदयेन लोकसभाध्यक्षस्य सम्मानं कृतम्। विश्वसंस्कृत-प्रतिष्ठानस्य परिचयः मन्त्रिणा श्री राजारामशर्ममहोदयेन दत्तः। सभासंचालनं महामन्त्रिणा श्री देवदत्तमहोदयेन कृतम्। शान्तिपाठेन सह सभाविसर्जिता जाता। अपरेद्युः प्रतिष्ठानस्य विश्वाध्यक्षैः काशिराज श्रीविभूति-नारायण सिंहमहोदयैः लोकसभाध्यक्षस्य कक्षे संस्कृते शपथग्राहिभ्यः सांसदेभ्यः 'संस्कृतरक्षामणिः' इत्युपाधि-स्वरूपं प्रशास्तिपत्रं काशीविश्वनाथस्य प्रसादः च प्रदत्तः। सम्मानितेषु सदस्येषु २५ लोकसभातः आसन्—सर्वश्री यदुनाथपाण्डेयः, हजारीबाग, बिहारप्रदेशः, विजयकुमार महलोत्रा, दिल्लीसदर, दिल्ली, हरीशपाठकः, अहमदाबादः, गुर्जरप्रदेशः, कपिलदेवः, सोनपत, हरयाणा, महेश्वरसिंहः, मण्डी, हिमाचल प्रदेशः, प्रेमकुमार-धुमालः, हामीरपुरम्, हिमाचलप्रदेशः, कुमारी उषाभारती, खजुराहो, मध्यप्रदेशः, नन्दकुमार साई, रायगढ़ मध्यप्रदेशः, श्रीमती सुमित्रा महाजन, इन्दौर मध्यप्रदेशः, सत्यनारायणजटिया, उज्जैन म० प्र०, डॉ० लक्ष्मी-नारायणपाण्डेयः, मन्दसोर, म० प्र०, विद्याधरगोखले, मुम्बई, महाराष्टम्, श्रीमती जयवन्ती नवीनचन्द्रमेहता, मुम्बई, महाराष्ट्रम्, श्रीराम नाइक, मुम्बई, महाराष्ट्रम्, रामचन्द्रगणेश कापसे, थाणे, महाराष्ट्रम्, पुण्डलीकहरि धान्वे, जालना, महाराष्ट्रम्, मोरेश्वरसावे, औरङ्गाबादः महा०, रासा सिंहः अजमेर, राजस्थानम्, दाऊदयाल जोशी, कोटा, राज०, हेमेन्द्र सिंहः, भीलवाडा, राज०, गुमानमल लोधा, पाली, राज०, कैलाशमेघवाल, जालोर, राज०, राजबीरसिंहः औनला, उत्तरप्रदेशः, अवैद्यनाथः, गोरक्षपुरम्, उ० प्र०, डॉ० बंगालीसिंहः, हाथरस उ० प्र०।

राज्यसभातः ९ सदस्याः सम्मानिताः—सर्वश्री डॉ० जितेन्द्र कुमार जैनः भोपाल, म० प्र०, सोमपालः, मेरठ, उ० प्र०, श्री संघप्रियगौतमः, बुलन्दशहर, उ० प्र०, वीरेन्द्रजीशाह मुम्बई, महा०, सुरेश पचौरी, भोपाल, म० प्र०, श्रीमती सुषमा स्वराज, अम्बाला, हरयाणा, गोपाल सिंह जी सोलंकी, पंचमहल, गुजरात, कृष्णलाल शर्मा, शिमला, हिमाचलप्रदेशः, सरदार सुरेन्द्रजीतसिंहः अहलुवालिया, म० प्रदेशः।

अस्य अभिनन्दनसमारोहस्य सर्वत्र प्रशंसा जाता॥

# विकास का क्रान्ति रथ चला गाँव की ओर.........

**"परिवर्तन वहाँ से होगा जहाँ किसान-मज़दूर और आम जनता रहती है। सरकार की ओर से यह आश्वस्त करना चाहूँगा कि वह सदैव जनता के साथ कदम से कदम मिलाकर विकास के पथ पर चलती रहेगी।"**

**—मुलायम सिंह यादव**

"छः महीने पहले देश की जनता ने व्यवस्था परिवर्तन की आकांक्षा से सत्ता परिवर्तन का सामूहिक निर्णय किया था। सत्ता परिवर्तन की इस बयार में उत्तर प्रदेश की जनता ने हमारे दल की घोषित नीतियों और कार्यक्रमों के आधार पर हमें अपने स्नेह और विश्वास की थाती सौंपी। जनता के इस विश्वास और आकांक्षा को मूर्त रूप देने का दायित्व हमारे दल ने लोकतांत्रिक पद्धति का अनुसरण करते हुए सर्व सम्मति से मुझ जैसे ग्रामीण पृष्ठभूमि वाले व्यक्ति को सौंपा। जनता को किये गये वायदे हमें सतत सतर्क और सक्रिय रहकर पांच सालों में पूरे करने हैं।"

**चुंगी शुल्क समाप्त**

अगस्त माह की पहली तारीख से स्थानीय निकायों से चुंगी शुल्क समाप्त किया जा रहा है। इससे छोटे व्यापारियों, कृषि व्यवसायियों, उद्यान कृषि व्यवसायियों तथा आम उपभोक्ता को काफी लाभ होगा।

**भाषा नीति**

"निज भाषा उन्नति अहै, सब उन्नति को मूल" के सिद्धान्त पर अमल करते हुए आम जनता के हित में उ० प्र० सरकार ने प्रदेश में सरकारी काम काज हिन्दी में करने का निर्णय लिया है।

उ० प्र० सरकार की भाषा नीति के तहत राज्य सरकार ने विभिन्न राज्यों में उनकी भाषाओं में ही पत्र-व्यवहार का निर्णय लिया है। राज्य के आठ जिलों में कुछ चुने हुए विद्यालयों में दूसरी भारतीय भाषाएँ पढ़ाने की व्यवस्था की जा रही है। इसी तरह हम राज्य सरकार की उर्दू नीति को भी सच्चे दिल से लागू करेंगे। इसके अलावा प्रदेश में अंग्रेजी, फ्रेंच, जर्मन, रूसी, चीनी आदि विदेशी भाषाओं के पठन-पाठन की व्यवस्था जारी रहेगी। भावात्मक राष्ट्रीय एकीकरण की दिशा में यह एक सराहनीय प्रयास है।

**भूमि सेना योजना**

इस योजना के अन्तर्गत ऐसी ऊसर भूमि पर जो कि कृषि योग्य नहीं है, सुधार कार्य किये जायेंगे। सुधार के बाद यह भूमि भूमिहीन मजदूरों को यथासम्भव आवंटित की जायेगी।

भूमि सेना योजना में वर्ष १९९०-९१ के लिये रु. ३५ करोड़ मैदानी क्षेत्रों एवं रु० ३ करोड़ पर्वतीय क्षेत्रों के लिये रखे गये हैं।

इस योजना के तीन प्रमुख लाभ हैं :—

* ग्रामीण अंचलों में रोजगार के नये अवसर उपलब्ध होंगे।
* अधिक से अधिक भूमि का उत्पादनकारी कार्यों में उपयोग होगा।
* भूमिहीनों को अधिक से अधिक कृषि योग्य भूमि सीधे उपलब्ध होगी।

**रोजगार सृजन**

* ऐसे बेरोजगार लोगों को जिनके पास कृषि शिक्षा के साथ-साथ इन्टरमीडिएट या उच्चतर डिग्री भी है, हस्तचालित ट्रैक्टरों की खरीद पर ३३१/३% अनुदान। अनुदान की अधिकतम सीमा रु० १०,०००/- है।
* लघु एवं ग्रामीण उद्योगों को बढ़ावा दिया जायेगा। ताकि ग्रामीणों को रोजगार के अधिक अवसर सुलभ हो सकें।
* इस वर्ष ७४,००० खादी एवं ग्रामोद्योग इकाईयां स्थापित की जायेगी। इससे लगभग २.३० लाख लोगों को रोज़गार मिलेगा।
* आठवीं योजना के अंत तक प्रत्येक विकास खण्ड में एक लघु औद्योगिक क्षेत्र स्थापित करने की योजना।
* अल्पसंख्यक समूहों को स्व-रोजगार हेतु "ऋण सेवा शिविरों" द्वारा आर्थिक सहायता दी जायेगी।
* रिक्शा चालक १/६ योगदान देकर अपने रिक्शे पर मालिकाना हक प्राप्त कर सकते है। इस हेतु राज्य

सरकार १/३ योगदान देगी एवं शेष धन बैंक जुटायेगा।

* "आई आर डी पी" के अन्तर्गत योजनाओं का औसत मूल्य रु० ६,५६८ से बढ़ाकर रु० १०,००० न्यूनतम एवं औसत अनुपूर्ति का अंशदान रु० २००० से बढ़ाकर रु० २,५०० कर दिया गया है।
* "जवाहर रोजगार योजना" के अन्तर्गत रु० ५१०.९३ करोड़ का परिव्यय तथा १७०३.७९ लाख मानव दिवस के समतुल्य रोजगार के अवसर सृजित किये जायेंगे।
* आठवीं योजना में ५०० वृहत् व मध्यम उद्योगों की स्थापना का लक्ष्य। अनुसूचित जाति/जनजाति, महिलाओं, भूतपूर्व सैनिकों, प्रवासी भारतीयों एवं अल्पसंख्यकों में उद्यमिता को बढ़ावा देना।

**शिक्षा नीति**

सरकार एक ऐसी शिक्षा प्रणाली तैयार करना चाहती है जो स्वस्थ, प्रबुद्ध एवं आत्मनिर्भर पीढ़ी का निर्माण कर सके।

**"कक्षा १२वीं तक निःशुल्क शिक्षा**

सरकार ने प्रदेश के बालक-बालिकाओं दोनों ही के लिए बारहवीं कक्षा तक निःशुल्क शिक्षा देने का निर्णय लिया है।

इससे जहाँ एक ओर सरकार को रु० १३ करोड़ का अतिरिक्त व्यय उठाना होगा वहीं दूसरी ओर इस योजना से २२.५७ लाख बच्चों के परिवार लाभान्वित होंगे।

* सभी प्राथमिक पाठशालाओं को भवन दिये जायेंगे। इस वर्ष लगभग १५,००० स्कूल भवनों का निर्माण किया जायेगा।
* ३०० अशासकीय सीनियर बेसिक स्कूलों एवं २०० अशासकीय उच्चतर माध्यमिक विद्यालयों को अनुदान दिये जायेंगे।
* १०० विकास खण्डों में जहाँ कोई स्कूल नहीं है, राजकीय कन्याहाई स्कूल खोले जायेंगे।
* डा० भीमराव अम्बेडकर विश्वविद्यालय के निर्माण कार्य हेतु रु० ५ करोड़ दिये जायेंगे।

**ऋण राहत योजनाएँ**

* यह योजना किसानों बुनकरों, हस्तकारों, शिल्पकारों तथा भूमिहीन कृषि मजदूरों को उनके द्वारा २ अक्टूबर, १९८९ तक या उससे पूर्व लिये गये सहकारी ऋणों के अतिदेयों से राहत दिलाने हेतु घोषित की गई है।
* इसमें काश्त की कोई सीमा नहीं है।
* इसमें उन कर्जदारों को १०,००० रुपये तक की राहत मिलेगी जो आदतन नादेहन्द नहीं हैं। इस हेतु बजट में इस वर्ष रु० ३५० करोड़ का प्रावधान है एवं इससे ३६ लाख ऋणियों को लाभ मिलने की आशा है और ये सभी सहकारी सदस्य नया ऋण प्राप्त करने के पात्र हो जायेंगे।

**समाज कल्याण**

समाज के हर वर्ग के विकास एवं हित को ध्यान में रखते हुए सरकार ने कई कदम उठाये हैं—

* इस वर्ष पहली जनवरी से पेंशन राशि रु० ६० से बढ़कर १०० रु० प्रतिमाह एवं न्यूनतम अर्हता ६५ घटाकर ६० वर्ष। इससे ग्रामीण क्षेत्रों में ढ़ाई एकड़ भूमि वालों या भूमिहीनों को लाभ। शहरी क्षेत्रों में रु० २२५ प्रतिमाह आय वालों को भी इस पेंशन की पात्रता। इस योजना हेतु रु० ५६.६२ करोड़ रुपये का प्रावधान।
* स्वतन्त्रता सेनानियों की पेंशन गत १ अप्रैल से से रु० ४०१ प्रतिमाह से बढ़ाकर रु० ५०० प्रतिमाह कर दी गई है।
* स्वतन्त्रता की अलख जगाने वाले वयोवृद्ध पत्रकारों के लिए गत १ जनवरी से वित्तीय सहायता की व्यवस्था।
* ६० वर्ष से अधिक आयु वाले विपन्न ख्याति प्राप्त साहित्यकारों एवं कलाकारों को गत १ जनवरी से आर्थिक सहायता।
* बड़े शहरों में निराश्रितों के लिये "रैन बसेरा"।
* सार्वजनिक वितरण प्रणाली के अन्तर्गत १०,३४० उचित मूल्य की दूकानों द्वारा आवश्यक वस्तुओं का वितरण।
* पेयजल व्यवस्था तथा ग्रामीण आपूर्ति हेतु रु० १३६.३६ करोड़ का प्रावधान।
* समस्याग्रस्त गांवों में प्रति २५० व्यक्ति एक हैण्ड पम्प।

* प्रदेश के ५ नये शहरों एवं ४८ अन्य शहरों में जल आपूर्ति व्यवस्था के लिये रु० १८ करोड़ खर्च किये जायेंगे।
* ग्रामीण खेलकूद व अन्य कार्यक्रमों हेतु रु० ५.२० करोड़ तथा ग्रामीण युवाओं के विकास हेतु रु० ३.१३ करोड़ का व्यय प्रस्तावित।
* परमवीर चक्र, महावीर चक्र एवं वीरचक्र की एक मुश्त पुरस्कार राशि बढ़ाकर क्रमशः १ लाख ७५ हजार एवं ५० हजार रुपये कर दी गई है।
* द्वितीय विश्व युद्ध के भूतपूर्व सैनिकों या उनकी विधवाओं को रु० १००/ प्रतिमाह पेंशन।
* अभियंत्रण एवं वस्तु उद्योग में चालू ठेका श्रमिक प्रणाली निषिद्ध।
* तम्बाकू उद्योग में लगे श्रमिकों का वेतन पुनरीक्षित, चर्म उद्योग के श्रमिकों के वेतन में भी वृद्धि।

**कृषि विकास**

कृषक की समृद्धि को उद्देश्य बनाकर सरकार ने कृषि के विकास के लिये निम्न प्रयास किये हैं—

* कृषि निवेशों की आपूर्ति हेतु एक वृहत् कार्यक्रम। विश्व बैंक की सहायता से रु० १७६ करोड़ की प्रशिक्षण एवं प्रसार योजना का प्रदेश के ३० जिलों में विस्तार।
* सूखोन्मुख क्षेत्रों में स्प्रिंकलर/ड्रिप सिंचाई सेटों पर किसानों को रु० १०,००० तक की सीमा तक ५० प्रतिशत अनुदान। इस पर रु० ३.५ करोड़ का खर्च अनुमानित।
* वृहत् तथा मध्यम सिंचाई परियोजनाओं पर रु० ३०४.०५ करोड़ के प्रस्तावित व्यय से १.२५ लाख हेक्टेयर भूमि की सिंचाई क्षमता का सृजन।
* राजकीय लघु सिंचाई कार्यक्रमों के लिए रु० १४८.२७ करोड़ का परिव्यय। मैदानी क्षेत्रों में रु० ५० करोड़ से २५० नलकूपों का ऊर्जीकरण।

*** गन्ना मूल्य में वृद्धि**

गन्ने के मूल्य में वृद्धि होने से २७ लाख कृषक परिवारों को लाभ पहुँचा है। इससे रु० १.५० करोड़ का अधिक भुगतान होगा।

*** दैवी आपदा राहत निधि**

रु० ९० करोड़ की व्यवस्था इस दैवी आपदा राहत निधि में की गई है। ऐसे कृषकों को जिन्हें ओलावृष्टि या अन्य किसी प्राकृतिक विपदा द्वारा ५० प्रतिशत से अधिक फसल का नुकसान हुआ है, रु० ३०० प्रति हेक्टेयर की दर से राहत राशि दी जायेगी। इसकी अधिकतम सीमा रु० १५०० है।

* कृषकों को १० प्रतिशत प्रभार (सेवा शुल्क प्रांसगिक व्यय) में मुक्ति।

**महिला कल्याण**

महिलाओं को विकास के समान अवसर देने एवं हर स्तर पर उन्हें सहयोग देने के उद्देश्य से उत्तर प्रदेश सरकार ने निम्न कदम उठाये हैं—

* निराश्रित विधवाओं एवं विकलांगों का भरण पोषण अनुदान रु० ६० से बढ़ाकर रु० १०० प्रतिमाह कर दिया गया है। इससे इस वर्ष ३.२५ लाख विधवाओं व विकलांगों को लाभ होगा।
* गांवों में महिलाओं के लिये २ लाख निजी शौचालयों का इस वर्ष निर्माण, इस हेतु रु० २६.३९ करोड़ की व्यवस्था।
* महिलाओं को आर्थिक रूप से स्वावलम्बी बनाने के उद्देश्य से रु० ३ करोड़ मूल्य की एक नई महिला रोजगार समर्थन योजना" लागू की जायेगी।
* कामकाजी महिलाओं हेतु लखनऊ, इलाहाबाद, वाराणसी तथा आगरा जैसे नगरों में ६० व्यक्ति क्षमता वाले छात्रावासों का निर्माण।

**अनुसूचित जाति/जनजाति कल्याण**

अनसूचित जाति/जनजाति के लोगों की आर्थिक-सामाजिक स्थिति और मजबूत करने के उद्देश्य से सरकार निम्न प्रयास कर रही है।

**अम्बेडकर ग्राम योजना**

* प्रदेश में १०,००० गांव अनसूचित जाति/जनजाति बाहुल्य के हैं। इन ग्रामों में पर्यावरण एवं जीवन सुधार की व्यवस्था योजनाबद्ध ढंग से की जायेगी। ऐसे गांवों को "अम्बेडकर ग्राम" के नाम से जाना जायेगा।
* निर्बल वर्ग ग्रामीण आवासीय योजना के अन्तर्गत इस वर्ष २ लाख आवास बनाये जायेंगे।

* अनसूचित जाति के लक्षित परिवारों में उद्योगिता को बढ़ावा देने के उद्देश्य से उनको देय अनुदान अब बढ़ाकर ५०% एवं अनुदान सीमा रु० ३००० से बढ़ाकर रु० ५००० कर दी गई।
* मैदानी क्षेत्रों में एकीकृत ग्राम्य विकास कार्यक्रम में अनसूचित जातियों के परिवारों का आरक्षण ५०% से बढ़कर ६०% कर दिया गया है।
* इस वर्ष ७,२९० हरिजन बस्तियों एवं जनजाति ग्रामों में पेयजल की सुविधा।
* स्वच्छकारों को सिर पर मैला-गन्दगी उठाने से मुक्ति, नगर क्षेत्र एवं नगरपालिका में दो पहिया, चार पहिया गाड़ियां चलाने का निर्णय। नगरों में ४०, हजार शुष्क शौचालयों के स्थान पर जल प्रवाहित शौचालयों एवं १०० नये सार्वजनिक सुलभ शौचालयों का निर्माण।
* हरिजन एवं जनजाति बाहुल्य के क्षेत्रों में ३० नये होम्योपैथिक दवाखाने खाले जायेंगे।
* पिछले वर्ष की अपेक्षा पूर्व दशम कक्षाओं में २०% अधिक अनुसूचित जाति के छात्रों का आच्छादन।
* अनुसूचित जाति के लोगों में आर्थिक स्वावलम्बन बढ़ाने के उद्देश्य से "अनुसूचित जाति वित्त एवं विकास निगम" के कार्यक्रमों में वित्त पोषक योजना की सीमा रु० १२,००० से बढ़ाकर रु० ३५,००० कर दी गई है। इससे अधिक लागत की योजना में निगम १०% की सीमा तक धन विनोयोजन करेगा।

**चिकित्सा एवं स्वास्थ्य सेवाएं**

लोगों को सरलता से चिकित्सा सेवाएं उपलब्ध कराने की दिशा में सरकार ने निम्न प्रयास किये है :—

* चिकित्सा परिव्यय की ७४% धनराशि ग्रामीण क्षेत्रों के लिये।
* ५२३ नये प्राथमिक स्वास्थ्य केन्द्रों और १९ सामुदायिक स्वास्थ्य केन्द्रों की स्थापना।
* बस्ती में "ओपेक फण्ड" की सहायता से ५०० शैय्यायुक्त आधुनिक अस्पताल के भवन हेतु १ करोड़ रुपये।
* फरूखाबाद में डा० राममनोहर लोहिया की स्मृति में एक आधुनिक अस्पताल।
* नवसृजित जनपद सिद्धार्थ नगर, सोनभद्र, महाराजगंज एवं मऊ में से प्रत्येक के मुख्यालय पर १०० शैय्यायुक्त जिला चिकित्सालयों के भवन निर्माण हेतु ६ करोड़ रुपये।

**पिछड़े क्षेत्रों का विकास**

पिछड़े क्षेत्रों को विकसित करने हेतु सरकार निम्न प्रयास कर रही है।

* पर्वतीय क्षेत्रों के विकास हेतु रु० ३३० करोड़ रखे गये हैं। बागवानी विकास हेतु विदेशी सहायता से एक महत्वाकांक्षी परियोजना, तीर्थस्थानों के लिये यात्री प्रशासन संगठन, श्री बद्रीनाथ धाम में ५०० शैय्याओं का यात्री निवास, ऋषिकेश में २०० शैय्याओं का आवास गृह बनाये जाने की योजना है।
* जौनपुर-सथरिया और सहजनवा (गोरखपुर) में दो अलग-अलग औद्योगिक विकास प्राधिकरण, ताकि पूर्वी जिलों का औद्योगिक विकास हो सके।
* पूर्वी क्षेत्र के त्वरित विकास के लिये २० करोड़ रुपये और बुंदेलखण्ड के लिये ५ करोड़ रुपये की निधियों की स्थापना।
* डकैत समस्या वाले क्षेत्रों में नई सड़कों व पुलों के निर्माण हेतु १५ करोड़ रुपये।

**औद्योगिक विकास**

नई औद्योगिक विकास नीति की घोषणा ३० अप्रैल १९९० को जा चुकी है। इसमें रोजगार मूलक लघु व ग्रामीण उद्योगों को विशेष प्रोत्साहन।

**चीनी उद्योग का विकास**

* देश की कुल १२३ चीनी मिलों में से ६७ चीनी मिलें उत्तर प्रदेश में हैं, जिनमें से ४७ चीनी मिलें राज्य/सहकारी क्षेत्रों में हैं। राज्य चीनी निगम की १६ जर्जर चीनी मिलों के स्थान पर नई आधुनिक २,५०० टन प्रतिदिन पेराई क्षमता वाली मिलें लगाई जायेंगी। सहकारी क्षेत्र में भी १७ चीनी मिलों का दुगुनी क्षमता हेतु विस्तारीकरण किया जा रहा है।

**सूचना एवं जनसम्पर्क विभाग**

**उत्तर प्रदेश शासन**

# आचार्य श्रीराममूर्ति, सर्वकारनियुक्त-शिक्षासमित्यध्यक्षं प्रति समर्पितं प्रतिष्ठानमन्त्रिणः प्रतिवेदनम्

माननीयः आचार्यमहोदयः,

भारतीयसर्वकार्यस्य शिक्षानीतिसमित्याः अध्यक्षं प्रति पत्रमिदम् अभिप्रेतम्। भारतीयसर्वकारद्वारा, प्रवर्तितशिक्षानीतिविषयकम् अस्माकम् अभिज्ञनं भवताम् उपलब्धं भविष्यति। यदि शिक्षायां समग्रता श्रमोन्मुखता सर्वव्यापकता चेति अपेक्ष्यन्ते तर्हि देशस्य अन्यशिक्षाकेन्द्रैः साकं श्रीअरविन्दान्ताराष्ट्रिय-केन्द्रस्यापि अवेक्षणं भवद्भिरवश्यं कर्त्तव्यम्।

सम्प्रति संस्कृतं प्रति अस्माकं कर्त्तव्यस्य प्रतिबद्धतायाश्च हेतोः विश्वसंस्कृतप्रतिष्ठानपक्षतः शिक्षानीतिम् अधि संस्कृतस्य स्थानमितिविषयमधिकृत्य प्रतिवेदनमिदं प्रेष्यते। अस्माकं गुरुस्थानीया अरविन्दाश्रमस्था मातृश्रीः अभिहितवती यत् संस्कृतं भारतस्य राष्ट्रभाषा भवेत्। सर्वे भारतीयाः बालकाः संस्कृतप्रयोगे तथैव कुशलाः स्युः यथा फ्रान्सदेशीयाः फ्रेंचभाषायाम् आँग्लाश्च आँग्लभाषायां दक्षाः भवन्ति।

यदि भवान् संस्कृतविषयकं विचारं करिष्यति तर्हि संस्कृतायोगस्य प्रतिवेदनं प्रति विचारः करणीय एव। विषयम् अधिकृत्य १९८३ ख्रीष्टाब्दे अगस्तमासस्य ५ इति दिनांके लोकसभायाम् श्रीलखनसिंहस्य तथा जगन्नाथ राव जोशी महोदयस्य प्रश्नयोरुत्तरे सर्वकारेण कथितं यत्—

(क) आधुनिकभाषाणाम् एकीकृतपाठ्यक्रमे संस्कृताय स्थानं दातव्यम्।

(ख) सर्वेषु माध्यमिकविद्यालयेषु संस्कृतस्य विभागः अवश्यं स्यात्। यतः सुविधायाः अभावहेतोः कोऽपि संकृताध्ययनेच्छुः छात्रः संस्कृताध्ययनात् वंचितो न भवेत्।

(ग) विचारोऽयं नेहरूकाले एव मन्त्रिमण्डलस्तरे अनुमोदितो वर्तते। तदुत्तरवर्तिभिः मन्त्रिमण्डलैश्च नाद्यावधि संकल्पः परिवर्तित इति।

अतः यदि पूर्वोक्तानेव विचारान् आधारीकृत्य माध्यमिकस्तरं यावत् संस्कृतशिक्षणस्य मापदण्डो निधार्यते तर्हि निम्नोद्देश्याः पुरः स्फुरन्ति।

(१) संस्कृतभाषायाः तावद्ज्ञानं कर्तव्यं येन विभिन्नशास्त्राणाम् अध्ययनसामर्थ्यं समुत्पादितं स्यात्।

(२) प्रदेशीयभाषायाः राजभाषायाश्च कृते पारिभाषिकाणां शब्दानां चयनसामर्थ्यं व्यवहारिकाभि-व्यक्तिक्षमता च स्यात्।

(३) मानसिकस्य क्षितिजस्य व्यापकता।

(४) विश्वबन्धुत्वस्य राष्ट्रियैकात्मतायाश्च कल्पना अधिगता स्यात्।

सुस्पष्टमेव यत् वर्तमानशिक्षाक्रमे किमपि परिवर्तनं विनैव एतेषां लक्ष्याणां प्राप्तिः सम्भवति।

**वर्णमाला**—सामान्यशिक्षाक्रमे प्रथमवर्गत एव वर्णानां शिक्षणं प्रारभते। संस्कृतस्य वैशिष्ट्यमिदं यत् कस्यामपि लिप्याम् अस्य लेखनं कर्तुं शक्यते। अस्तु, विभिन्नप्रादेशिकराज्यानां लिपीनां माध्यमेन संस्कृतस्य शिक्षणं न केवलं समीचीनम् अपितु श्रेयस्करमपि।

तथाच, राज्यभाषाहिन्द्याः प्रारम्भिकशिक्षणसमये उचितायाः वर्णमालायाः शिक्षणम् आवश्यकं यतः अस्यां वर्णमालायां पाणिनिप्रोक्तानां ६४ ध्वनीनाम् अभिव्यंजना सुकरा स्यात्। सम्प्रति वर्णानां क्रमशः लुप्यमानत्वात् देवनागरीलिपिः पंगुभूता इति दृश्यते। देवनागर्याः सम्पूर्णा वर्णमाला एव हिन्दी, मैथिली, मराठी, ब्रज, राजस्थानी, नेपाली इति सर्वासां भाषाणां मध्ये सम्पर्कमाध्यमं भूत्वा भावानाम् आदानप्रदान-साधन भवितुम् अर्हति।

**माध्यमिकं शिक्षणम्**—सम्प्रति माध्यमिकशिक्षणे ६, ७, ८, वर्गाणां कृते वर्षत्रयम् निर्धारितम्। अस्मिन् एव समये प्रत्यक्षवैज्ञानिकविधिना भाषायाः शिक्षण प्रारभ्यताम्। पूर्वोक्तोद्देश्यदृष्ट्या अन्ताराज्यभाषारूपेण संस्कृतस्य शिक्षणस्य प्रारम्भः कर्तुं शक्यते। अनया पद्धत्या प्रतिसप्ताहं घटिकाद्वयम् इति रूपेण न्यूनातिन्यूनं ६० घटिकाः उपलभ्यन्ते। यदि आंग्लैः प्रवर्तितायां व्याकरणाधारितपद्धत्यां परिवर्तनं कृत्वा पाणिनिप्रवर्तितायाः प्रत्यक्षव्यावहारिकपद्धत्याः प्रयोगः क्रियते तर्हि वर्षत्रये १८० घटिकात्मके समये संस्कृतस्य व्यावहारिकं ज्ञानं कारयितुं शक्यते।

**उच्चमाध्यमिकं शिक्षणम्**—अस्मिन् समये अर्थात् नवमे दशमे च वर्गे संस्कृतस्य कृते १२० घटिकाः उपलभ्यन्ते। अस्मिन् शिक्षणक्रमेऽयं सिद्धान्तोऽपि स्वीकार्यः यत् छात्राः विभिन्नोपयुक्ताभिव्यंजनाः कर्तुं समर्थाः स्युः। यतः संस्कृतं गुरुमुखीया विद्या अतः तस्याः शिक्षणार्थम् अध्यापकस्य प्रशिक्षणं तथा स्याद् यथा स संस्कृतव्यवहारे समर्थो भवेत्। अन्यथा अनुवादपद्धतिम् आधारीकृत्य क्रियमाणं साम्प्रतिकं शिक्षणम् अकिंचित्करमेव भविष्यति। भाषाशिक्षणस्य प्रथमः चरमश्च सिद्धान्तो यत्—

"भाषणाद् भण्यते भाषा भोजनाद् भोजनं यथा।
पुस्तके तु च या भाषा सा भाषा नैव जायते"॥

**उच्चतरमाध्यमिकं शिक्षणम्**—अस्मिन् स्तरे सामान्यं साहित्यिकं शास्त्रीयं चेति त्रिधा विभाजनं कर्तव्यम्। अत्र अन्तिमद्वयं वैकल्पिकं कर्तुं शक्यते। यतः विज्ञानस्य वाणिज्यस्यापि छात्राः वैकल्पिकभाषा-रूपेण संस्कृतस्य अध्ययनं कर्तुं शक्नुयुः।

एतावता अतिरिक्तव्ययं विनैव पाठ्यक्रमे परिवर्तनद्वारा अनुवादपद्धत्याः स्थाने प्रत्यक्षविधिना प्रशि-क्षणद्वारा च इयं योजना सम्पादयितुं शक्यते।

अत्र अस्माभिः सूत्ररूपेणैव विषयस्य प्रतिवादनं कृतम्। यदि अत्र भवतां रुचिः स्यात् तर्हि अस्माकं सहयोगिनः अस्याः पद्धत्याः क्रमबद्धरूपेण विशदीकरणाय सर्वदा उपलब्धाः भविष्यन्ति। संस्कृतस्य आर्य-परम्परानुसारं भोजनावासयात्रादिषु क्रियमाणं कमपि व्ययं वयं न अपेक्षामहे। कृत्यमिदन्तु ऋषीणाम् ऋणस्य परिशोधनमेव। एतन्मात्रमेव अस्माकं पुरस्कार इति।

भवदीयः
**संस्कृतसेवायाम्**
**(देवदत्तः)**
महामन्त्री


नीचः कुतः ?


रे हन्त!
एतवान् महान्
कपटः!
अयमेव
तव उचितः
पुरस्कारः!


र्माभिहतः शकराजः अधःपतितः। चन्द्रगुप्तस्य पुरुषाः शिबिरं प्रविष्टाः।
ावधानाः सैनिकाः !
कः अपि शकः पला-
यितः न भवेत्।
राजकुमार,
भवतः आज्ञा-
पालनं भवेत् !

निकटे एव प्रच्छन्न - सैनिकेभ्यः सूचना दीयताम् ।

यथा आज्ञापयति !

कतिपयसमये एव सहस्रशः शकसैनिकाः मृत्युपथं नीताः ।

राजकुमार चन्द्रगुप्तस्य जयः !

महाराज्ञी ध्रुवदेवी अमरा भवतु !

शकसैनिका: तथा च शकाधिकारिजना: बन्दिन: कृत:।

महान् विजेता, अस्माकं शकराज: संसारे नातिष्ठत्।







शकानां पराजयस्य समाचारं श्रुत्वा रामगुप्तः, ध्रुवदेवी च घटनास्थलं प्राप्नुताम्।
चन्द्रगुप्त, अहं भवदुपरि बहु-प्रसन्नः। भवते समुचितः पुरस्कारः दीयेत।
राजकुमार, अहं सदा तव ऋणिनी भवामि।


तेषां राजधानीं प्रत्यागमनान्ते –
चन्द्रगुप्तस्य जयः !
महाराज्ञ्याः ध्रुवदेव्याः जयः।


गुप्तराजस्य उत्तराधिकारी तु चन्द्रगुप्तः एव निर्वाचितः आसीत्!
महाराज समुद्रगुप्तेन स्वयमेतत् निर्वाचनं कृतमासीत्।
रामगुप्तः भीरुः आसीत्। राजाधिकारम् अयं नार्हति।


अन्तर्भागे
चलन्तु।
गुप्तस्य गुण-
पुनः पुनः श्रुत्वा
बधिरौ
महाराज, सः एतस्मादपि गुणगानस्य अधिकः अधिकारी अस्ति।


तस्य तु इन्द्रजालविद्या तवोपरि अपि चलिता!
अहं सदैव सत्यतः विमुखः न भवामि।


चन्द्रगुप्तः निद्रापीडितः जातः। ततः सः श्रान्तबालकवत् प्रगाढतया सुप्तः।


रात्रौ चन्द्रगुप्तस्य शयनागारे...


अरे!
एतत् किम्?






हे भगवान्!
त्वम्?


मदिने राजसभागृहे -
दुःखदा वार्ता अस्ति। यत् महाराज रामगुप्तस्य देहावसानं जातम्।


सः कातरः
तदर्थं योग्यः
व आसीत्।
रात्रौ घनान्धकारे अनेन राजकुमार चन्द्रगुप्तस्य हत्या करणस्य प्रयासः कृतः आसीत्।


तस्मिन् समये एव राजसभागृहं कतिपयाः जनाः प्राविशन्।
चन्द्रगुप्तस्य जयः!
एषः एव देशस्य गुप्तवंशस्य च परम्पराणां रक्षणं कर्तुं शक्नोति।
राजकुमार चन्द्रगुप्तः एव गुप्तवंशस्य यथार्थः उत्तराधिकारी अस्ति।


गुप्तवंशस्य सिंहासनं क्षणमपि रिक्तं न तिष्ठेत्।


राजकुमार चन्द्रगुप्तस्य त्वरितं राज्याभिषेकः करणीयः।


सज्जनाः, अहम् एकं गंभीरं प्रस्ताव प्रस्तुतं कर्तुमिच्छामि।
एषः पुनरपि किमपि कुटं चालयितुमिच्छति?
राजकुमार रामगुप्तं सिंहासने प्रतिष्ठापने अस्यैव हस्तः आसीत्।


राजकुमार चन्द्रगुप्तेन स्वदेशस्य तथा पूर्वज-परंपराणां मानरक्षणं कृतम्।
अन्ते अस्य मने अधुना 'आगतमिदम्।



रामनगरदुर्गः,
वाराणसी, शिवरात्रिः

अयि सुरभारतीस्नेहिनः !
विलसन्तुतरां नः प्रणतयः ।

नाविदिता हीयमाना दशा गीर्वाणवाण्याः कस्यापि सहृदयस्य। ईदृशीयं दैन्यावस्था कस्य सुरभारतीपुत्रस्य मनसि क्लेशं न जनयति ? नैष प्रश्नः केवलं भाषायाः अपितु समग्रस्य वैदिकस्य, आध्यात्मिकस्य वाङ्मयस्य भौतिकस्य विज्ञानस्य च रक्षायाः। संस्कृतस्य ह्रासः विश्वस्य दैवसम्पद्ह्रासः। वयं मन्यामहे यत् संस्कृतस्योत्थानं विश्वस्य सर्वाङ्गीणम् उत्थानमेवेति। किन्तु इदानीं विद्यालयेषु शालासु च कापि उत्साहदायिनी स्थितिर्न दृश्यते। सर्वत्र नैराश्यमेव लभामहे।

परन्तु अस्मिन् अन्धतमसे नवोदयसूचिता प्रकाशरेखाऽपि वर्तते। विगतकतिपयवर्षेभ्यः संस्कृतस्नेहपूरितान्तःकरणैः संस्कृतानुरागिभिः स्वकीयैरखण्डप्रयासैः "विश्वसंस्कृतप्रतिष्ठानस्य" माध्यमेन संस्कृतसंवर्धनाय कार्यं सञ्चाल्यते यत्फलस्वरूपेण सर्वत्र भूमण्डले संस्कृतहितसाधकानाम् ऐक्यं पश्यामः।

देवभाषाप्रसारस्य कार्यं यत् पुरतोऽस्ति नः ।
न केवलं तदस्माकं कर्तव्यं धर्म एव वा ॥
यत्सत्यं तत्तु पूर्वेषामृषीणामृणशोधनम् ।
महाफलं महत्पुण्यमिति मे निश्चितं मतम् ॥

तथापि इत्थं प्रतिभाति यत् कार्यमिदं नाल्पेन कालेन पूर्णतामेष्यति अपितु दीर्घकालिकीं योजनामपेक्षत इति। वयं संस्कृतवाणीं व्यावहारिकीं कर्तुं यत्नशीलाः। एतदर्थं प्रतिष्ठानम् कोटिमुद्रामितम् अक्षयनिधिं निर्मातुकामम्। अनेन कोषेण प्रतिष्ठानं पूर्णकालिककार्यकर्तॄणां सुदृढां सङ्घटनां रचयिष्यति तेभ्यः कार्यकर्तृभ्यश्च संस्कृतसेवायै मानधनं देयं भविष्यति, न तु वेतनम्।

पुनश्च अस्य धनस्य उपयोगः पौरोहित्यवर्गसञ्चालनार्थं सरलसंस्कृतशिक्षणवर्गसञ्चालनार्थं च करणीय आस्ते।

उपर्युक्तोद्देश्यं सफलं कर्तुं नेपाल-महाराजाधिराज-पञ्चश्री-वीरेन्द्रवीर-विक्रमशाहदेवैः लक्षमिता मुद्राः प्रतिष्ठानाय प्रदत्ताः। एवमेव सर्वैः संस्कृतसेवकैः अस्य अक्षयकोषस्य संवर्धने सहयोगः कर्तव्यः।

एतत् कार्यं सफलयितुं भगवान् श्रीविश्वेश्वरः अस्माकं शक्ति प्रयच्छतु इति तच्चरणारविन्दयोः प्रार्थये। इति।

विभूति नारायण सिंहः

विभूतिनारायणसिंहः शर्मदेवः
काशीनरेशः

---

धनप्रेषणस्थलम्ः—
विश्वसंस्कृतप्रतिष्ठानम् व बनारस स्टेट बैंक लि० वाराणसी
दानं S. 80G. आयकर-विधानद्वारा करमुक्तिं लभते।

Editor : Pandit Gulam Dastagir Abbas Ali Virajadar, Jengali Pir Dargah, Worli, Bombay-400 018, Publisher-Devadutt, Published at Vishva Sanskrit Pratishthanam, Fort Ramnagar, Varanasi-221 008, and printed at the Tara Printing Works, Varanasi 221010.

# विश्वभाषा

चतुर्थवर्षस्य तृतीयाङ्कः

दीपावली-अङ्कः

१८ अक्टूबर १९९०





अन्ताराष्ट्रिया त्रैमासिकी संस्कृत-पत्रिका

*International Sanskrit Quarterly*

# प्रकाशन सूची

## रत्नभारती ग्रन्थमाला

१. भाषावृत्तिः (पुरुषोत्तमदेवकृता)
Bhāṣāvṛtti (of Puruṣottamadeva)
संपादक: डा० श्रीनारायणमिश्रः १००.००

२. अद्वैतसिद्धिः (बालबोधिनी टीका सहिता) भाग १
Advaitasiddhi (with Bālabodhinī Commentary) Vol. I
संपादक: डा० सितांशुशेखर बागचिः १००.००

३. अद्वैतसिद्धिः (बालबोधिनी टीका सहिता) भाग २
Advaitasiddhi (with Bālabodhinī Commentary) Vol. II
संपादक: डा० सितांशुशेखर बागचिः १००.००

४. श्लोकवार्तिकम् (न्यायरत्नाकरसहितम्)
Ślokavārttika with Nyāyaratnākara
संपादक: श्री द्वारिकादास शास्त्री १००.००

५. *काशिकावृत्तिः (पदमञ्जरी-न्यास-सहिता) भाग १
Kāśikāvṛtti (with Padamañjarī and Nyāsa) Vol. I
संपादक: डा० श्रीनारायणमिश्रः ८५.००

६, काशिकावृत्तिः (पदमञ्जरी-न्यास-सहिता) भाग २
Kāśikāvṛtti (with Padamañjarī and Nyāsa) Vol. II
संपादक: डा० श्रीनारायणमिश्रः ८५.००

७. काशिकावृत्तिः (पदमञ्जरी-न्यास-सहिता) भाग ३
Kāśikāvṛtti (witn Padamañjarī and Nyāsa) Vol. III
संपादक: डा० श्रीनारायणमिश्रः ८५.००

८. काशिकावृत्तिः (पदमञ्जरी-न्यास-सहिता) भाग ४
Kāśikāvṛtti with Padamañjarī and Nyāsa) Vol. IV
संपादक: डा० श्रीनारायणमिश्रः ८५.००
* (सम्पूर्ण सेट (भाग १ से ६) का मूल्य ५००/- प्रति सेट)

९. काशिकावृत्तिः (पदमञ्जरी-न्यास-सहिता) भाग ५
Kāśikāvṛtti (with Padamañjarī and Nyāsa) Vol. V
संपादक: डा० श्रीनारायणमिश्रः ८५.००

१०. काशिकावृत्तिः (पदमञ्जरी-न्यास-सहिता) भाग ६
Kāśikāvṛtti (with Padamañjarī and Nyāsa) Vol VI
संपादक: डा० श्रीनारायणमिश्रः ८५.००

११. अष्टाविंशत्युपनिषदः (गुटका)
Aṣṭāviṁśatyupaniṣadaḥ (28 Upaniṣada)
संपादक: डा० गंगासागर रायः १५.००

१२. दुर्घटवृत्तिः (शरणदेवकृत-विवृत्ति-परिशिष्ट-सहिता)
Durghaṭavṛtti of Śaraṇadeva (with Vivṛtti and appendices)
संपादक: डा० श्रीनारायण मिश्रः ५०.००

१३. तन्त्रयात्रा
Tantra-yātrā
संपादक: ब्रजवल्लभ द्विवेदी ७५.००

१४. सांख्यसूत्र अनिरुद्धवृत्तिः
Sānkhyasūtra Aniruddhavṛtti
सपादक: डा० रामशंकर भटटाचार्यः १५.००

१५. शाङ्खायनब्राह्मणम् (हिन्दी अनुवाद-भूमिका परिशिष्ट-सहितम्)
Śāṅkhāyanabrāhmaṇa (with Hindi translation, Introduction and Appendices)
संपादक: डा० गंगासागर रायः १००.००

१६. धातुप्रदीपः
Dhātupradīpa
संपादक: डा० श्रीनारायण मिश्रः (प्रेस में)

17. Vedic Śākhās
Dr. Ganga Sagar Rai 100.00



## रत्ना पब्लिकेशन्स

बी० २१/४२ ए कमच्छा
वाराणसी-२२१ ०१०, फोन ५६९५८




## अस्मिन् अङ्के



### स्थायिस्तम्भाः



आवरणचित्रम्—कुमारी रीना देव


विश्वसंस्कृतप्रतिष्ठानम् तस्य मुखपत्रम्

# विश्वभाषा

VISHVABHASHA

अन्ताराष्ट्रिया त्रैमासिकी संस्कृतपत्रिका

चतुर्थवर्षस्य तृतीयोऽङ्कः — दीपावली-अङ्कः


## वेदवाणी

( महर्षि-श्रीअरविन्द-विरचित-अग्निमन्त्रमालातः )

अग्निर्होता कविक्रतुः सत्यश्चित्रश्रवस्तमः । देवो देवेभिरा गमत् ॥५॥

॥ पदविन्यासः ॥

१ अग्निः । २ होता । ३ कवि-क्रतुः । ४ सत्यः । ५ चित्रश्रवः-तमः । ६ देवः । ७ देवेभिः । ८ आ । ९ गमत् ॥

॥ व्याख्या ॥

२ आह्वाता । ३ द्रष्टृसङ्कल्पात्मकः । ४ सत्यमयः । ५ बहुविधान्तःश्रवणैश्वर्यपरिपूर्णः । १+६ अग्निदेवः । ७ अन्यैः देवैः सह । ८+९ आगच्छन्तु ॥

## सदस्यता-विवरणम्

| | |
|---|---|
| आजीवनसदस्यता-शुल्कम् | १५०-०० |
| वार्षिकशुल्कम् | १५-०० |
| प्रत्यङ्कमूल्यम् | ५-०० |

### आवेदनम्

माननीयसम्पादकमहोदयाः !

अहम्..............................

विश्वभाषायाः आजीवनं/वार्षिकं सदस्यं भवितुम् इच्छामि। तदर्थम् ..........रूप्यकाणि प्रेषयन्नस्मि। कृपया अधोलिखितसंकेतेन पत्रिका प्रेषणीया—

भवदीयः

नाम..............................

सङ्केतः..............................

..............................

## पाठकपत्रम्

मान्याः सम्पादकवर्याः

सादरं प्रणामाः

विश्वभाषायाः बुद्धपूर्णिमाङ्कः विलम्बेन प्राप्तः चिन्तयामि सम्भवतः संस्कृतजगति पत्रिकेयम् आमुखादवसानपर्यन्तं परमं श्लाघनीया। अङ्केऽस्मिन् डा० राधेश्यामधरद्विवेदि पं० राजारामशुक्ल जी काशी दोण्डुप महाभागैः दलाई लामा महोदयस्य विषये विशदं वर्णितम्; प्रियाशा, मिलनसेतुः, शुकनासोपदेशः धारावाहिकनाटकानि च हृदयमाह्लादयन्ति। सम्पादकीयम् मानवव्यवहाररूपेण मानवसमस्यायाः समाधानम् पुस्तकसमीक्षा रघुवंशमहाकाव्यम् अन्योक्तयः कवितादयः लेखाः प्रेरणास्पदाः। आधुनिकविज्ञानं तस्य विविधाः शाखाश्च लेखस्य माध्यमेन पण्डितवर्येण डा० रूपनारायणपाण्डेय महाभागेन भारतीयवैज्ञानिकानाम् आह्वानं कृतम्। नूनं यदि भारतीयविधिना भारतीयवैज्ञानिकाः संस्कृतमवलम्ब्य विज्ञानलोके दत्तावधानाः भविष्यन्ति तर्हि पुनः भारतं गुरुपदवीमलङ्करिष्यति। लेखोऽयं संस्कृतप्रेमिणां चेतांसि आन्दोलयति इति मन्ये।

संस्कृतसेवायाम्—
**कीर्तिवल्लभ शक्टा**
मण्डलक-चम्पावत
पिथौरागढ़ २६२५२३

## विश्वसंस्कृतप्रतिष्ठानम्

विश्वसंस्कृतप्रतिष्ठानस्य निम्नलिखितानि महत्त्वपूर्णानि बालोपयोगीनि च प्रकाशनानि (संस्कृतअमरचित्रकथाः) सन्ति।

| पुस्तकनाम | मूल्यम् |
|---|---|
| १–गङ्गा | ३.५० |
| २–शङ्कराचार्याः | ५.०० |
| ३–विक्रमादित्यः | ६.०० |
| ४–विश्वात्मविभूतयः | ५.०० |

### आवेदनम्

मान्याः निर्देशिका महाभागाः!

कृपया प्रतिष्ठानेन प्रकाशितस्य.......................इति पुस्तकस्य....प्रतिं/प्रतीः अधोलिखितसङ्केतेन प्रेषयन्तु। तदर्थमहं.......रूप्यकाणि प्रेषयन्नस्मि—

भवदीयः

नाम..............................

सङ्केतः..............................

..............................

# सम्पादकीयम्

अद्य दीपोत्सवः। अतः गृहे दीपाः, गृहाद्बहिरपि दीपाः, गृहोपरि दीपाः, भूतले दीपाः, आकाशे दीपाः, जले चापि दीपाः तरन्ति। जलमध्ये अपि दीपाः विराजन्ते प्रतिबिम्बरूपेण। तथापि तमः यथापूर्वमेव दीपोत्सवान्ते विराजते।

अद्यतनीयः विज्ञानयुगः। विद्युत्प्रवाहेण उद्दीपितः प्रकाशमयः एव अयम्। परन्तु अद्यतनीय-मानवानाम् आत्मा अप्रकाशितः एव स्थितः। अयमात्मा अधोगतिमेव अधारयत् इति दृश्यते।

एतस्मिन् विज्ञानयुगे देशविदेशेषु दूरस्थाः अपि जनाः समीपस्थाः एव इति दृश्यते। अति दूरस्थानां जनानां विमानादि-अतिवेगयुक्तवाहनैः सपद्येव गमनागमनं, दूरभाषयन्त्रेण झटिति एव संवादः, दूरदर्शनयन्त्रेण च प्रत्यक्षं दर्शनमपि सहजं शक्यम्। परन्तु अद्यतनीयमानवानां मनांसि न समीपस्थानि अभवन्, तानि च शङ्काकुशङ्कादिभिः व्यापृतानि एव, कलहादिभिः च अतिदूरे एव स्थितानि। अतः एव विसंवादः अधिकाधिकतया अनुभवपथम् आयाति।

अद्य जातिभेदः नास्ति, परन्तु जातिद्वेषः अस्ति। तथा च धर्मभेदः अपि नास्ति, अयं च विनष्ट-प्रायः एव। परन्तु धर्मविद्वेषः प्रवर्धमानः एव दृश्यते। सर्वधर्ममतसमन्वयात्मकसमभावः प्रायः सर्वत्र एव समाराध्यते। परन्तु असहिष्णुतायाः साम्राज्यम् अपि सर्वत्र एव विवर्धमानम् विराजते। अद्य अस्पृश्यता-पालनस्य स्पर्शः अपि नावशिष्टः। परन्तु पूर्वम् अस्पृश्यतापालनान्ते अपि यथा अन्योन्यम् आत्मीयता अनुभवपथम् आयाति स्म तथा अद्य नास्ति इति वस्तुस्थितिः वर्तते।

तथापि एतादृश्यां परिस्थितौ उपायोऽपि चिन्तनीयः "उद्धरेदात्मनात्मानं नात्मानमवसादयेत्" इति गीतोपदेशः। गीता एषा संस्कृतभाषायाम्। संस्कृतभाषा एव यदा मातृभाषा भवेत् तदा एव गीतोपदेशः यथार्थतया अवगम्यते। ततः एव आत्मोद्धारः।

अतः एव संस्कृतभाषा एव मातृभाषा भवेदिति प्रयत्नाः आवश्यकाः। १९९१ तमवर्षस्य प्रारम्भकाले एव जनगणना भविष्यति। प्रत्येकस्य मातृभाषा अपि लिख्यते। अस्माभिः सर्वैः एव संस्कृतभाषा एव अस्माकं मातृभाषा इति लेखनस्य धैर्यम् अविस्मरणेन चिरस्थायि करणीयमित्यलम्।

—गुलामदस्तगोरः

---

**उद्योगिनं पुरुषसिंहमुपैति लक्ष्मीः दैवेन देयमिति कापुरुषा वदन्ति।**
**दैवं निहत्य कुरु पौरुषमात्मशक्त्या यत्ने कृते यदि न सिद्ध्यति कोऽत्र दोषः।**

# ईसवीय १९९१ जनगणना
# तथा
# संस्कृतस्य पक्षे एका व्यावहारिकी योजना

हे हे संस्कृतज्ञाः संस्कृतानुरागिणः !

**"उत्तिष्ठत, सन्नह्यध्वम्, उदाराः केतुभिः सह"**

(वेदः)

दशवार्षिकी जनगणना पुनरपि १९९१ ईसवीये वर्षो देशे उपैति। सर्वकारस्य गृहमन्त्रालयेन अस्यां दिशि कार्यं समारब्धं तिष्ठति। सर्वकारवक्तव्यानुसारं जनगणना राष्ट्रे विशेषं महत्त्वं धारयति। गणनायां संकलितैः अंकैः इदं बोद्धुं शक्यते यत् वित्तराशेः कियान् भागः कुत्र कुत्र विनिमातव्यो भवेत्।

जनगणनायाः संस्कृतेन सम्पर्के साधिते इदं विदितं जायते यद् एकवारं "संस्कृतं नो व्यवहारभाषा" इत्येवं लेखयितॄणां संख्या देशे द्विशतमात्रं प्रायेण अतिष्ठत्। तदूर्ध्वं गणनायां अभिवृद्ध्या सा संख्या पादोनत्रिशतं प्रायेण अभवत्, तत ऊर्ध्वं सर्वकारीय-विवरणानुसारं सैव संख्या द्विसहस्रं प्रायः जाता। यद्यपि कालेन जायमाना अभिवृद्धिः उत्साहकरी अदृश्यत ततोऽपि भाषाभाषिकप्रतियोगितायां वयं संस्कृताभिमानिनः बहुदूरे तिष्ठामः। यदि कोऽपि भाषाभाषिकगणः पञ्चसहस्रं ततोऽधिकं वा गणनायां भवेत् तत् तस्य जनगणनाविवरणे संख्याविवरणं प्रकाश्यते न तु ततोऽवराणाम्। तेनैव अविहीनत्वात् संस्कृतस्य व्यवहर्तॄणां संख्या जनगणनाविवरणे सर्वकारेण नैव दीयते। यद्यपि संस्कृतज्ञाः संस्कृताभिमानिनः कतिपयलक्षाणि स्युर्नाम भारते परं संस्कृतविषये अवाक्त्वेन संस्कृतज्ञा देशे शून्या इव अवभासन्ते। यदि संस्कृतज्ञा वयं किंकर्त्तव्यविमूढतां, भाग्यैकवादम्, अकर्मण्यताम्, कुम्भकर्णस्वापञ्च विहाय प्रवर्त्तेमहि तत् सर्वमस्माकम् सर्वतोभद्राय कल्पेत।

**व्यावहारिकी योजना**

विश्वसंस्कृतप्रतिष्ठानेन संस्कृतस्य संस्कृतज्ञानाञ्च उज्ज्वलभविष्याय एका व्यावहारिकी योजना बुद्धिसात् कृताऽस्ति। सा चेत्थम्—संस्कृतज्ञः संस्कृताभिमानी प्रत्येकः न्यूनान्न्यूनम् पञ्चविंशतिः स्वपरिचितान् संस्कृतज्ञान् जनगणनां यावत् प्रतिवर्षं प्रत्येकं एकैकं पत्रं लिखतु। जनगणनायां संस्कृतं स्वपरिवारस्य व्यवहारभाषारूपेण च लेखनीयम् इति हि तस्य पत्रस्य सारो भवेत् इति।

यदि इत्थं परम्परया अनेके संस्कृतज्ञाः स्वे स्वे स्थाने तिष्ठन्तः पञ्चविंशतिर्जनान् लिखिष्यन्ति तन्नूनं संख्याऽभिवृद्धये कल्पिष्यते। एवं विधया व्यावहारिक-योजनया एकतः संस्कृतस्य संख्यापक्षः पुष्टतमो भविष्यति अन्यतश्च "संस्कृतन्तु मृता भाषा" इत्येवं गर्हणां कुर्वतां समुचितोत्तरप्रदानमपि सेत्स्यति। "गृह्यतां पाणिना पाणिः मर्यादा बध्यताम् ध्रुवा" इति रामायणोक्त्यनुसारं परस्परं संयुज्य सर्वे संस्कृतज्ञाः स्वस्थान् सर्वानपि दुर्गुणान् अरीन् इव अपास्य परस्परं एकमत्या प्रवर्त्तन्ताम्।

निवेदक :—

**सत्यदेवो वर्मा**

प्रधानः

विश्वसंस्कृतप्रतिष्ठानम् (हरियाणा)

यमुनानगरम्

# संस्कृतिपथिकः

डॉ० केशवचन्द्रदाशः, पुरी
प्राध्यापकः
श्री जगन्नाथ संस्कृत-विश्वविद्यालयः
पुरी-७५२००२

अहं नागरिकः
अहं च संस्कृतिपथिकः
यो गतो निकटे मे
न तस्य संकेतः
सम्मुखे स एव
अस्तव्यस्त–पथः।
हस्ते न यष्टिका
न वा प्रदीपिका
दृष्टिपाते न तारका
न वा काचिन् मनस्विनी राका।
जाने नाऽहं पदक्षेपो मम
किमुद्दिश्य कमतिक्राम्यति—
न मानसे निद्रा, न वा जागरणम्
न शीतस्य कातरता,
न वसन्तस्नेहसम्मेलनम्
चरणपातस्य भूमिविनिश्चये
अन्धायते केवलगमनम्।
अतीते नतोन्नता घटनामालिका
वर्त्तमाने भग्नरुग्णस्वप्नस्य पेटिका
भाविभावे परिधिपरिखा
निरुत्प्रेक्ष्या सीमाप्रहेलिका
रात्रिरेका तमसातटिनी
दिवसस्तु साक्षात् मार्गाचलः
व्यतिकर–प्रतीकार–तल्पे
जलायते कालः,
करप्रसारणमात्रम्
स एव निविडायते
जडायते····अवलीढायते
नेपथ्यस्य शवं वहन्
अहं तु चलामि
नामायितुमनिर्वचनीयम्
स्नपयितुं संस्कारजलेषु
शरत्-शयनीयम्—
गङ्गे च यमुने चैव !
सरस्वति ! गोदावरि !
देहि वारि···· ····
देहि वारि·· ····
महावृक्षं विगिलति
हिंसाविषधरी
हे, ऋतावरि !
हे, वेदस्य माधुरि !
देहि वारि···
देहि वारि····

---

धर्माध्वनीनस्य हि साधुकर्मणो
न न्यूनता काऽपि कदापि जायते।

# कथे

## कोषः कस्य

कदाचिद् द्वयोः कृषकयोः मध्ये कलहः सञ्जातः। तस्य निर्णयं कारयितुं तौ कमपि वृद्धं प्राप्तौ। वृद्धः तौ कलहस्य कारणम् अपृच्छत्।

एकः कृषकः अवदत्—"श्रीमन्! मया अस्मात् स्वल्पा भूमिः कृषिकार्यार्थम् क्रीता। यदा अहं क्षेत्रं कर्ष्टुं आरब्धवान् तदा मम हलं केनापि पात्रेण संघट्टितम्। अहं मृत्तिकाम् अपसार्य अपश्यम्। तत्र स्वर्णमुद्राभिः पूरितः एकः कलशः मया दृष्टः। तं दृष्ट्वा अहम् अस्य कृषकस्य पार्श्वे गत्वा अवदम्—"स्वनिधि गृहाण"। किन्तु अयं नैव शृणोति।

"श्रीमन्, मया केवलं भूमिः क्रीता। न तु स्वर्णकोषः। मम अस्य विषये पूर्वं किञ्चिज् ज्ञातम् अपि न आसीत्। अयं भूविक्रेता च इमं कोषं न स्वीकरोति। किं कर्तव्यम् अधुना?"

द्वितीयः कृषकः अब्रवीत्—"श्रीमन्, कथम् अहम् अस्य कोषस्य स्वामी? भूमिः मया सम्पूर्णतः विक्रीता, मूल्यं च गृहीतम्। भूम्यां यत् किमपि भवेत् तत् सर्वं अधुना तु अस्य एव। न अहं ग्रहीष्यामि एनं कोषम्।"

एतावद् उक्त्वा उभौ अपि कृषकौ पुनः अपि कलहे प्रवृत्तौ। वृद्धस्य प्रबोधनेन अपि द्वयोः कोऽपि तं कोषं ग्रहीतुं सम्मतः न अभवत्। वृद्धः अतीव व्याकुलीभूतः सन् किंकर्तव्यविमूढः अभवत्।

बहु-विचार-विमर्शानन्तरं सः तौ अपृच्छत्—"युवयोः काचित् सन्ततिः अस्ति न वा?"

एकः कृषकः—"मम एकः पुत्रः अस्ति।"

द्वितीयः कृषकः—"मम एका कन्या वर्तते।"

एतत् श्रुत्वा वृद्धः मनसि अचिन्तयत्—यदि अनयोः अपत्ययोः विवाहः स्यात् तर्हि अस्य प्रश्नस्य समाधानं सुकरम् भवेत्।

जगन्नाथः

## कः नाम यथार्थः जैनः?

एकदा भगवान् महावीरः कुमारग्रामस्य उपान्ते ध्यानमग्नः तिष्ठति स्म। कश्चित् पशुपालः तत्र स्वपशून् चारयन् महावीरम् अनुनिर्गतः। तेन ग्रामं गत्वा गोदोहनं कर्तव्यम् आसीत्। अतः असौ महावीरम् अवदत्—"मम पशवः अत्र चरन्ति, किञ्चित् पश्यतु भवान्। अहम् अचिरेण एव प्रत्यागच्छामि।"

महावीरः तु ध्यानलीनः आसीत्। सः पशुपालस्य वार्ता कथं शृणुयात्?

अथ पशुपालः यदा प्रत्यागतः तदा स स्वपशून् तत्र न अपश्यत्। स वराकः तान् अन्वेषयन् वने अभ्रमत्। सर्वां रात्रिं भ्रमित्वा सः स्वपशून् एकत्र समाहरत्। तथापि द्वित्राः पशवः न प्राप्ताः। सः क्रोधाविष्टः अभवत्। वनात् प्रत्यागत्य सः क्रोधवशात् वृषभस्य बन्धनरज्जुं गृहीत्वा तया महावीरम् अताडयत्। तादृश-भयङ्कर-प्रहारेण शिला अपि भग्ना अभविष्यत्। परं महावीरः मनाग् अपि विचलितः न अभवत्। वराकः अयं पशुपालः कम् अपि प्रमादं कृतवान् इति विचार्य सः तं मनसि एव अक्षमत।

ईदृशः आसीत् तस्य संयमः त्यागः च। अनेन एव सः "स्वयं कष्टं सहित्वा अपि अन्येषाम् अपीडनम्" इति सिद्धान्तम् अस्मभ्यम् अददात्। अहिंसातत्त्वं यदि कश्चिद् अधिकतमं विकसितम् अकरोत् तर्हि सः महावीरस्वामी एव।

सारः—

सहित्वाऽपि स्वयं तापं परस्यापीडनं तपः।
अहिंसा परमो धर्मः सम्मतो हि महात्मनाम् ॥१॥
हिंसित्वाऽपि महान् धारो न धर्माच्च्यवते निजात्।
सापराधमपि स्वस्मिन् क्षमते सः दयामयः ॥२॥

(शेषांशः १० पृष्ठे)

गताङ्कादनुवर्तते—

# प्रियाशा

श्री राजारामशुक्लः

[पूर्वाङ्के—दूतं सम्प्रेष्य विष्णुमयः स्वयमपि प्रस्थितुम् उद्युक्तः। प्रियशया सह वियोगालापः। प्रियाशा तस्मै प्रस्थानावसरे अभिज्ञानाङ्गुरीयकं ददाति। विष्णुमयः प्रतिष्ठते। प्रियाशाऽपि स्वसख्या नीरसया सह परामर्शं विधातुं गच्छति। इतः परम्……]

## —चतुर्थोऽङ्कः—

[ततः प्रविशन्ति परस्परमालपन्तश्चत्वारो नागरिकाः]

**प्रथमः**—अहो !

निःस्वार्थसेवानिरतोऽबलानां
सुहृद्दहितैषी सुहृदर्थमद्य।
शाठ्येन दुष्टस्य च हन्त ! साधु-
रस्मान् विहायेन्दुमयः प्रयाति ॥१॥

**द्वितीयः**—अहो निर्दयता दुर्जनानाम् !

बोधितोऽपि बुधैर्दुष्टः स्वैराचारं जहाति नो।
किन्तु कोपमदान्धानां भवत्येव कबन्धता ॥२॥

**तृतीयः**—वयस्याः ! श्रूयते यदार्येन्दुमयस्य विष्णुमयनामा कश्चन सखा गृहीतस्य विंशद्गुणितमपि धनं दित्सते।

**चतुर्थः**—श्रूयते चेत्थमपि यदस्ति विष्णुमयस्य प्रेमिका काचन प्रियाशानाम्नी श्रेष्ठिनः चारुचन्द्रस्य कन्यका। सैवार्यमिन्दुमयं रक्षितुं स्वीयं सर्वस्वमपि प्रत्यर्पयितुं प्रतिज्ञातवती।

**प्रथमः**—वयस्याः ! निखिलमिदं सत्यमेव। परं दुर्जनोऽसौ शून्यालोकः बहुधा बोधितोऽपि स्वैराचारं न जहाति।

**तृ० चतुर्थौ**—धिङ्निर्दय !

**प्रथमः**—सुहृदः ! अद्य खलु सभायामेषैव विवादकथा विचारपथं यास्यति।

**द्वितीयः**—पश्यामस्तावत् किन्तु खलु निर्णयत्यस्माकं महाराजः।

**तृतीयः**—अस्ति नः कौतुहलं निर्णयश्रवणे।

**द्वितीयः**—तदागच्छन्तु, तत्रैव गच्छामः (सर्वे परिक्रामन्ति) एष न्यायालयः—

महाशठः स्वां छुरिकां महोग्रा-
मुपस्थितोऽस्त्येकत एष तीक्ष्णयन्।
विपन्निमग्नोऽपि च निर्विकारः
परत्र मित्रेण विभाति साधुधीः ॥३॥

**प्रथमः**—पश्यन्तु वयस्याः ! एष खल्वस्मन्महाराजो विशेषासनमास्थितः सभां भूषयति। अहो ! सोऽयम्—

न्यायेषु निष्णातमतिर्विदुत्तमः
प्रसन्नवक्त्रो धृतधैर्यं विग्रहः।
गाम्भीर्यमम्बोधिरिवावहन् नृपः
प्रतिष्ठितो भाति युधिष्ठिरः खलु ॥४॥

**द्वितीयः**—वयस्याः ! समारभ्यते खल्वियं परिषद्। तदस्मिन्नेव जनसम्मर्दे सम्मिल्य श्रोष्यामो निर्णयम् (सर्वे निष्क्रान्ताः)

[ततः प्रविशति तथाविधपरिषदधिष्ठितो राजा]

**महामन्त्री**—आर्यमिश्राः ! ज्ञातैव भवद्भिः शून्यालोकेन्दुमययोर्विवादगाथा। बहुशो बोधितोऽप्येष शून्यालोको दारुणात् कर्मणो नैव निवर्तते। विषयेऽस्मिन्नितःपूर्वमस्यां परिषदि बहुधा बहु च चर्चितमस्माभिः। अद्य खलु न्यायविदामग्रहणीरत्रभवान् अस्मन्महाराजो यथोचितेन निर्णयेन सभामनुग्रहिष्यति।

**राजा**—अहो ! किं वाऽत्र निर्णेयमस्माभिः। अद्य तु श्रेष्ठिनः शून्यालोकस्य दयैवार्यमिन्दुमयं रक्षितुं क्षमते।

**शून्यालोकः**—(ससम्भ्रममुत्थाय) महाराज !

# रघुवंशमहाकाव्यम्

## ( गताङ्कादनुवर्तते )

डॉ० रेवा प्रसाद द्विवेदी

[पूर्वाङ्के—सन्ततिहीनः राजा दिलीपः पत्न्या सह गुरोराश्रममुपागतः। इतः परम्…]

'भगवन्, भवति भवानेन मम 'हुताशनः, जलम्, व्याधिः, दुर्भिक्षं, महामारी चे' ति पञ्चविधानां दैवीनाम् मानुषीणां चाटविकतस्कराद्युपपादितात्मना-मापदां प्रतिकर्त्ता, ततश्चोपपन्नभूयिष्ठैव मम 'स्वामी, अमात्याः, सुहृदः, कोषः, राष्ट्रम्, दुर्गम्, बलम्'-इति सप्तस्वप्यङ्गेषु शिवतातिरेव राज्ये, इमे ये मम दृष्ट-लक्ष्यभिदः शराः, त इमे दूरात् प्रशमितारिभिर्मन्त्र-विदस्तव मन्त्रैः प्रत्यादिश्यन्त इव, अवग्रहजनिता-स्वापत्सु यदा सस्यानि विशोष्यन्ते तदा त्वयैवाऽग्निषु विधिवदुत्सृष्टानि हवींष्येव वृष्टीभवन्ति, तवैव या व्रताध्ययनसंपत्तिस्तयैव खलु ब्रह्मवर्चसमिति परिभाषि-तया मदीयाः प्रजा भयाशङ्कातङ्कान् प्रविरेचिताः सत्यः पूरुषस्य पूर्णमायुर्जीवन्ति, न भवति तासु प्रवृत्तिः 'अतिवृष्टिः, अनावृष्टिः, मूषिकाः, शलभाः, शुकाः अत्यासन्ना राजानश्चे'-ति प्रथितनाम्नामीतीनाम्। ब्रह्मयोनिस्त्वमेव मे भगवन्। शिवानुध्याता, भवन्ति मे सर्वा अपि संपदो निरापदः सानुबन्धाश्च। एकं तु मह्यम् अरुन्तुदम्, आलानमिव दन्तिने, असह्यपीडं च तत्। तच्च तवैवास्यां वध्वां सदृशः प्रजातन्तोर-दर्शनम्, भवामि अदृष्टसदृशप्रजः सुदक्षिणायामस्यामे-षोऽहम्। अवशिष्यत एव पितॄणाम् ऋणमिदानीमपि मयि, न प्रीणाति मां रत्नसूरपि अष्टादशद्वीपसहिता मेदिनी, संशयमापन्नमिदानीं स्वधाद्रव्यं पितृभ्यः, उपस्थितमितःपरं पिण्डविच्छेदभयं तेभ्यः, प्रवर्त्तन्तेत-रामुष्णोष्णा निश्वासा एषां मुखेभ्यः, जायन्ते च ततो निवापाञ्जलयोऽपि कवोष्णाः। तस्यास्य यज्ञविशो-धितात्मनोऽपि प्रजालोपनिमीलितस्य मे प्रकाशाप्रकाशो लोकालोकाचल एव केवलः सादृश्यमुपपादयति। सोऽहमस्मि स्वयमपि स्नेहात् सिक्तः, अदृष्टफलप्रसवश्च वृक्षः भवतामाश्रमस्य। तात ! एतस्मात् प्रजालोप-व्यसनाद् यथा मुच्ये तथा त्वरितमेव संविदध्याः, इक्ष्वा-कूणां दुरापेऽर्थे सर्वाः सिद्धयस्त्वदधीना एव।' इति।

ऋषिर्वसिष्ठोऽपि राज्ञो दिलीपस्य सन्ततेरवष्टम्भ-कारणं प्रणिधानतो विज्ञाय उदाहरत्—'ऋतुस्नाता-मिमामेव देवीमनुध्यायता शक्रमुपस्थायोर्व्वीं प्रतिया-स्यता च त्वया कल्पतरुच्छायमाश्रिता सुरभिरनव-धानेन नाभ्यवन्दि। 'अवजानासि मां यस्मात् अतस्ते न भविष्यति मत्प्रसूतिमनाराध्य प्रजेति त्वां शशाप सा'। आकाशगङ्गाया उद्दामदिग्गजे स्रोतसि नदति शाप एष 'त्वम्, त्वत्सारथिश्चे'ति द्वाभ्यामपि न श्रुतः। पूज्यानां पूजासु यो व्यतिक्रमः स खलु प्रतिबध्नात्येव श्रेयांसि। प्रचेतसो दीर्घतमाय सत्राय हवींष्युपपादयितुं सुरभिरिदानीं भुजङ्गपिहितद्वारं पातालमधितिष्ठति। दुरुपसर्पा सा साम्प्रतम्। न शक्यमिदानीं प्रष्टुं 'कां वा भगवती प्रतिनिधापयितुमिच्छति वत्सतरीषु मह्यमि'-ति। अथापि न भवति सिद्धिरस्माकं निरुद्धद्वारा। अस्ति मम यज्ञधेनुर्नन्दिनी। एकान्तरा सुता सा सुरभेः। तस्या अपि परिचर्याप्रसादौ कल्पेतामेवार्थ्यमर्थमुपपाद-यितुम्। स्वाधीनसाधना अस्यामिमे वयम्। इति।

महर्षौ वसिष्ठ एवंवादिन्येव अस्याहुतिसाधनं नन्दिनी वनान्तरादावव्रते ! 'न कृशा, न च भूयसांऽ-सला, सविषाणाऽपि न घातकश्मला, अभवन्ननु नन्दिनीगतं न हि निन्द्यं खलु किञ्चिदप्यघम्'। नितान्त-मेव पुण्यमस्या दर्शनम्। अभिनवं शशिनं सन्ध्या नन्दिनी च ललाटोदयमाभुग्नं श्वेतरोमाङ्कं बिभृतः, भवतश्चोभे अपीमे पल्लवस्निग्धपाटले। अयमस्या आलोकः। मेध्येनावभृथेनाभ्यसेचि तदानीमेवाश्रमभूः, तदानीमेव च सिञ्चतितरां नन्दिन्यपि वत्सालोक-प्रवर्त्तिना, ततश्च मेध्यतरेण स्तन्यप्रस्नवेन तामिमाम्। इयमस्या वात्सल्यमयी प्रवृत्तिः। अयञ्चास्या महानुभावो महिमा यदियं तीर्थाभिषेकजामिव शुद्धिमुपपादयन्ती प्रविराजते खुरोद्धूतैः रजःकणैः।

(क्रमशः)

# श्रीनिवासरामानुजन्

स० पां० देशपाण्डे

अस्य विंशतिशतकस्य प्रथम चरणे अस्माकं भारतदेशे श्रीनिवासरामानुजन् नाम जगद्विख्यातः गणितज्ञः जातः। सः गणितविषये प्रज्ञावान् पण्डितः च आसीत्। तत्रापि तस्य तैलबुद्धिः गणितस्य शुद्धविभागे द्रुतं चलति स्म। तेन संख्याप्रणालिमध्ये मौलिकं संशोधनं कृतम्। अतः तस्य नाम भारतीय-गणितेतिहासे उल्लेखनीयम् अस्ति। एतेन महता संशोधनेन रामानुजस्य नाम पाश्चिमात्यदेशे परिचितम् अभवत्। तत्त्वतः रामानुजन्महोदयः गणितस्य क्षितिजे अकस्मात् उदितः, क्षणकाले स्वस्य बुद्ध्या तेजसा अचकासत्, अत्रान्तरे आकाशस्य तारकेव सः पृथिव्यां झटिति न्यपतत् इति उच्यते। समासतः सः अत्यन्तं अल्पायुषी बभूव। दुर्दैववशात् खलु सः द्वित्रिंशत्तमे वर्षे अकाले स्वर्गतः। तर्हि अष्टाषष्टिवर्षाणि पश्चात्, द्विवर्ष-पूर्वं तस्य गणितज्ञस्य जन्मशताब्दिमहोत्सवः अखिले जगति सम्मानेन सम्पन्नः अभवत्। एतस्मिन् विषये किमस्ति रहस्यम्? किमर्थं च रामानुजन्महोदयस्य नौटकं चरितं भवतः कथयामि अहम्?

उपरिनिर्दिष्टः श्रीनिवासरामानुजन्महोदयः १९८७ तमे वर्षे डिसेंबरमासे द्विविंशत्तमे दिने, अद्य तामील-नाडूराज्ये, कावेरी नद्याः तीरे इरोड नाम ग्रामे तस्य मातुलगृहे सञ्जातः। यथा श्रीभास्कराचार्यस्य कुले तस्य पूर्वम् अपिय उत्तरकाले श्रेष्ठानां पुरुषाणां सर्वेषां ज्योतिर्गणितविदानां माला दृश्यते, तद्वत् रामानुजन्-महाशयस्य कुले कोऽपि धीमान् पुरुषः न जातः। तस्य पिता तु कुम्भकोणम् नगरे एकस्मिन् आपणे एकः सेवकः आसीत्। तस्य मासिका प्राप्तिः विंशति रुप्यकाणि। कुटुम्बस्य घटकाः बहवः। संक्षेपतः तस्य परिवारे दारिद्र्यम् आसीत्। बालरामानुजनस्य जन्म नामकलदेव्याः कृपाप्रसादेन बभूव, इति कथ्यते।

बाल्यात्प्रभृति पाठशालायां रामानुजन्बालः एकः कुशाग्रबुद्धिः विद्यार्थी आसीत्। गणितविषये तस्य बुद्धिः शीघ्रं चलति स्म। सः एकाकी गणितस्य उत्तर-संशोधनम् अकरोत्। अतः वर्गबान्धवाः तस्य विडम्बनम् अकुर्वन्। परं सः वर्गबन्धुषु कदापि क्रोधेन वर्तनं न अकरोत्।

सः अध्यापकान् पुरतः अङ्कगणितस्थान् वा बीजगणितगतान् कठिनान् कूटप्रश्नान् उपस्थितान् कृत्वा, तान् निरुत्तरान् अकरोत्। उदाहरणार्थम्, एकदा गणिताध्यापकेन पठितः—

चत्वारि विभज्य चत्वारि इति एकम् $\left(\frac{४}{४} = १\right)$

पञ्च विभज्य पञ्च इति एकम् $\left(\frac{५}{५} = १\right)$ इति।

तुरं रामानुजनबालेन पृष्टम्,

'महोदय, शून्यं विभज्य शून्यं किम्?' $\left(\frac{०}{०} = ?\right)$

येन प्रश्नेन अध्यापकमहाशयः निरुत्तरः अभवत्।

बीजगणितस्य सूत्रानाम् वारंवार शोधः तस्य छन्दः आसीत्। उदाहरणार्थम्,

चत्वारः क्रमवाराः संख्याः गुणित्वा एतस्मिन् एकः मिलित्वा पूर्णवर्गः भविष्यति। बीजभाषायां एतद् सूत्रं $५ = x\ (x+१)\ (x+२)\ (x+३)+१$ इति वर्तते।

यदा $x = २$, तदा, $५ = १ \times २ \times ४ \times ३ + १ = २५ = ५^२$

पुनरपि, यदा $x = २$, तदा, $५ = २ \times ३ \times ४ \times ५ + १ = १२१ = ११^२$

इति प्रकारेण नानाविध मूल्यानि दत्वा, सूत्राणां शोधं करोति सः स्वरञ्जनार्थम्।

अथैकदा पाठशालायां शोधं कर्तुं एकः निरीक्षकः गतः। सः निरीक्षकः स्वयं गणिते प्रवीणः तेन सर्वेभ्यः बालकेभ्यः उत्तरशोधनार्थम् एकम् उदाहरणं दत्तम्। तद् उदाहरणं इत्यासीत्।

एकः सधनः पुरुषः पाठाशालायां बालकान् पारितोषिकानि वितरितुम् वाञ्छति स्म। यः छात्रः प्रथमोस्ति तस्मै शतं रुप्यकाणि, द्वितीयाय नवनवति, तृतीयाय अष्टानवति,""इति क्रमेण अन्त्याय बालकाय रुप्यकम् एकम्। तर्हि वदत कति रुप्यकाणि खलु सधनः पुरुषः पाठशालायां दास्यति ?

एतं प्रश्नं पृष्ट्वा, निरीक्षकमहोदयः वर्गे इतस्ततः अभ्रमत्। बालकानां पाटयः अपश्यत्। तस्य मनसि बालकाः कां रीतिम् अवलम्बन्ति उत्तरशोधनार्थं, इति कुतूहलम्। बहवः बालकाः

१+२=३, ३+३=६, ६+४=१०,""

इति क्रमेण युतिं कुर्वन्ति स्म। परं एकस्मिन्कोणे एकः बालकः स्वस्थम् उपविश्य, शान्तचित्तेन इतराणां बालकानां चेष्टितम् अपश्यत्। तं तस्याम् स्थितौ दृष्ट्वा निरीक्षकः प्रथमम् आश्चर्यचकितः, परं अल्पकालान्तरे क्रोधायुक्तः अपि अभवत्। क्रोधेन तेन निरीक्षकेण तस्मै बालकाय पृष्टम्, 'भो, बालक तुरं वद, त्वया गणितं कृतं न वा ?'

'आम् महाशय, मया शीघ्रं उत्तरशोधनं कृतम्'।

'किं उत्तरं तव ?'

'५०५०, महोदय'

तस्य उत्तरं श्रुत्वा, निरीक्षक महोदयः विस्मितः जातः। तर्हि तेन बालकः पृष्टः,

'रीतिं वद'

'वदामि महाशय'

मां शतं च एकं च इति शतकोत्तरः एकः

नवनवति च द्विः च अपि शतकोत्तरः एकः

अष्टानवति च त्रिः च अपि शतकोत्तरः एकः

अद्यप्रभृति पञ्चाशत् युगुलानि मिलित्वा

१०१×५०=५०५०

रुप्यकाणि, इति उत्तरं सः अकथयत्।

साधु, साधुतरं, इति उक्त्वा, निरीक्षकमहोदयेन तस्य बालकस्य पृष्ठे स्नेहादरपूर्वकं हस्तं वितीर्य भविष्यत्काले त्वं श्रेष्ठः गणितज्ञः भविष्यसि, इति आशीर्वादाः अपि प्रदत्ताः।

न तु कथनम् आवश्यकं यत् सः बालकः श्रीनिवासरामानुजन्महोदयः एव अभवत्।

एवंगुणविशिष्टं श्रीनिवासरामानुजन्महोदयं केंब्रिजविश्वविद्यालयस्य प्रमुखप्राध्यापकः श्रीहार्डी महाशयः. तस्य संशोधने श्रेष्ठस्य गणितज्ञस्य बीजं ज्ञात्वा तं इंग्लण्डदेशे आहूतवान्। तत्र सः प्रथमश्रेण्याः गणितज्ज्ञानां सहवासे आगतः। अल्पकाले तेन तेषाम् अद्ययावत् विहितां गणितरीतिं पठितवान्। अतःप्रभृति रामानुजन्महोदयेन बहवः शोधनिबन्धाः लिखिताः। ततः निखिले युरोपदेशे तस्य नाम ज्ञातं बभूव। तथापि दुर्दैववशात् शीतहवामानात् कुपोषणात् च सः राजयक्ष्मारुग्णः अभवत्। अतः तस्य स्वदेशप्रत्यागमनम् अवश्यं जातम्। तथापि अत्र आगमनात्पश्चादपि तस्य संशोधनकार्यम् अविरतं चलति स्म, आमरणम्। समासतः श्रीनिवासरामानुजन्महोदयः महान् गणितज्ज्ञः जातः।

तं श्रेष्ठं गणितज्ज्ञं श्रद्धाञ्जलिं अर्पयामि अहम्।

---

( ६ पृष्ठस्य शेषांशः )

सः तौ अवदत्—"तर्हि अयं मम निर्णयः। अनयोः पुत्रकन्ययोः विवाहः क्रियताम्। ताभ्यां च एतत्सर्वं धनं दीयताम्।"

उभौ कृषकौ इमं प्रस्तावं सहर्षम् अभिनन्दितवन्तौ। अथ तौ वृद्धाय धन्यवादान् दत्त्वा, हस्तेन हस्तं गृहीत्वा च गृहं प्रतिनिवृत्तौ, अचिरेण च तस्य प्रस्तावानुसारं कृतवन्तौ ॥

सारः—

न स्पृशेदर्थमन्यस्य नादद्यान्मूल्यमन्तरा।
जायते विमला बुद्धिरस्तेयाच्चापरिग्रहात् ॥१॥
व्यवहारेण सत्येन प्रीतिवृद्धिः परस्परम्।
सत्यमेव स्मृतं सद्भिः सौख्यं सम्पत्तिसाधकम् ॥२॥

# मिलनसेतुः

डॉ० भक्तिसुधा मुखोपाध्याय
भू० पू० रीडर (संस्कृत) का० हि० वि० वि० वाराणसी

**गताङ्कादनुवर्तते—**

[पूर्वाङ्के-जयातरुण्योरालापः। तरुणी स्वकौमार्य-निमित्तीभूतां कथां जयायै श्रावयति। कथां श्रुत्वा जया तां परिचिनोति-"किं ते नाम सुनन्देति"। इतः परम्·····]

तरुणी—आम्, किन्तु किमेतत्? कथं त्वं वेपसे? चक्षुषी उज्ज्वलतरे संवृत्ते। किं ते जातम्?

जया—वद, वद किं नाम तव प्रेमास्पदस्य?

सुनन्दा—सुगृहीतनामाऽसौ सुव्रत इति आकार्यते।

जया—[आत्मानं स्थिरीकर्तुं भृशं चेष्टमाना पार्श्वस्थद्वारकपाटं दृढरूपेण करेण गृह्णाति विमूढेव दृश्यते च]।

सुनन्दा—(जयां हस्तेन स्पृष्ट्वा) कथं त्वमेवं भूता?

जया—किं वदामि? अहमेव मन्दभागिनी पत्नी तस्य।

सुनन्दा—(सहर्षविस्मयम्) सत्यम्? तर्हि कथय सर्वम्।

जया—अहमतिनिष्ठुरा। प्रेममये, स्नेहशीले, क्षमाप्रार्थिन्यपि पत्यौ अहम् अति निष्ठुरा आसम्। सुनन्दे! वद, वद मेऽपराधस्य कः प्रायश्चित्तविधिः।

सुनन्दा—तुषानलदाहः। तथाविधस्य पत्युः तत्प्रेम्णश्च विमाननाया नास्ति लघुतरं प्रायश्चित्तम्। तस्य कोऽपराधः? एवं श्रुतं, त्वया लिखितानां पत्राणां न किमपि तस्य हस्तगतम्। पत्राणि पत्रवाहकेन सह योजनां कृत्वा तव पितृव्यश्वसुरेण नाशितानि। पितृव्यमरणस्य बहुदिनपश्चात् पुरातनभृत्येन माधवेन सर्वं तस्मै निवेदितम्। स एव माधवः एकदा माम् अपि सर्वं ज्ञापयत्। तथापि स चिराय त्वय्येव स्निह्यति। नास्ति तत्स्नेहे अन्यस्य कस्यापि अधिकारलेशः।

जया—विरम, विरम। नातः परं श्रोतुं क्षमाऽस्मि। दैवात् यदा उद्याने तम् अद्राक्षं तत्कालिकं तस्य दैन्यमपमाननं नेत्रपथे स्फुरत्येव। किं क्रियताम् अधुना? कथं स प्राप्येत?

सुनन्दा—स्थिरा भव, तव हृदयरत्नं तवैवास्ति। तव कण्ठरत्नं यदि लुब्धया मया नापहर्तुं शक्यं तर्हि केनापि मुषितं न भविष्यति। अधुना संध्या अतिक्रान्ता। माता गृहे मां प्रतीक्षते। विलम्बेन उत्कण्ठिता भवेत्। तत् गृहं याम्यधुना। पुनरागमिष्यामि। मा खिन्ना भव। यद्यपि अनुचितम् आचरितं त्वया तथापि अनुतापानलदग्धा त्वम् अग्निदग्धहेमवत् अधिकं शोभसे, विशुद्धाऽपि। अधुना मानं त्यक्त्वा त्वया स्वयमेव पत्युर्वसतिः गन्तव्या। उदारहृदयस्य तस्य समीपे गमनेनैव स त्वां स्वोरसि गृहीष्यतीत्यत्र नास्ति कोऽपि सन्देहः। अधुना अनुजानीहि मां गृहं गन्तुम्।

जया—तथा। एहि कियद्दूरं यामि त्वया सह।

(उभे निष्क्रान्ते)

(क्रमशः)

# ज्ञानशिविरम्



## ऐतिहासिकम्

१—फतेहपुरसीकरी इत्यस्य सम्बन्धः केन सह अस्ति ?

| | |
|---|---|
| क | ख |
| अकबरः | मानसिंहः |
| ग | घ |
| हैदर अली | तात्या टोपे |

२—अष्टप्रधानानां व्यवस्था कस्य शासने आसीत् ?

| | |
|---|---|
| क | ख |
| शांहजहाँ | चन्द्रगुप्तः |
| ग | घ |
| शिवाजिः | चन्द्रगुप्तः (द्वितीयः) |

३—मयूरसिंहासनं (तख्त ताऊस) कस्य सभायाम् आसीत् ?

| | |
|---|---|
| क | ख |
| शांहजहाँ | औरंगजेबः |
| ग | घ |
| जहाँगीरः | इल्तुतमिशः |

४—मनसबदारीप्रथा केन प्रारब्धा ?

| | |
|---|---|
| क | ख |
| शिवाजिः | अकबरः |
| ग | घ |
| अलाउद्दीनखिलजी | मुहम्मदतुगलकः |

## विश्वप्रसिद्धपुस्तकानि

| पुस्तकनाम | रचयिता |
|---|---|
| १—मिताक्षरा | —विज्ञानेश्वरः |
| २—कथासरित्सागरः | —सोमदेव भट्टः |
| ३—मर्चेन्ट आफ वेनिस | —शेक्सपियरः |
| ४—इण्डिका | —मेगस्थनीजः |

## त्रैमासिकम्

१—चौ० देवीलालस्य उपप्रधानमन्त्रिपदतः अपदस्थता।

२—ईराकद्वारा कुवैतस्य अधिग्रहणम्।

३—मण्डल-आयोगस्य प्रवर्तनाय भारतीयसंसदे प्रस्तावः।

४—टेस्ट क्रिकेटस्पर्धायां इंगलैण्डदेशेन भारतस्य उपरि १—० अंकेन विजयः कृतः।

५—पाकिस्तानराष्ट्रस्य नवनिर्वाचिता संसद् भंगीकृता तत्रत्य राष्ट्रपतिना।

**उत्तराणि**

१—क २—ग ३—क ४—ख

## परीक्षा

१—अस्य वर्षस्य रामानुजन्पुरस्कारः केन लब्धः

२—स्वतन्त्रभारतस्य प्रथमः गृहमंत्री ?

३—प्रो० यशपालः कः अस्ति ?

४—भारते सर्वाधिका साक्षरता कुत्र अस्ति ?

परीक्षा—उत्तराणि, सम्पादकः विश्वभाषा, दुर्गारामनगरम् वाराणसी इति संकेतेन प्रेष्यन्ताम्—सं०



**मुलायम सिंह दुनिया में रहें न रहें, हिन्दू और मुसलमान की एकता कायम रखना, इस विचार को मत मरने देना।**

**—मुलायम सिंह यादव**



—मुलायम सिंह यादव

# सबसे पहले राष्ट्र बाद में कोई बात...

जो रोजमर्रा की छोटी-बड़ी चीजों को लेकर उतावले हो जाते हैं और कभी-कभी इतने जोश में आ जाते हैं कि एक-दूसरे की बात भी सुनने को तैयार नहीं होते, उन्हें जरा पलटकर अपनी पाँच हजार वर्ष पुरानी संस्कृति को देखना चाहिए। काश्मीर से कन्याकुमरी और कच्छ से कामरूप तक का यह विशाल देश कोई एक-दो दिनों में नहीं बना होगा। इसके पीछे सैकड़ों-हजारों विचारों और सिद्धान्तों का द्वन्द्व है तो समन्वय भी। कितनी ही जीवन दृष्टियाँ, रहन-सहन की कितनी पद्धतियाँ, कितने-कितने विभिन्न प्रकार के पहनावे और हजारों बोलियों के इस बहुरंगी देश की असली ताकत इसकी सहिष्णुता है। एक-दूसरे के विचार और विश्वासों की रक्षा करने का भाव है। ऐसा न होता तो आज यह अद्भुत देश न होता।

क्या हम मंदिर-मस्जिद के विवाद के चलते हजरों साल पुरानी अपनी सहयोग और सद्भाव की विरासत भुला देंगे?

**सद्भाव की विरासत हमारी विरासत है**



**सूचना एवं जनसम्पर्क विभाग उ० प्र० द्वारा प्रसारित**

विज्ञानलोकः

# संस्कृतवाङ्मये विज्ञानचर्चा

डॉ० चन्द्रगुप्तवर्णेकरः
नागपुरम्

साम्प्रतं विज्ञानयुगं वर्तते, इति बहुजनाः वदन्ति; यतः इदानीं यत्र तत्र सर्वत्र नवविज्ञानजनितानां यन्त्रोऽपस्करणानां प्रयोगः प्रचलति; विज्ञानचर्चाश्च प्रवर्तन्ते। वृद्धिङ्गता खलु "सामान्यविज्ञानम्" इति शब्दस्य व्याप्तिः। यतः यत् किमपि ह्य एव असामान्यं विज्ञानोपकरणम् अभूत् तदद्य सामान्यमेव। 'आधुनिकतमानां विज्ञानोपकरणानां प्रयोगेषु स्पर्धा', इत्येव प्रगतेः व्याख्या सञ्जाता किम्बहुना !

नूनं विज्ञानविषयाणां चर्चाऽपि संस्कृतवाङ्मय-परम्परायाः अभिन्नमङ्गमेव। **"विज्ञानं ज्ञानं तनुते।"** इति वेदवचनम्, **"ज्ञानं विज्ञानसहितम्—"** इति गीतोपदेशश्च सुविदितः अस्ति। एवमेव विज्ञानपूर्णानि खलु अस्माकं नैकानि शास्त्रोपशास्त्रान्तरगतानि सिद्धान्तसूत्राणि। अष्टादशसु पूराणग्रन्थेष्वपि विज्ञान-चर्चा प्रवर्तते। उदाहरणाय श्रीमद्भागवतेषु तृतीये-स्कन्दे एकादशाध्याये अणु-परमाणुविषये ईदृशी चर्चा विद्यते—

अणुर्द्वौ परमाणू स्यात्त्रसरेणुस्त्रयः स्मृतः।
जालार्करश्म्यवगतः खमेवानुपतन्नगात् ॥

**अन्वयः**—द्वौ परमाणू अणुः स्यात्। त्रयः (अणवः) त्रसरेणुः स्मृतः। अर्क-रश्मि-जालअवगतः खम् एव अनुपतन् अगात्।

चरमः सद्विशेषाणामनेकाऽसंयुतः सदा।
परमाणुः स विज्ञेयो नृणामैक्यभ्रमो यतः ॥

**अन्वयः**—सद्विशेषाणां चरमः अनेकः असंयुतः सदा (यः) सः परमाणुः विज्ञेयः। यतः नृणाम् ऐक्यभ्रमः (भवति।)

अस्मिन्नेव ग्रन्थे कालविज्ञानस्य विषये, चतुर्युगाणां विषये वर्णनं विद्यते—

कृतं त्रेता द्वापरं च कलिश्चेति चतुर्युगम्।
दिव्यद्वदिभिर्वर्षैः सावधानं निरूपितम् ॥
यामाश्चत्वारश्चत्वारो मर्त्यानामहनी उभे।
पक्षः पञ्चदशाहानि शुक्लः कृष्णश्च मानद ॥

आयुर्विज्ञानविषयेऽपि जगन्मान्या खलु बहुविधा संस्कृतग्रन्थमाला (तत्राऽपि सुश्रुत-चरकभारद्वाजादीनाम्)। एतेषु ग्रन्थेषु प्राणिनां शरीररचनाविषये, रोगोपचाराणां विषये, वनस्पतिजन्यानां प्राकृतिकौषधीनां विषये सविस्तरं वर्णनं प्राप्यते। नैके सद्यस्तनाः भेषजविशेषज्ञाः संस्कृतग्रन्थगतानाम् आयुर्वेदसूत्राणाम् आधुनिके सन्दर्भे तौलनिकाध्ययनं संशोधनं च कुर्वन्ति। न केवलं चराणां विषये अपि तु वृक्षाणां रोगोपचाराणां विषयेऽपि संस्कृतरचनाः वर्तन्ते। उदाहरणाय—

अभ्याशजातास्तरवः संस्पृशन्वः परस्परम्।
मिश्रैर्मूलैश्च न फलं सम्यग्यच्छन्ति पीडिताः ॥
शीतवातातपै रोगो जायते पाण्डुपत्रता।
अवृद्धिश्च प्रवालानां शाखाशोषो रससृतिः ॥
चिकित्सितमथैतेषां शस्त्रेणादौ विशोधनम्।
विडङ्गधृतपङ्कैस्तान् सेचयेत् क्षीरवारिणा ॥

# वन्यजीव सुरक्षा सप्ताह १६६०

## क्या आप जानते हैं

१. वन्य जीव प्रकृति के विभिन्न घटकों में संतुलन को बनाये रखने में महत्वपूर्ण भूमिका निभाते हैं।
२. चिड़ियाँ कीड़े-मकोड़ों को खाकर खेती की रक्षा करती हैं।
३. जल प्रदूषण दूर करने में मगर, घड़ियाल व कछुओं का महत्वपूर्ण योगदान है।
४. मनुष्य के भयानक रोगों के इलाज का प्रथम प्रयोग वन्य जीवों पर ही किया जाता है।
५. सांप कृषि को क्षति पहुँचाने वाले चूहों व अन्य जन्तुओं का सफाया करते रहते हैं।
६. साँप का विष औषधि में प्रयुक्त होता है।
७. कई औषधियों की प्राप्ति वन्य जीवों से होती है।

# इसलिये वनों व वन्य जीवों
# की
# रक्षा कीजिये

वन्य जीवों को क्षति पहुँचाने पर अथवा क्षति पहुँचाने का प्रयास करने पर वन्य जीव ( संरक्षण ) अधिनियम १९७२ के अन्तर्गत दो वर्ष तक के कारावास तथा रु० २०००/- तक के आर्थिक दण्ड का प्राविधान है। इसकी पुनरावृत्ति पर दण्ड दूना हो जाता है। इसके अतिरिक्त अवैध कार्य में प्रयुक्त हथियारों के लाइसेंस निरस्त किये जा सकते हैं तथा वाहन जब्त किये जा सकते हैं।

---

**वन संरक्षक, प्रसार एवं जन सम्पर्क, उत्तर प्रदेश, लखनऊ**

सायं प्रातश्च घर्मर्तौ शीतकाले दिनान्तरे ।
वर्षासु च भुवः शोषे सेक्तव्या रोपिता द्रुमाः ॥

इत्यादि वृक्षाणां शुश्रूषाणां शस्यक्रियाणां च वर्णनं वराहमिहिर—लिखिते वृक्षायुर्वेदग्रन्थे विद्यते । एतादृशं गीतबद्धविज्ञानं कृषिकाराणां कृते कृषिविज्ञानच्छात्राणां कृते वा उपयुक्तं भवतु ।

खगोलशास्त्रविज्ञानेऽपि आर्यभट्ट (द्वयम्),—भास्कराचार्य (द्वयम्)—वाराहमिहिर,—गणेशदैवज्ञ-प्रभृतीनां संस्कृतपद्यरचनाः सुप्रसिद्धाः सन्ति । उदाहरणाय—

(१) **गुरुत्वाकर्षणविषये** (Gravity) द्वितीय—भास्कराचार्यस्य ।

आकृष्टिशक्तिश्च मही तया यत् खस्थं गुरुः स्वाभिमुखं स्वशक्त्या ।
आकृष्यते तत्पततीव भाति समे समन्तात् क्व पतत्वियं खे ॥

(२) **गतिसिद्धान्तविषये** प्रथमस्य आर्यभट्टस्य—(Relative Velocity)—

अनुलोमगतिर्नौस्थः पश्यत्यचलं विलोमगः यद्वत् ।
अचलानि भानि तद्वत् समपश्चिमगामि लङ्कायाम् ॥

एवं च—
भक्ते विलोमविवरे गतियोगेनानुलोमविवरे द्वौ ।
गत्यन्तरेण लब्धौ द्वियोगकालौ······॥

$$\left[T_1=\frac{D}{V_1+V_2},\ T_2=\frac{D}{V_1-V_2}\right]$$

(३) **बीजगणितसिद्धान्तविषये भास्कराचार्याणाम्** (Algebra]—

योगोऽन्तरेणोनयुतोऽर्धितस्तौ राशी स्मृतं संक्रमणाख्यमेतद् ।
वर्गान्तरं राशिवियोगभक्तं योगस्ततः प्रोक्तवदेव राशी ॥

$$\left[a=\frac{S+D}{2},\ b=\frac{S-D}{2}\right]$$

$$\left[\frac{a^2-b^2}{a-b}=a+b\right]$$

(४) **भूमित्यां क्षेत्र-घनफलादिविषये भास्कराचार्याणाम्** (Area & volum)—

वृत्तक्षेत्रे परिधिगुणितव्यासपादः फलं तत् ।
क्षुण्णं वेदैरुपरि परितः कन्दुकस्यैव जालम् ॥
गोलस्यैवं तदपि च फलं पृष्ठजं व्यासनिघ्नम् ।
षड्भिर्भक्तं भवति नियतं गोलगर्भे घनाख्यम् ॥

अर्थात्:— (1) वृत्तक्षेत्रफलम्= $\frac{\text{परिधिः} \times \text{व्यासः}}{4}$

Area of circle= $\frac{C \times D}{4}$

(2) गोलपृष्ठफलम्=परिधिः × व्यासः Surace Area of Sphere= $C \times D$

(3) गोलधनफलम्= $\frac{\text{गोलपृष्ठफलम्} \times \text{व्यासः}}{6}$

Volume of Sphere= $\frac{CD^2}{6}$

एवं रसायनविज्ञाने (सिद्ध-नागार्जुंदीनाम् जीवविज्ञानशास्त्रे, सूक्ष्मजीवाणुशास्त्रेऽपि नैकाः संस्कृत-रचनाः ग्रन्थगताः खलु । आधुनिके विज्ञानयुगे एतादृशाणां रचनानां सम्यक् संशोधनस्य आवश्यकतां शास्त्रज्ञाः प्रतिपादयन्ति । आधुनिकतमे सङ्गणकविज्ञानेऽपि संस्कृतभाषा-विज्ञानपद्धत्याः न्यायाङ्गानां च उपयुक्ततां सङ्गणकवैज्ञानिकाः अनुमन्यन्ते । साम्प्रतं केन्द्रशासनद्वारा-नूतनानां वैज्ञानिकसाधनानां कृते सुयोग्य-संस्कृत-प्रतिशब्दनिर्माणकार्यमपि प्रचलति ।

नूनं विज्ञान-शास्त्र-सिद्धान्त-विषये अपूर्वा खलु संस्कृतरचना-परम्परा । आस्याः परम्परायाः पुनर्जागरणाय उपयुक्तः अयं 'विश्वभाषा' पत्रिकायाः प्रयासः ॥

श्रीमती कृष्णप्रिया
निर्देशिका

**(१) हरेणु फलिकामोदकः (मूंगफली के लड्डू)—**

सामग्री—२ चषकपरिमितं हरेणुफलिकापिष्टम् । २ चषकपरिमिता पिष्टशर्करा । ½ चमसपरिमितं पेषितम् एलाचूर्णम् । चुटिकाद्वयपरिमितं पेषितं कायफलम् । ४ पृथुलचमसपरिमितं घृतं रजतपत्रिकाश्च ।

विधिः—कटाहे घृतम् उत्ताप्य तत्र हरेणुफलिका-पिष्टं निक्षिप्य २-३ निमेषं यावत् मन्दतापेन भर्जयेत् । भर्जनानन्तरं चुल्लिकातः अपसार्य शीतलीकुर्यात् । ततः पिष्टशर्कराम् एलाचूर्णं कायफलं च मेलयित्वा मोदकं विवर्तयेत् । तदुपरि रजतपत्रिकाम् आसज्जयेत् ॥

**(२) गर्जरस्य कर्तिता (गाजर की चिप्स)**

सामग्री—½ किलो परिमितः गर्जरः, लवणं घृतं च ।

विधिः—गर्जरं प्रक्षाल्य उत्कृत्य च ५ सेन्टीमीटर क्षीणखण्डेषु कर्तयेत् । पृथुलपात्रे जलं क्वाथयेत् । ततः तत्र गर्जरखण्डान् यथास्वादं लवणं च निक्षिपेत् । कति-पयनिमेषं यावत् पाचयेत् यदा गर्जरः सम्यक्तया पक्वः स्यात् तदा चुल्लीतः अपसार्य जलं स्रावयेत् । तदनु प्लास्टिकस्य प्रच्छदनोपरि गर्जरखण्डान् प्रसार्य आतपे सम्यक्तया शोषयेत् । तदनन्तरं वायुरहितेषु बोटलेषु संरुह्य स्थापयेत् । यदा तु भक्षणेच्छा स्यात् तदा घृते प्रताप्य भक्षयेत् ॥

**[अस्मिन् स्तम्भे प्रकाशनार्थं विविध-भोज्य-सामाग्री-आभरण-परिधानादि अत्याधुनिकविषयेषु लेखाः सादरमा-मन्त्र्यन्ते । उत्तमेषु एकः द्वौ वा प्रकाशतामेष्यतः-सं०]**

# शुकनासोपदेशः

चौ० श्रीनारायणसिंहः

गताङ्कादनुवर्तते—[इतः पूर्वं शुकनासेन श्रीमत्सु नृपेषु सहजतया प्रादुर्भवतां विकाराणां वर्णनं कृतम्। इतः परं तेषां वर्णनं प्रचलदस्ति।]

अपि च ये राजानः मर्मसु ताडिता इव वदनविकारसहस्राणि विदधते ते अर्थगर्वतापेन दह्यमाना इव विविधां चेष्टां कुर्वन्ति। तथा च ते दृढाघातेन ताडिता इव हस्तपादादीन् देहावयवान् न दृढं धारयितुं शक्नुवन्ति। ते कर्कटिका इव कुटिलव्यवहारम् आचारन्ति। अपि च पापाचारेण विनष्टसत्कर्माचरणवृत्तयः ते सचिवादिना तथैव शासने प्रवर्तमानाः क्रियन्ते यथा पङ्गवः परेण गतिशीलाः क्रियन्ते।

तथा च, असत्यभाषणपरिणामेन समुत्पन्नवदनव्याधिवन्त इव ते कष्टातिशयेन ब्रुवन्ति।

यथा सपृच्छदवृक्षाः स्वनिकटवर्तिनः शिरसि पीडाम् उत्पादयन्ति तथैव धनगर्विता राजानः पार्श्ववर्तिनां शिरः पीडाम् उत्पादयन्ति। यथा मरणोन्मुखाः जनाः स्वजनं न परिचिन्वन्ति तथैव ऐश्वर्योन्मत्ताः राजानः स्वकीयहितसाधकं जनं न अभिजानन्ति। यथा रुग्णनयनाजनाः सूर्यादीन् वीक्षितुं न प्रभवन्ति तथैव राजानोऽपि प्रतापशालिनः पुरुषान् ईर्ष्यया नावलोकयन्ति। यथा कालसर्पेण दष्टाः जनाः गारुडादिमन्त्रैः न प्रतिबुध्यन्ते तथैव राजानोऽपि षाड्गुण्यादिविषयैः महामन्त्रैः बोधं न प्राप्नुवन्ति। यथा लाक्षानिर्मितभूषणानि अग्निं न सहन्ते तथैव राजानोऽपि प्रतापवन्तं जनम् ईर्ष्यया न सहन्ते। यथा मदोन्मत्तगजाः विशालपरिणामयुक्तेन आलानस्तम्भेन निश्चलीकृताः सन्तः हस्तिपकशिक्षां न गृह्णन्ति तथैव अत्यधिकाहंकारयुक्ताः राजानः महामात्यादिविहितां शिक्षां न गृह्णन्ति।

(क्रमशः)

# कबड्डीक्रीडा (KABADDI)

कु० मिताली देव:
एम० ए० (संस्कृतम्)—का० हि० वि० वि०, वाराणसी।

श्रीदाम-राम-मधुमङ्गल-बन्धुगोपैः
कृष्णेन तद्भगवता यदकारि लीला।
दृष्ट्वा पराजयविधिं समुदं हि विष्णोः
स्मेराननः सुरमुनिश्शिवमातनोतु॥

अथातः कबड्डीक्रीडां व्याख्यास्यामः—

नवत्यधिकैकोनविंशतितमः ख्रिष्टवर्षः (१९९०) कबड्डीक्रीडा-जगति सहर्षं स्मर्तव्यः, ऐषम एव एकादश-एशियाड क्रीडाप्रतिस्पर्धाऽऽयोजनात्, यत्र च रोमांचितस्पर्धायां कबड्डीखेलायां विश्वं विजित्य भारतं स्वर्णपदकं लब्धवत् इत्यहो गौरवातिशयः।

**उपक्रमः**

दलद्वयात्मिका एषा खेला। सा च अत्यन्तं लोकप्रिया, भारतोपजीव्याऽपि साम्प्रतं विश्वभाषेव विश्वप्रिया। अस्याः स्वास्थ्यवर्धनोपयोगिप्रयोजनं निरीक्ष्य एशियाडक्रीडाधिकारिभिः साग्रहम् एषा स्वीकृता। भारतस्य विकासशीलत्वात् इयं खेला अत्र निरतिशयम् उपयोगिनी। आर्थिकदृष्ट्या क्रीडा-प्राङ्गणे इयं सुसाध्या, अर्थसाध्यानि उपकरणानि अत्र नापेक्ष्यन्ते। क्रीडकाः क्रीडाप्राङ्गणसीमा च एतत् द्वयमेव अत्र पर्याप्तम्।

**खेलाप्रक्रिया**

परस्परं बलप्रयोगः, शरीरशक्तिवृद्धिः, कबड्डी-कबड्डी इति अव्यवहितशब्दोच्चारणेन, श्वासप्रश्वास-प्रक्रियानियन्त्रणात् प्राणायमः, सर्वदा सर्वथा प्रत्युत्पन्न-मतित्वम् प्रतिक्षणं विपक्षक्रीडकावरोधः, विपक्षक्षेत्रं प्रविश्य च येनकेनाप्युपायेन स्पर्शरेखामतिक्रम्य विपक्षदलान्तर्गतं कमपि स्पृष्ट्वा कबड्डी कबड्डी इति निरन्तरशब्दोच्चारणपूर्वकं मध्यरेखास्पर्शः, विपक्षीयैः कृतेऽवरोधे शब्दोच्चारणपरम्परासातत्येन विधाय सबलम् आत्मनो विमोचनम्। अथवा विमोचना-भावेऽपि कथञ्चित् कबड्डीकबड्डी इति अव्यवहित-शब्दोच्चारणपूर्वकं मध्यरेखास्पर्शः इत्यादिकम् अत्र सुष्ठु अपेक्ष्यम्।

**क्रीडाक्षेत्रस्वरूपम्**

उक्तपूर्वम् अस्यां खेलायां किमपि अर्थसाध्यम् उपकरणं नापेक्ष्यम्। इदमेव अस्याः निरतिशयं वैशिष्ट्यम्, यतो हि क्रीडा नाम मनोरञ्जनास्पदम् तथ्यम्, तस्याः अर्थव्यय-शिक्षाविशेष-स्थानविशेष-परिस्थितिविशेष-उपकरणविशेष - वस्तुविषेशसापेक्षत्वे मनोरंजनत्वहानिप्रसङ्गः। परं हा हन्त विश्वस्मिन् प्रथिताः प्रायः सर्वाः खेलाः विविधार्थसाध्यद्रव्योप-करणसापेक्षाः अन्यत्र इदं सर्वथा हर्षास्पदं यत् भारतमूला एषा कबड्डीक्रीडा सर्वथा उपर्युक्तसकला-डम्बरवर्जिता। सर्वजनसुभगा, सर्वोपयोगिनी समाज-वादस्वरूपा।

एवञ्च वस्तुतः इयं खेला प्रजातन्त्रात्मिका अस्ति। अस्तु, प्रकृतमनुसरामः—एतत् खेलार्थम् केवलम् एकम् अस्थपुटम् क्षेत्रम् अपेक्ष्यते, इदमेव अत्र प्रथमम् अन्तिमं च अपेक्ष्यम्। तच्च सर्वत्र सर्वैः मान्यैः धनिकैः सामान्यैः निर्धनैर्वा प्राप्तुं शक्यते।

किं बहुना धनिकैः निर्धनैः वा सम्मिल्य एतत् क्रीडितुं शक्यते। इदमपि अत्यन्तं सन्तोषास्पदम्। सौकर्यार्थम् क्रीडाक्षेत्रं सीमाङ्कितं विधाय, तत्र समानं भागद्वयं करणीयम्। उभयोः भागयोः मध्ये एका स्पर्शरेखाविधेया। स्पर्शरेखाम् अस्पृष्ट्वा प्रत्यावर्तिते सति कश्चिदपि क्रीडकः सफलो भवितुं न अर्हति। अथ च मध्यरेखास्पर्शात् पूर्वं श्वासत्यागोऽपि न विधेयः।

**अस्याः प्राचीनपृष्ठभूमिः**

प्राचीनकालेऽपि इयं खेला आसीत्—इति अनुमीयते। श्रीकृष्णस्य बलरामस्य च दलद्वयम् एतत् क्रीडार्थम् आसीत् इति प्रसिद्धिः। ब्रजे श्रीकृष्णबलराम श्रीराममधुमङ्गलप्रभृतीनां गोपबालानाम् आनन्दास्पद-संघर्षात्मिका क्रीडा तु प्रसिद्धैव। कदाप्रभृति इयं खेला प्रादुर्भूता इति न वयं जानीमः। सम्प्रति न केवलं भारतस्था जनाः अपितु विश्वस्मिन् अन्येऽपि क्रीडारसिकाः अत्र मोमुद्यन्ते।

**अत्र किञ्चित् निवेदनम्**

केचित् इत्थं जल्पन्ति यत् कबड्डीशब्दस्य भारतमूलत्वात् केषाञ्चन उच्चारणे काठिन्यं भवति। अतः इयं खेला कथम् अन्ताराष्ट्रीयरूपतां भजेत ? तत्रोच्यते—सर्वास्वपि खेलासु प्रयुक्ताः शब्दाः यत् किञ्चिद्-देशमूलका एव नैतावता तासाम् अन्ताराष्ट्रीयत्वहानि-प्रसङ्गः। किञ्च खेलायाः उपयोगित्वं निरीक्ष्य विचार्यम् मन्ये, कबड्डीखेलायां श्वासक्रियारोधन, प्राणायामकरण, बलवर्धन, मेदोहरणप्रभृति उपयोगित्वम्, अथ च अपरत्र द्रव्यसाध्यविविधोपकरणनिरपेक्षरूपं सारल्यम्, धनिकनिर्धननिर्विशेषमिलनरूपम् ऐक्यम् च निरीक्ष्य इयं खेला राज्ञीव सर्वातिशायिनी सर्वोपकारिणी इति ध्रुवं मन्तव्यम्।

**भारतवैजयन्ती**

पूर्वोक्तदृष्ट्या राज्ञी रूपा इयं खेला सम्प्रति भारतविजयवैजयन्ती रूपाऽपि अस्ति। अतएव चीनदेशे आयोजितायाम् एशियाडप्रतिस्पर्धायां सर्वानतिक्रम्य, अस्यां खेलायां विश्वं विजित्य, सर्वान् विपक्षिप्रतिस्पर्धिनो विवर्णान् विधाय सुवर्णं लब्धवान् अस्माकं देशः। सुवर्णलाभे च इयं खेला एव समर्था इत्यपि गौरवान्तरम् अस्याः राज्ञ्याः।

**कृष्णप्रिया इयं खेला**

कृष्णबलराममधुमङ्गलप्रभृतीनाम् इयं खेला अत्यन्तं प्रिया आसीत् इति प्रसिद्धिः। एवञ्च भगवतः श्रीकृष्णस्य प्रेमास्पदत्वात् इयं खेला कृष्णप्रिया। अतएव—

**यत्र योगेश्वरः कृष्णो यत्र पार्थो धनुर्धरः।**
**तत्र श्रीविजयोभूतिर्ध्रुवा नीतिर्मतिर्मम ॥** इति

श्रीमन्महर्षिकृष्णद्वैपायनवेदव्यासप्रणीतमहाभारतान्तर्गतश्रीमद्भगवद्गीताष्टादशाध्यायान्तस्थ संजयप्रोक्तश्लोकानुसारम् इमां खेलाम् आश्रित्यैव एशियाड-प्रतिस्पर्धायां भारतेन विजयः, श्रीः, भूतिः (उन्नतिः) प्राप्ता इति मतिर्मम।

**अस्याः स्वरूपम्**

कबड्डीक्रीडा एका शब्दायमान खेला। अस्यां खेलायां शब्दस्य अनिवार्यत्वम् निश्चप्रचम्। जय-पराजयस्य सम्पूर्णम् उत्तरदायित्वं शब्दोच्चारणाधीनम्। आक्रमकक्रीडकः कबड्डी कबड्डी... ...इति उच्चारयन् विपक्षिणः स्पृशति। अयं कबड्डीखेलायाः शब्दः (=बोल) कथ्यते। विशिष्टशब्दावलिसंयुक्तच्छलवाक्यं हिन्द्यां 'बोल' इति आंग्लभाषायां 'कैन्ट' इति निगद्यते। सम्प्रति अन्ताराष्ट्रीयनियमानुसारं कबड्डिशब्दस्य प्रयोगः 'बोल' इति रूपेण भवति। इतः प्राक् विभिन्न-प्रकारशब्दानां प्रयोगः भवति स्म। प्रतिक्षणं नव-शब्दोच्चारणेन रंगमञ्चे हर्षध्वनिरभवत्। दर्शकाः आनन्दमग्नाः भवन्ति स्म। परं तु अधुना अन्ताराष्ट्रीयनियमानुसारम् उच्चारेण केवलं कबड्डीशब्दस्य प्रयोगः विधीयते। विभिन्नशब्दानाम् उच्चारणं त्यज्यते।

**कानिचन प्रसिद्धच्छलवाक्यानि (=बोल)**

(१) छल कबड्डी अकड़ा, बुलबुल को पकड़ा, बुलबुल को मार दिया, रेशम का कपड़ा-कपड़ा....... इति काश्याम् प्रसिद्धम्।

(२) राम लक्ष्मण जानकी जय बोलो हनुमान की····इति झाँसीप्रान्ते प्रसिद्धम् ।
(३) हा डू डू डू इति बंगालप्रदेशे प्रसिद्धम् ।
(४) चेडू गुडू गुडू इति मद्रास प्रदेशे प्रसिद्धम् ।

**केचन पारिभाषिक शब्दाः**

| | | |
|---|---|---|
| Raider | = | धावकः |
| Boundary line | = | सीमारेखा |
| Middle line | = | मध्यरेखा |
| Touch line | = | स्पर्शरेखा |
| Cant | = | छलवाक्यम् (=बोल) |
| Toss | = | उत्क्षेपनिर्णयः |
| Oponent | = | प्रतिपक्षी |
| Out | = | खेलायाः बहिर्गतः |

**क्रीडाक्षेत्रपरिचयः**

कबड्डीक्रीडायाः क्षेत्रस्य दैर्घ्यं = १३ गजपरिमितम् प्रस्थं=१० गजपरिमितम् । तत्र कतरस्मै दलाय कतरो भागः दीयेत ? इति निर्णयः टॉसरीत्या भवति । तत्र प्रतिदलं द्वादशक्रीडकानां यूथं भवति । सम्मिल्य च चतुर्विंशतिक्रीडकाः भवन्ति यत् च सांख्यशास्त्रोक्तं चतुर्विंशतितत्त्वं स्मारयति किं वा श्रीमद्भागवतोक्त-चतुर्विंशतिम् अवतारम् अनुहरन्ति । इदमपि अस्याः खेलायाः कृष्णप्रियत्वे हेतुः एतदतिरिक्तम् अत्र एकः द्वौ वा निर्णायकाः भवन्ति ।

**जयपराजयनिर्णयः**

खेलायाः विधिस्तु पूर्वमुक्त एव, तत्र यस्य दलस्य अङ्काधिक्यं भवति तद् जयि भवति । दलान्तरं च तेन जीयते । अंकनिर्णयश्च मध्यस्थेन विधीयते । विपक्षिदलं प्रविश्य एकम्, द्वौ, बहून् वा स्पृष्ट्वा, श्वासम् अत्यक्त्वा यदि स्वदलं प्रविशति, तदा यावान्, यावन्तौ, यावन्तः वा स्पृश्यन्ते तथैव अंकलाभो भवति । तद्दलीयैः अवरोधे सति यदि मध्यरेखा स्पृश्यते तदानीम् अवरुद्ध एव जयी भवति । अन्यथा अवरोधकः । एतत् सर्वं मध्य-स्थेन निर्णीयते ।

**क्रीडासमयः**

अस्याः क्रीडायाः अवधिः चत्वारिंशत् क्षणाः (क्षणाः=Minutes) । तत्र विंशतिक्षणानान्तरं मध्यावकाशः तदानीं दलयोः क्षेत्रपरिवर्तनमपि । चतुर्विंशतिक्रीडकाः अत्र इति पूर्वोक्तम् । चतुर्विंशतिक्षणात्मकश्च दण्डः कालः, दण्ड एव घंटी शब्देनोच्यते, आधुनिकरीत्या च चतुर्विंशति घण्टात्मकम् अहोरात्रम्, एकस्मिन् वर्षे च चतुर्विंशति पक्षाः भवन्ति । एतावता कालदृष्ट्या गम्भीरगवेषणास्पदम् एषा क्रीडा ।

**उपसंहारः**

विश्वसंस्कृतप्रतिष्ठानस्य विश्वाध्यक्षाः श्रीमन्तः महामहिमकाशीनरेशमहोदयाः तत्तत्खेलासु कबड्डिप्रति-योगितामपि समहत्वं स्थापयन्ति ।

कबड्डीखेलायां श्वासप्रश्वासक्रियायाः आरोहाव-रोहद्वारा सन्ध्यावन्दनवत् वायुधारणक्षमता वर्धते । इदं Vital Capasity इति कथ्यते । चिकित्सा-शास्त्रानुसारम् अनेन प्राणक्षमतावृद्धिर्भवति । येन च क्रीडकः सम्पूर्णस्वास्थ्यं लभते । क्रीडकस्य हृदये उदारप्रवृत्तयः विकसन्ति । मानसिककुण्ठायाः निवारणञ्च । अतएव कबड्डिखेलायाः शब्दः (=बोल) अनुपमः ।

'शरीरमाद्यं खलुधर्मसाधनम्' ( कु० सं० ) इति रीत्या शारीरिकबलं वर्धते ।

काशीराजाः, युवराजस्य श्रीमतोऽनन्तनारायण-सिंहस्य जन्मदिवसोपलक्ष्ये कबड्डीखेलागोष्ठीं चालयन्ति प्रतिवर्षम् । मन्ये अनन्तोत्पन्नखेला कुमारस्य जन्मदिवसे कृष्णाष्टमीवत् सर्वत्र प्रसिद्धा स्यात् ।

पुस्तकसमीक्षा

# आत्मविद्या आख्यायिका

डा० रूपनारायण पाण्डेयः
संस्कृतप्रवक्ता, प्र० ना० रा० इ० का० रामनगर, वाराणसी, उ० प्र०, २२१००८

वैदिकी संस्कृतिः भारते अद्य अपि विराजते। आद्यशङ्कराचार्येण वैदिकधर्मस्य संस्कृतेः च पुनः प्रतिष्ठा कृता। तस्य एव परम्परायां विराजमानः विलसति १००८ श्रीमद्राघवेन्द्रभारती महास्वामी। तेन प्रणीता कृतिः इयम् आत्मविद्या आख्यायिका।

अस्यां कृतौ—श्रीगुरुदेवतास्तुतिः, परब्रह्मवर्णनम्, श्रमठे आराध्यदेवतास्तुतिः, श्रीशङ्करभगवत्पादादीनां वन्दनम्, श्रीरामचन्द्रभारतीयतिभिः शिष्यस्वीकारः, पूर्वाश्रमवृत्तान्तः, वेदाध्ययनम्, श्रीकाशीजिगमिषा, ज्येष्ठगुरूणां काशीयात्रा, श्रीकाशीक्षेत्रगमनम्, तत्र विद्याभ्यासारम्भः, श्रीगणपतिशास्त्रि-श्रीकृष्णशास्त्रि-रामचन्द्रशास्त्रिप्रभृतीनां विचारः, न्यायशास्त्रकाव्य-साहित्य-तर्कादिशास्त्राणाम् अध्ययनम्, श्रीमद्राम-चन्द्रभारतीसमाधिवार्तागमनम्, केक्कारुश्रीमठं प्रति आगमनम्, विद्याभ्यासार्थं पुनः श्रीकाशीप्रयाणम्, श्रीहरीरामशुक्लश्रीजयरामशुक्लाभ्यां न्यायशास्त्र-निबन्धानाम् अध्ययनम्, श्रीकाशीतः मठं प्रत्यागमनम्, श्रीपण्डितराजराजेश्वरशास्त्रिणां विचारः, श्रीशाङ्कर-भाष्यभूषितप्रस्थानत्रयाध्ययनं च—इत्यादयः विषयाः द्विपञ्चाशदधिक द्विशते श्लोकमये काव्ये सरलसंस्कृतेन वर्णिताः। पूर्वाश्रमवृत्तान्ते स्वामिवर्येण स्वपितरौ—गणेशः मूकाम्बिका* च गदितौ, किन्तु जन्मतिथ्यादि-विवरणम् अदत्वा ऐतिहासिकी परम्परा उपेक्षिता।

श्रीमता राघवेन्द्रभारतीमहास्वामिना ग्रन्थे अस्मिन् स्वकीयायाः विद्याधिगमयात्रायाः वर्णनं रमणीयया भाषया विधाय निखिलाः स्वगुरुचरणाः श्रद्धया संस्मृताः। इत्थम् अनया ग्रन्थरचनया काशीस्थ-संस्कृतपण्डितप्रकाण्डानां कमनीया कीर्तिः प्रकटी-कृता अस्ति आचार्यचरणैः। ग्रन्थकर्तुः वैदुष्यं दर्शनीयम् अस्ति वक्ष्यमाणेषु पद्येषु—

"स्वानुभूतिप्रमाणाय चिदानन्दरसात्मने।
अस्वप्नाय प्रशान्ताय नमोऽनिद्राय ते मुहुः॥
सीतापतिस्तु भगवान् महितो दयालुः :
सौमित्रिसेवितपदो मुनिवृन्दसेव्यः॥
स्वीयान्वये स्वमहसा परिवर्धितश्रीः।
रामोऽपि शं वितनुतादनिशं सुकीर्तिः॥
शुभावहमिदं कृतं श्रीगुरोश्च महीयसः।
ततोऽस्य पठनाद् भक्त्या श्रवणादपि शं भवेत्"॥
(आ० आ० ७, २२, २५२)

इयं कृतिः न केवलं स्वामिवर्यस्य शिष्यैः, अपितु काशीगौरवप्रणयिभिः संस्कृतानुरागिभिः गुरुतत्त्व-जिज्ञासुभिः च अपि संग्राह्या पठनीया च वर्तते। जयतु संस्कृतम्, संस्कृतिः च।

---

* आत्मविद्या आख्यायिका, ग्रन्थकर्तारः— श्रीमद्राघवेन्द्रभारतीमहास्वामिनः। प्रथमावृत्तिः १९८८। प्रकाशिका-आत्मविद्याख्यायिकाग्रन्थप्रकाशनसमितिः, श्रीमद्रामचन्द्रापुरमठम्, तीर्थराजपुरम्, ५७७४३२ शिवमोग्गा, कर्णाटक-राज्यम्। पृ० सं०—३२१ मूल्यम्—५/-

* "गणेशाख्यास्तातपादाः त्यागशीला जनप्रियाः।
मन्त्रज्ञाः श्रीगणेशस्य देव्याश्च समुपासकाः॥
मात्रा नः सह धर्मिण्या साध्व्या मूकाम्बिकाख्यया।
गृहभारं चावहन्त्या तया तोषं प्रपेदिरे"॥ (आ० आ० ६९, ७०)

हमारी कमजोरी का कारण है, गरीबी, लाचारी, अशिक्षा। हम ऐसे 70-80 प्रतिशत लोगों के लिये लड़ रहे हैं, जो साधनहीन हैं। दूसरी ओर सांप्रदायिक शक्तियों को बढ़ाने वाले तत्व साधन सम्पन्न हैं।

**—मुलायम सिंह यादव**



– मुलायम सिंह यादव

# निर्माण करो भारत का...

हमारी असली लड़ाई नये समाज के निर्माण की है, जहाँ कोई भूखा नहीं रहेगा, गरीब नहीं रहेगा। हमारी सारी ताकत गाँवों की खुशहाली और शहरों की गरीब बस्तियों में बसे मजदूरों, निर्धनों को भरपेट भोजन उपलब्ध करवाने की योजनाओं में लग रही है। हम एक ऐसे देश-प्रदेश के निर्माण की एक-एक ईंट रख रहे हैं, जहाँ खाने को रोटी, पहनने को कपड़े और रहने को मकान होगा।

यह बड़ा काम तभी पूरा हो सकता है जब आप सब इसमें हाथ बटायें। प्रत्येक वर्ग, सम्प्रदाय और जाति के बीच में भाई-चारा हो, सहकार हो।

**सद्भाव की विरासत हमारी विरासत है।**



# प्रतिष्ठानवार्ता:

**बिहारप्रदेशवार्ता:**—विश्वसंस्कृतप्रतिष्ठानस्य बिहारशाखाया: पाटलीपुत्रनगरसमित्या प्रति रविवासरं सञ्चाल्यमान: गीतापाठसमारोह: अद्य १-८-९० दिनांके पूर्ति प्रापत्। अस्य समापनसमारोह: पाटलीपुत्रे अशोक-नगरे गीतापाठकेन्द्रे कॉस्मिक-कोचिंग-सेन्टर इत्यत्र संस्कृतमये वातावरणे सम्पन्न:।

अवसरेऽस्मिन् प्रसिद्ध: आर्यसमाजी एवं प्रतिष्ठानस्य पाटलीपुत्रनगरसमित्या अध्यक्ष: श्रीनिर्मल-वंशलमहोदय: अध्यक्षतां कृतवान्। मुख्यातिथिश्च महावीरमन्दिरद्वारा सञ्चालितस्य आर्षविद्यापीठस्य प्रचार्य: श्रीरामसेवकमालवीयमहोदय: आसीत्।

अस्मिन् समारोहे सर्वप्रथमं प्रतिष्ठानस्य संस्कृतप्रचारकै: सम्पूर्णगीताया: लयबद्ध: पाठ: कृत:। तत: सर्वश्री-मिथिलेश: अनिल चौबे, शशिकला, विनीता, वन्दना, अनिलसिंह:, मुकेशओझा, शैलेंद्र:, पवन: इत्यादि संस्कृतप्रेमिभि: गीताया: महत्त्वविषये स्वीया विचारा: उपस्थापिता:।

समारोहस्यान्ते प्रचारकाणां समूहिकं भोजनं सञ्जातम्। अस्य समारोहस्य विविधेषु वृत्तपत्रेषु प्रकटनम् अभवत्।

**दिल्लीशाखावार्ता:—**

**संस्कृतविचारगोष्ठी**

विश्व सं० प्रति० दिल्ली पक्षत: आर्यसमाजभवने प्रसिद्धसम्पादकस्य श्रीपं०क्षितीशवेदालंकारस्य आध्यक्षे एका संस्कृतविचारगोष्ठी समभवत्। तस्यां निम्नलिखितै: महानुभावै: संस्कृतविषये स्वविचारा: प्रकटिता:। तै: त्रिभाषासूत्रे संस्कृतस्य अनिवार्यताऽपि प्रतिपादिता।

१. प्रो० रत्न सिंह:—अध्यक्ष:—नैतिकशिक्षासंस्थानम्।
२. श्री विजयपाल: शास्त्री—आचार्य:, नैतिकशिक्षासंस्थानम्।
३. डा० तीर्थराज:शास्त्री, प्राध्यापक:—सनातनधर्ममहाविद्यालय:।
४. श्री अशोककौशिक:—सहसम्पादक:, आर्यजगत् नई दिल्ली।
५. डा० चन्द्रशेखर: शर्मा—शिक्षक:, दिल्ली शिक्षाप्रशासनम्।
६. डा० सुरेन्द्र भारद्वाज:—संचालक:, श्रीराम-आरोग्यसंस्थानम्।

गोष्ठ्या सञ्चालनं महासचिवेन आचार्य रामदयालुना कृतम्।

**संस्कृतदिवससमारोह:**

६.८.९० दिनांके सर्वकारपक्षत: तथैव अन्य संस्कृतसंस्थाभि: समायोजिते संस्कृतदिवससमारोहे विश्वसंस्कृतप्रतिष्ठानस्य दिल्लीसदस्या: अपि महदुल्लासेन सभाजनं कृतवन्त:। तस्मिन्नवसरे लोकसभाध्यक्ष: श्रीरविराय:, शिक्षाराज्यमन्त्री श्री चिमनभाई मेहता, डा० मण्डन मिश्र:, डा० रामकरण शर्मा, श्रीकृष्ण सेमवाल आदि महानुभावै: शासनस्य संस्कृतोपेक्षाम् अभिलक्ष्य संस्कृतज्ञानां संस्कृतहिताय संघटनार्थम् आह्वानं कृतम्। राज्यशिक्षामन्त्रि महोदयेन संस्कृतस्य सुरक्षायै आश्वासनं प्रदत्तम्। शिक्षापरामर्शदाता श्री रामकृष्ण-शर्मणा समारोहस्य संचालनं कृतम्।

**संसदीय संस्कृतपरिषद् विषये सभा**

२९.८.९० दिनांके श्री राजाराममहोदयस्य अध्यक्षतायां वि० सं० प्रतिष्ठानस्य तत्त्वावधाने संसदीय संस्कृतपरिषदः पुनर्गठनविषये श्री सत्यनारायण जतिया संसद्सदस्य महोदयस्य आवासे एका महत्त्वपूर्णा गोष्ठी अभवत् । तद्विषये एतैः महानुभावैः अत्युपयोगिनः परामर्शाः प्रदत्ताः—

(१) श्री शंकरनारायण पाणिग्रही (२) डा० सन्तोषकुमारः (३) डा० सुरेन्द्र भारद्वाजः (४) डा० चन्द्रशेखरः शर्मा (५) श्री सत्यनारायण जतिया एवं अन्ये संसद्सदस्याः ।

सभायाः संचालनम् आचार्य रामदयालुमहोदयेन विहितम् ।

**केरलप्रदेशवार्ताः—**

**दशमवार्षिकोत्सवः**

विश्वसंस्कृतप्रतिष्ठानस्य केरलकेन्द्रस्य दशमवार्षिकोत्सवः १९९० एप्रिल्मासस्य द्वाविंशे दिने प्रातः आलुवानगरे अद्वैताश्रमे पण्डितरत्नेन श्री० शङ्करशर्ममहोदयेन भद्रदीपं प्रज्ज्वाल्य समुद्घाटितः ।



विश्वसंस्कृतप्रतिष्ठानकेरलकेन्द्रस्य दशमवार्षिकोत्सवे श्री ओणक्कूर शंकरगणमहोदयं सहृदयतिलकम् इत्युपाधिना पुरस्करोति न्यायाधीशा कुमारी पी० जानकी अम्मा । मदन-मोहनः, प्रो०एन्०डी० कृष्णनुण्णि, डा०पी०आर्० शास्त्री, बि० कृष्ण-शर्मा च दृश्यन्ते ।

**प्रतिनिधिसम्मेलनम्**

केरलस्य नानाभागेभ्यः आगतानां प्रतिनिधीनां सम्मेलने संस्कृतस्य प्रचारणविषये चर्चाः संजाताः । अध्यक्षः डा० गो० गङ्गाधरनायरः उक्तवान्—केन्द्रसर्वकारस्य शिक्षाविषयकं त्रिभाषासूत्रं विद्यालयेषु संस्कृत-पठनस्य क्षयाय कारणं भवति । दक्षिणभारते आङ्गलभाषा, हिन्दी, प्रादेशिकभाषा इति भाषात्रयमेव अनिवार्य-रूपेण पठनीयं तर्हि संस्कृतपठनस्य कः अवसरः छात्राणाम् । उत्तरभारतेऽपि हिन्दी, आङ्गलभाषा, ततः काचन दाक्षिणात्यभाषा अथवा उर्दूभाषा इति भाषात्रयमेव पाठनीयं तर्हि तत्रापि संस्कृतस्य विद्यालयेषु स्थानं न स्यात् । भारतस्य सर्वाः प्रादेशिकभाषाः संस्कृतभाषातः उत्पन्नाः अथवा संस्कृतभाषया समृद्धि प्रापिताः इत्यत्र न कस्यापि मतभेदः । अतः प्रादेशिकभाषापठनपद्धतौ संस्कृतस्यापि स्थानं परिकल्प्य सर्वेषु विद्यालयेषु केचित् कालांशाः संस्कृतपाठनाय उपयोक्तव्याः—इति ।

# भाषा-नीति पर हाय-तोबा क्यों ?

—राजीव दीक्षित

आजाद तो हम हो चुके, लेकिन आजादी के ४२ सालों के बाद जब प्रदेश के मौजूदा शासन ने स्वतन्त्रता प्राप्ति के तुरन्त बाद घोषित की गयी राजभाषा यानि हिन्दी को वास्तविक अर्थों में लागू करने की कोशिश की, तो इस नीति की व्यावहारिकता को लेकर शंकाओं का एक ऐसा जाल खड़ा करने की कोशिश की गयी, जिसके पीछे असली मुद्दों से ध्यान हटाने की साजिश थी। ४२ साल पहले ही जब एक नीति बना दी गयी थी, बस तो उसे अब लागू करते वक्त इस कदर हाय-तोबा मचाने का तुक क्या है? यह हिम्मत कोई नहीं कर पा रहा है कि संविधान में संशोधन कर हिन्दी को राष्ट्रभाषा के दर्जे से नीचे उतारकर खड़ा कर देने की सिफारिश कर दे। उत्तर प्रदेश सरकार के मुखिया की इस बात में सचमुच दम है कि आखिर हिन्दी को क्या लन्दन में इस्तेमाल किया जायेगा। ऊपर से देखने पर देहाती-से लगनेवाले इस सीधे-सादे तर्क का न उन अँग्रेजी अखबारों के पास जवाब है और न उन अंग्रेजी पत्रकारों के पास, जिन्हें अपने खोखले साम्राज्यों और उपनिवेशों की नींव हिलती दिखाई दे रही है।

बहुत दिनों से अगर कोई मसला टलता चला आ रहा हो (या टाला जा रहा हो?) तो उस पर कोई फैसला एक झटके से और पूरे संकल्प और दृढ़ता के साथ ले लेना होता है। हिन्दी लागू किये जाने का मसला भी ऐसा ही एक मसला है। तुर्की की राष्ट्रीय क्रान्ति के महानायक कमाल पाशा को भी अँग्रेजी हटाकर तुर्की भाषा लागू करने के मुद्दे पर विशेषज्ञों ने १० वर्ष लम्बी एक प्रक्रिया का झाँसा देने की कोशिश की थी। उसने थोड़ी देर के सोच-विचार के बाद कहा था कि १० साल इसी समय पूरे समझे जायें। अंग्रेजों के साथ अंग्रेजी को भी तुर्की से विदाई लेनी पड़ी। दरअसल प्रक्रिया उस समय बहानेबाजी का ही दूसरा रूप बन जाती है, जब उसके पीछे निहित स्वार्थ और मक्कारी छुपे हों। अंग्रेजी के बिना प्रगति की कल्पना न कर सकने वाला जो एक खास वर्ग हिन्दुस्तान में है, वह उन समृद्ध देशों की तरफ देखने से परहेज कर रहा है, जिन्होंने अंग्रेजी के बिना अपनी राष्ट्रभाषा के बल पर आज अंग्रेजों से कहीं बड़ी हैसियत बना रखी है। जर्मनी, जापान, रूस, चीन, कोरिया आदि में अंग्रेजी राज-काज और सार्वजनिक जीवन में प्रयोग की भाषा नहीं है और ये सभी ब्रिटेन से कहीं अधिक समृद्ध और शक्तिशाली राष्ट्र हैं। अपने प्रदेश में अपनी ही भाषा को मान्यता देना उसे 'थोपना' कैसे हो गया, यह समझ से एकदम परे है।

फिर, अंग्रेजी में ऐसी कौन-सी खास बात है कि उसके बिना काम चलेगा ही नहीं? अंग्रेजों के इस दुनिया को उपनिवेश में बदल डालने के कुचक्र से पहले भी दुनिया मौजूद थी और शायद बेहतर हालत में थी। शोषण के सबसे असरदार हथियार के तौर पर अंग्रेजों ने इसे इस्तेमाल किया और बुद्धिजीवियों का जामा पहने कुछ संवेदनहीन बदमाशों ने इसका सहारा लेकर अपनी कुटिल चालें खेलनी शुरू कर रखी हैं।

उत्तर प्रदेश सरकार के यह स्पष्ट कर देने के बाद भी, हिन्दी थोपने की कोशिश अंग्रेजी थोपने की कोशिश से किसी मायने में कम पाशविक नहीं है, आखिर बात कुछ लोगों की समझ में क्यों नहीं आ रही है? इसे साजिश और धूर्तता नहीं, तो और क्या कहा जायेगा? जिस भाषा में मतदाता से वोट माँगा गया है, उसके इस्तेमाल में शर्म की क्या बात आ गयी? अंग्रेजी से मुहब्बत के इस जज्बे के पीछे प्रदेश और देश के अधिसंख्य लोगों को एक खास तरह से गुलाम बनाये रखकर उनके शोषण का षड्यन्त्र नहीं तो आखिर और क्या है?

सम्पर्क भाषा की जरूरत के मुद्दे पर काफी गम्भीर से लगने वाले सवाल उठाये जा रहे हैं, जो एकदम बोगस और बेदम हैं। सदियों से कुंभ के अवसर पर पूरे भारतवर्ष के लोग इकट्ठे होते रहे हैं तो क्या उनकी सम्पर्क भाषा अंग्रेजी हुआ करती थी? बद्रीनाथ, केदारनाथ और गंगोत्री की यात्रा हर हिन्दू का उसी तरह सपना है, जिस तरह मुसलमान के लिए काबा जाना। इतनी सदियों से आखिर इस मुल्क के लोग क्या उत्तर से दक्षिण या दक्षिण से उत्तर गये ही नहीं और अगर दक्षिण के लोग बद्री-केदार नाथ जाते रहे, तो शायद पहले अंग्रेजी सीख लेते होंगे। वर्ना तो उन्हें नीले आसमान से अपनी बात कहनी पड़ती होगी। हो सकता है कि भारतीयों में ईश्वर को आसमान के पीछे बैठा हुआ मानने की जो अवधारणा रही है, उसके पीछे सम्पर्क भाषा का अभाव ही मुख्य कारण रहा हो।

प्रतिनिधयः केरलसर्वकारस्य संस्कृतविरोधिमनोभावे चिन्तां प्रकटितवन्तः। केरलराज्ये संस्कृत-विश्वविद्यालयस्य स्थापने विलम्बः क्रियते।

**प्रबन्धसङ्गमः**

डॉ० के० चन्द्रशेखरन्नायरमहोदयस्य अध्यक्षत्वे सम्पन्ने प्रबन्धसङ्गमे विचक्षणाः नानाविषयसम्बद्धान् प्रबन्धान् अवतारितवन्तः। डॉ० चन्द्रशेखरन्नायरः वाल्मीकेः औचित्यभावनां व्यक्तीकृतवान्। श्रीमती प्रो० के० उमादेवी "औपनिषदं मनोविज्ञानम्" इति स्वकीये प्रबन्धे उपनिषत्सु गोचरान् आधुनिकमनोविज्ञान-सम्मतान् विचारान् स्पष्टीकृतवती। "औचित्यविचारः" इति प्रबन्धेन श्री० राजन् एण्णाबिमनामहोदयः साहित्यशास्त्रसम्बद्धं काव्यादिविषयकम् औचित्यविचारं श्रोतृमनोरञ्जकतया वर्णितवान्। कम्पूत्रं संस्कृतं च इति प्रबन्धे श्री० एम्० एस्० अलिकुञ्ञुमहोदयः कम्पूटर्यन्त्रे संस्कृतस्य उपयोगितां विशदीकृतवान् श्री० सी० जी० विजयकुमारः केरलेषु यानि संस्कृतकेन्द्राणि पुरा आसन्। यानि च इदानीं सन्ति, तानि सर्वाणि अधिकृत्य प्रबन्धम् अवतारितवान्।

**वाक्यार्थसभा**

अपराह्णे प्रचलिते विद्वत्सदसि पण्डितरत्नं श्री० जी० विश्वनाथशर्मा अध्यक्षः आसीत्। श्री० कृष्णकुमारः, श्री० एम्० राधाकृष्णबानर्जी च वाक्यार्थविचारं कृतवन्तौ।

**कविसम्मेलनम्**

श्री० वी० जी० रामन्-महोदयस्य अध्यक्षत्वे प्रचलिते कविसम्मेलने प्रो० एन्० डी० कृष्णनुण्णि-महोदयः, श्री० ओणक्कूर् शङ्करगणकमहोदयः, श्री० अण्णल्लूर् चन्द्रशेखरवारियर् महोदयः, श्री० एन्० भास्करपणिक्करः, श्री० वी० कृष्णशर्मा, श्री० ए० ए० मदनमोहनश्च स्वकीयाः संस्कृतकविताः पठितवन्तः।

**महासम्मेलने पण्डितानां पुरस्कारः**

केरलस्य उच्चन्यायालयस्य सेवानिवृत्ता न्यायाधिपा माननीया कुमारी पी० जानकी अम्मा महासम्मेलनम् उद्घाटितवती। संस्कृतविषये सर्वकारः उदासीन इत्यतः संस्कृतप्रचाराय विश्वसंस्कृतप्रतिष्ठान-सदृशानां जनकीयानां प्रस्थानानाम् आवश्यकता अस्तीति सा प्रोक्तवती। तायलाण्डस्थचियाङ्मयीविश्व-विद्यालयस्य भूतपूर्वः प्रोफस्सर् डा० आर्० करुणाकरः महासम्मेलनस्य अध्यक्षः आसीत्।

महासम्मेलने संस्कृतकविः बहुविषयपण्डितः प्रो० एन्० डी० कृष्णनुण्णिमहोदयः, प्रतिष्ठानकेरल-केन्द्रस्य भूतपूर्वः महासचिवः दिवंगतः के० एन्० मेनोनः च पण्डितरत्नम् इत्युपाधिना पुरस्कृतौ। ज्योतिष-पण्डितः श्रीमान् ओणक्कूर् शङ्करगणकमहोदयः सहृदयतिलकम् इत्युपाधिना पुरस्कृतः। सभाजितानां पण्डितवरेण्यानां प्रस्तवनं डा० पी० आर्० शास्त्री, श्री० वि० कृष्णशर्मा, प्रोफ० एम् ए० सुशीला इत्येतैः कृतम्। स्वामी श्री० अस्पर्शानन्दः आशीर्वादभाषणं कृतवान्।

**काव्यालङ्कारशिविरम्**

विश्वसंस्कृतप्रतिष्ठानस्य केरलकेन्द्रेण तृप्पूणित्तुरानगरे १९९० सेप्तम्बरमासस्य चतुर्थदिनाद् सप्तमदिनपर्यन्तं काव्यालङ्कारशिविरं समायोजितम्। तत्र प्रस्तुताः विषयाः वदवतारकाः पण्डिताश्च—

| | |
|---|---|
| १—शब्दाव्यापारः | प्रो० आर्० वासुदेवन्पोट्टिः। |
| २—साहित्यम् उपासना च। | पण्डितरत्नं जी० विश्वनाथ शर्मा। |
| ३—रससिद्धान्तः | डा० के० टी० माधवः। |
| ४—वक्रोक्तिजीवितम्। | डा० एस्० राधा। |
| ५—काव्यलक्षणम्। | " |

| | |
|---|---|
| ६—कालिदासस्य काव्यलक्षणम् । | डा० के० टी० माधवः । |
| ७—अलङ्कारः । | प्रो० एम्० कृष्णः । |
| ८—उपमा रूपकं च । | श्री० राजन् एण्णषिः । |
| ९—ध्वनिसिद्धान्तः । | डा० पी० सी० मुरलीमाधवः । |
| १०—उपमा कालिदासस्य । | प्रोफ० के० पी० नारायणविषारटी । |
| ११—औचित्यविचारः । | डा० पी० इन्दिरा । |
| १२—शब्दालङ्काराः । | प्रोफ० के० भारती । |
| १३—नाट्यमुद्राः । | पण्डितरत्नं जी विश्वनाथ शर्मा । |
| १४—वाल्मीकेः उपमा । | डा० गो० गङ्गाधरनायरः । |

शिविरस्य निर्देशकः डा० गो० गङ्गाधरनायरः आसीत् । समापनभाषणं राष्ट्रिय स्वयंसेवकसङ्घस्य बौद्धिकप्रमुखेन टी० आर्० सोमशेखरमहोदयेन कृतम् । शिविरमध्ये भारतीय विचारकेन्द्रस्य निर्देशकः श्री० पी० परमेश्वरः, गुरुवायुर्केन्द्रीयसंस्कृतविद्यापीठस्य प्रधानाचार्यः श्री चन्द्रशेखरपाण्डेयश्च शिबिरार्थिनः अभिसम्बोध्य भाषणं कृतवन्तौ ।

प्रतिदिनं रात्रौ नववादने शिविरे संस्कृतसम्भाषणवर्गं प्रचालितवान् श्री एम्० वी० नटेशः ।

---

# संस्कृतवार्ताः

**जनसत्तातः**—३ सितम्बर १९९० इति दिनाङ्कस्य जनसत्ता इति नामके दैनिकवृत्तपत्रे श्रीलालबहादुर शास्त्री केन्द्रीय संस्कृतविद्यापीठस्य कुलपतिना डा० मण्डनमिश्रमहोदयेन ज्योतिर्मयद्वारा कृता एका वार्ता प्रकाशिता । तत्र संस्कृतभाषायाः सम्प्रतिकं ह्रासं प्रति चिन्तां प्रकटयता कुलपतिना अभिहितं यत् यदि संस्कृतं प्रति व्यवह्रियमाणा उपेक्षात्मिका वृत्तिः शीघ्रं समूलमुन्मूलिता न भविष्यति तर्हि आगामि दशवर्षे एव संस्कृतभाषा लुप्तप्राया भविष्यति । प्रसङ्गवः डा० मिश्रमहोदयेन अभिहितं यत् संस्कृतपरिषदि संस्कृतविदुषां स्थाने संस्कृतानभिज्ञानां राज्याधिकारिणां प्राध्यान्यं शोचनीयमेव ॥

**जनसत्तातः**—३ सितम्बर १९९० दिनाङ्कस्य जनसत्तायाः अङ्के एव पण्डित युधिष्ठिरमीमांसक-नाम्ना वयोवृद्धेन संस्कृतविदुषा सह अवनीन्द्रवत्सेन कृता एका वर्ता दृष्टिपथम् आगता । तत्र मीमांसकमहोदयेन अभिहितं यत् पुरा मनुष्यस्य तपस्त्यागविद्यादिभिः महत्त्वं निर्धार्यते स्म किन्तु सम्प्रति धनसम्पत्तिरेव श्रेष्ठताया मापदण्डोऽस्ति । मनुष्ये स्वभावतः लोकेषणा विद्यते । अतः येन आधारेण मनुष्यस्य श्रेष्ठताया आकलनं भवति तं प्रति एव जनानां मनः-प्रवृत्तिः भवति । फलतः विभिन्नशास्त्राणां पारङ्गतविदुषां कुलानि स्वकीयां परम्परां परित्यज्य सम्मानप्राप्तिदृष्ट्या तस्मिन्नेव मार्गे चलितुं बधितानि सन्ति । किमधिकं गुरुकुलनामिकाः वर्तमानाः संस्था अपि सर्वथा आदर्शच्युता एव तिष्ठन्ति ।

**वैदेशिकम्**—वियना इत्यत्र आयोजितात् अष्टमविश्वसंस्कृतसम्मेलनात् परावर्तिताः सम्पूर्णानन्दसंस्कृत-विश्वविद्यालयस्य कुलपतयः डॉ० विद्यानिवासमिश्रमहोदयाः एकस्मिन् पत्रकारसम्मेलने प्रोक्तवन्तः यत्—अन्ताराष्ट्रियस्तरे आधुनिकसंचारकलासु संस्कृतव्याकरणस्य उपयोगिता सिद्धा वर्तते । तैरग्रे उक्तं यत् उक्तसम्मेलने इदं सर्वैरङ्गीकृतं यत् संगणकयन्त्रस्य कृते संस्कृतभाषायाः अन्यभाषापेक्षया अधिकं वैशिष्ट्यं वर्तते ।

सम्मेलनेऽस्मिन् आयुर्वेदमधिकृत्यापि विचारः जातः इत्यपि श्रीमिश्रमहोदयेन सूचितम् ॥



रामनगरदुर्गः,
वाराणसी, शिवरात्रिः

अयि सुरभारतीस्नेहिनः !
विलसन्तुतरां नः प्रणतयः।

नाविदिता हीयमाना दशा गीर्वाणवाण्याः कस्यापि सहृदयस्य। ईदृशीयं दैन्यावस्था कस्य सुरभारतीपुत्रस्य मनसि क्लेशं न जनयति ? नैष प्रश्नः केवलं भाषायाः अपितु समग्रस्य वैदिकस्य, आध्यात्मिकस्य, वाङ्मयस्य भौतिकस्य विज्ञानस्य च रक्षायाः। संस्कृतस्य ह्रासः विश्वस्य दैवसम्पद्ह्रासः। वयं मन्यामहे यत् संस्कृतस्योत्थानं विश्वस्य सर्वाङ्गीणम् उत्थानमेवेति। किन्तु इदानीं विद्यालयेषु शालासु च कापि उत्साहदायिनी स्थितिर्न दृश्यते। सर्वत्र नैराश्यमेव लभामहे।

परन्तु अस्मिन् अन्धतमसे नवोदयसूचिता प्रकाशरेखाऽपि वर्तते। विगतकतिपयवर्षेभ्यः संस्कृतस्नेहपूरितान्तःकरणैः संस्कृतानुरागिभिः स्वकीयैरखण्डप्रयासैः "विश्वसंस्कृतप्रतिष्ठानस्य" माध्यमेन संस्कृतसंवर्धनाय कार्यं सञ्चाल्यते यत्फलस्वरूपेण सर्वत्र भूमण्डले संस्कृतहितसाधकानाम् ऐक्यं पश्यामः।

देवभाषाप्रसारस्य कार्यं यत् पुरतोऽस्ति नः।
न केवलं तदस्माकं कर्तव्यं धर्म एव वा ॥
यत्सत्यं तत्तु पूर्वेषामृषीणामृणशोधनम्।
महाफलं महत्पुण्यमिति मे निश्चितं मतम् ॥

तथापि इत्थं प्रतिभाति यत् कार्यमिदं नाल्पेन कालेन पूर्णतामेष्यति अपितु दीर्घकालिकीं योजनामपेक्षत इति। वयं संस्कृतवाणीं व्यावहारिकीं कर्तुं यत्नशीलाः। एतदर्थं प्रतिष्ठानम् कोटिमुद्रासितम् अक्षयनिधिं निर्मातुकामम्। अनेन कोषेण प्रतिष्ठानं पूर्णकालिककार्यकर्तॄणां सुदृढां सङ्घटनां रचयिष्यति तेभ्यः कार्यकर्तृभ्यश्च संस्कृतसेवार्थं मानधनं देयं भविष्यति, न तु वेतनम्।

पुनश्च अस्य धनस्य उपयोगः पौरोहित्यवर्गसञ्चालनार्थं सरलसंस्कृतशिक्षणवर्गसञ्चालनार्थं च करणीय आस्ते।

उपर्युक्तोद्देश्यं सफलं कर्तुं नेपाल-महाराजाधिराज-पञ्चश्री-श्रीवीरेन्द्रवीर-विक्रमशाहदेवैः लक्षमिताः मुद्राः प्रतिष्ठानाय प्रदत्ताः। एवमेव सर्वैः संस्कृतसेवकैः अस्य अक्षयकोषस्य संवर्धने सहयोगः कर्तव्यः।

एतत् कार्यं सफलयितुं भगवान् श्रीविश्वेश्वरः अस्माकं शक्तिं प्रयच्छतु इति तच्चरणारविन्दयोः प्रार्थये। इति।

विभूति नारायण सिंहः

विभूतिनारायणसिंहः शर्मदेवः
काशीनरेशः

---

धनप्रेषणस्थलम् :—
विश्वसंस्कृतप्रतिष्ठानम् द बनारस स्टेट बैंक लि० वाराणसी
दानं S. 80G. आयकर-विधानद्वारा करमुक्ति लभते।

Vol. 4 No. 3 18-10-90 VISHVABHASHA Registration No. R. N. I. 46191/87



Editor : Pandit Gulam Dastagir Abbas Ali Virajadar, Jengali Pir Dargah, Worli, Bombay-400 018, Publisher-Devadutt, Published at Vishva Sanskrit Pratishthanam, Fort Ramnagar, Varanasi-221 008, and printed at the Tara Printing Works, Varanasi 221010.




गणतन्त्र-दिवसाङ्कः

२६-१-१९९१



# विश्वभाषा
# VISHVABHASHA

अन्ताराष्ट्रिया त्रैमासिक-संस्कृत-पत्रिका

International Sanskrit Quarterly

# प्रकाशन सूची

## रत्नभारती ग्रन्थमाला

१. भाषावृत्तिः (पुरुषोत्तमदेवकृता)
Bhāṣāvṛtti (of Puruṣottamadeva)
संपादकः डा० श्रीनारायणमिश्रः १००.००

२. अद्वैतसिद्धिः (बालबोधिनी टीका सहिता) भाग १
Advaitasiddhi (with Bālabodhinī Commentary) Vol. I
संपादकः डा० सितांशुशेखर बागचिः १००.००

३. अद्वैतसिद्धिः (बालबोधिनी टीका सहिता) भाग २
Advaitasiddhi (with Bālabodhinī Commentary) Vol II
संपादकः डा० सितांशुशेखर बागचिः १००.००

४. श्लोकवार्तिकम् (न्यायरत्नाकरसहितम्)
Ślokavārttika with Nyāyaratnākara
संपादकः श्री द्वारिकादास शास्त्री १००.००

५. *काशिकावृत्तिः (पदमञ्जरी-न्यास-सहिता) भाग १
Kāśikāvṛtti (with Padamañjari and Nyāsa) Vol. I
संपादकः डा० श्रीनारायणमिश्रः ८५.००

६. काशिकावृत्तिः (पदमञ्जरी-न्यास-सहिता) भाग २
Kāśikāvṛtti (with Padamañjarī and Nyāsa) Vol. II
संपादकः डा० श्रीनारायणमिश्रः ८५.००

७. काशिकावृत्तिः (पदमञ्जरी-न्यास-सहिता) भाग ३
Kāśikāvṛtti (witn Padamañjarī and Nyāsa) Vol. III
संपादकः डा० श्रीनारायणमिश्रः ८५.००

८. काशिकावृत्तिः (पदमञ्जरी-न्यास-सहिता) भाग ४
Kāśikāvṛtti with Padamañjarī and Nyāsa) Vol. IV
संपादकः डा० श्रीनारायणमिश्रः ८५.००

* (सम्पूर्ण सेट (भाग १ से ६) का मुल्य ५००/- प्रति सेट)

९. काशिकावृत्तिः (पदमञ्जरी-न्यास-सहिता) भाग ५
Kāśikāvṛtti (with Padamañjarī and Nyāsa) Vol. V
संपादकः डा० श्रीनारायणमिश्रः ८५.००

१०. काशिकावृत्तिः (पदमञ्जरी-न्यास-सहिता) भाग ६
Kāśikāvṛtti (with Padamañjarī and Nyāsa) Vol. VI
संपादकः डा० श्रीनारायणमिश्रः ८५.००

११. अष्टाविंशत्युपनिषदः (गुटका)
Aṣṭāviṁśatyupaniṣadaḥ (28 Upaniṣada)
संपादकः डा० गंगासागर रायः १५.००

१२. दुर्घटवृत्तिः (शरणदेवकृत-विवृत्ति-परिशिष्ट-सहिता)
Durghaṭavṛtti of Śaraṇadeva (with Vivṛtti and appendices)
संपादकः डा० श्रीनारायण मिश्रः ५०.००

१३. तन्त्रयात्रा
Tantra-yātrā
संपादकः व्रजवल्लभ द्विवेदी ७५.००

१४. सांख्यसूत्र अनिरुद्धवृत्तिः
Sānkhyasūtra Aniruddhavṛtti
संपादकः डा० रामशंकर भटटाचार्यः १५.००

१५. शाङ्खायनब्राह्मणम् (हिन्दी अनुवाद-भूमिका परिशिष्ट-सहितम्)
Śāṅkhāyanabrāhmaṇa (with Hindi translation, Introduction and Appendices)
संपादकः डा० गंगासागर रायः १००.००

१६. धातुप्रदीपः
Dhātupradīpa
संपादकः डा० श्रीनारायण मिश्रः (प्रेस में)

17. Vedic Śākhās
Dr. Ganga Sagar Rai 100.00



# रत्ना पब्लिकेशन्स

बी० २१/४२ ए कमच्छा
वाराणसी-२२१ ०१०, फोन ५६९५८




## अस्मिन् अङ्के



**आवरणम्**—डॉ० श्री० भा० वर्णेकर-महोदयेभ्यः 'वाङ्मयचूडामणिः' इत्युपाधि समर्पयन्तः प्रतिष्ठानाध्यक्षाः


विश्वसंस्कृतप्रतिष्ठानम् तस्य मुखपत्रम्

# विश्वभाषा
VISHVABHASHA

अन्ताराष्ट्रिया त्रैमासिकी संस्कृतपत्रिका

चतुर्थवर्षस्य चतुर्थोऽङ्कः गणतन्त्रदिवसाङ्कः


## वेदवाणी

( महर्षि-श्रीअरविन्द-विरचित-अग्निमन्त्रमालातः )

यदङ्ग दाशुषे त्वमग्ने भद्रं करिष्यसि ।
तवेत् तत् सत्यमङ्गिरः ॥६॥

॥ पदविन्यासः ॥

१ यत् । २ अङ्ग । ३ दाशुषे । ४ त्वम् । ५ अग्ने । ६ भद्रम् । ७ करिष्यसि । ८ तव । ९ इत् । १० तत् । ११ सत्यम् । १२ अङ्गिरः ॥

॥ व्याख्या ॥

२ हे । ५ अग्ने । ४ त्वम् । ३ दत्तवते, आत्मदानकारिणे १ यत् । ६ कल्याणम् । ७ करिष्यसि, तत् । ८ तव । ९ एव । १० प्रसिद्धम् । ११ सत्यम् । १२ हे दिव्यचिज्ज्वाल ॥

## सदस्यता-विवरणम्

| | |
|---|---|
| आजीवनसदस्यता-शुल्कम् | १५०-०० |
| वार्षिकशुल्कम् | १५-०० |
| प्रत्यङ्कमूल्यम् | ५-०० |

### आवेदनम्

माननीयसम्पादकमहोदयाः !

अहम्.................................

विश्वभाषायाः आजीवनं/वार्षिकं सदस्यं भवितुम् इच्छामि। तदर्थम् ............रूप्यकाणि प्रेषयन्नस्मि। कृपया अधोलिखितसंकेतेन पत्रिका प्रेषणीया—

भवदीयः

नाम ...............................

सङ्केतः ...............................

.......................................

## विश्व-संस्कृत-प्रतिष्ठानम्

अध्यक्षः

**काशिराज श्रीविभूतिनारायणसिंहशर्मदेवः**

●

उपाध्यक्षाः

**पं० पियेर फिलियोजः** (फ्रांस)

**पं० अम्बिकाप्रसाद-अधिकारी**

(नेपालनरेशस्य प्रतिनिधिः)

**पं० कैलाशनाथकुरुक्कुलः**

(श्रीलंकासर्वकारस्य प्रतिनिधिः)

**पं० गुलामदस्तगीर अब्बा सअली विराजदारः** (भारतम्)

●

निर्देशिका

**महाराजकुमारी कृष्णप्रिया**

रामनगरदुर्गः, वाराणसी

●

कोषाध्यक्षः

**पं० बनवारी लाल शर्मा**

श्री बैजनाथ आयुर्वेदभवनम्, पटना

●

महामन्त्री

**श्री देवदत्तः**

श्री अरविन्द आश्रमः, पाण्डिचेरी

●

मन्त्रिणौ

**पं० वासुदेव द्विवेदी**

**पं० हरमुट शार्फः**

●

## विश्वसंस्कृतप्रतिष्ठानम्

विश्वसंस्कृतप्रतिष्ठानस्य निम्नलिखितानि महत्त्वपूर्णानि बालोपयोगीनि च प्रकाशनानि (संस्कृतअमरचित्रकथाः) सन्ति।

| पुस्तकनाम | मूल्यम् |
|---|---|
| १–गङ्गा | ३.५० |
| २–शङ्कराचार्याः | ५.०० |
| ३–विक्रमादित्यः | ६.०० |
| ४–विश्वात्मविभूतयः | ५.०० |

### आवेदनम्

मान्याः निर्देशिकामहाभागाः !

कृपया प्रतिष्ठानेन प्रकाशितस्य...................इति पुस्तकस्य....प्रतिं/प्रतीः अधोलिखितसङ्केतेन प्रेषयन्तु। तदर्थमहं.......रूप्यकाणि प्रेषयन्नस्मि—

भवदीयः

नाम.......................................

सङ्केतः....................................

.......................................

प्रधानसम्पादकः

**पं० गुलामदस्तगीर अब्बास अली विराजदारः**

सम्पादकौ

**चौ० श्रीनारायणसिंहः**

**पं० राजारामशुक्लः**

प्रबन्धसम्पादिका

**महाराजकुमारी कृष्णप्रिया**

परामर्शदातारौ

**डॉ० राजेन्द्रनारायण शर्मा**

**डॉ० रूपनारायण पाण्डेयः**






# संदेशः

इदम् ज्ञात्वाहम् प्रसन्नः अस्मि यत् विश्व-संस्कृत-प्रतिष्ठानेन विद्वज्जनानाम् डॉ० श्रीधर-भास्कर-वर्णेकरमहाभागानां सभाजनोत्सवः समायोजितः।

आयोजनस्य सफलतायै मम हार्दिक्यः शुभकामनाः।

आर० वेंकटरामनः
(राष्ट्रपतिः)

नव-दिल्ली;
६ आश्विन, १९१२ (शक)

# सम्पादकीयम्

अद्य गणतन्त्रदिवसः। एषः प्रतिवर्षं सर्वत्र समयोज्यते। अद्यतनीयः अयं दिवसः विंशतितमशतकस्य अन्तिमे दशके प्रारम्भकाले एव समाराज्यते इति विशेषता। गते दशके भारतदेशे विविधाः अनपेक्षिताः अपि घटनाः घटिताः। तासु काश्चित् अतीव दुःखदाः अपि।

गणतन्त्रसत्ताकशासनस्य प्रारम्भकाले प्रायः सार्धदशकद्वये भारतराष्ट्रस्य दक्षिणे भागे विघटनवादः समारब्धः प्ररूढः चापि अभवत्। अत्र भाषाभिमानादिप्रादेशिकविवादः मूलतः अन्तर्भूतः आसीत्। अधुना दक्षिणस्थः विघटनवादः विलुप्तः एव जातः इति दृश्यते। गतदशकात् प्रभृति भारतदेशस्य उत्तरभागे विघटनवादः समारब्धः अद्य च सः प्रबलः अपि जातः इति दृश्यते। अत्र धर्मजातिसदृशाधारः विघटनवादे दृश्यते। भारतदेशस्य संविधानम् अनुसृत्य धर्मनिरपेक्षता अत्र विराजते। तथापि विघटनवादिभिः धर्माधारः गृह्यते इति विशेषता।

आंग्लशासकैः अत्र दीर्घकालपर्यन्तं शासनं कृतम्। एतैः एव स्वसत्तायाः स्थिरीकरणार्थं विघटनवादस्य बीजारोपणं कृतम्। अनेन मार्गेण तैः अंशतः यशः अपि अधिगतम्। अफगानिस्तानं, ब्रह्मदेशः, पाकिस्तानम् इत्यादयः देशाः भारतदेशतः विभाजिताः कारिताः एतैः।

अद्य अत्र आंग्लाः न सन्ति तेषां च शासनमपि नास्ति। परन्तु एतैः विघटनवादस्य यद् बीजारोपणं कृतं तद् अद्यापि अवशिष्टम् एव वर्तते इति दृश्यते। अतः एव एतत् यदा तदा अङ्कुरितं भवति विघटनवादं च मण्डयति। अतः एव अस्माभिः एतादृशस्य बीजस्य समूलं निष्कासनं कथं कर्तव्यमित्येव अधुना चिन्तनीयम् अनिवार्यतया। विविधाः उपायाः अपि संयोजनीयाः। एते सर्वे उपायाः कृतिरूपेण आचरणे आनेयाः। अन्यथा अद्यतनीय-अवशिष्टस्य भारतदेशस्य अखण्डत्वं स्थायिरूपेण न स्थास्यते इति सावधानतया अवधारणीयम्।

सर्वप्रथमम् अस्माभिः आंग्लभाषायाः त्यागः करणीयः। अयं त्यागः सर्वैः न संमन्यते इति अस्मदीयानां ज्ञाने अस्ति। यतः 'सायन्स' इति 'विज्ञानम्' आंग्लभाषायाम् अस्ति। एतद् विज्ञानम् अद्य महदुपयुक्तं महदुपकारकं च। परन्तु एषा उपयुक्तता वा उपकारः वा यदा सर्वनाशकः भवति तदा सा उपयुक्तता वा उपकारः वा त्याज्यः एव भवति। अन्यथा सर्वनाशः एव सम्भविष्यति।

प्राचीने भारते 'सायन्स' इति 'विज्ञानम्' अपि सर्वोच्चम् आसीत्। एतदर्थं साक्षीभूतं 'प्राचीन-भारतीयं भौतिकविज्ञानम्' इति पुस्तकं प्रकाशतां गतं वर्तते। एतस्मिन् पुस्तके 'सायन्स' इति 'विज्ञानम्' इति विषयः एव अस्ति। तथापि धूर्तैः आंग्लैः विज्ञानस्य एते मूलाः ग्रन्थाः अप्रकाशिताः कथं भवन्ति इति व्यवस्था सम्यक्तया साधिता। एषा व्यवस्था एतादृशी साध्या जाता यत् विज्ञानविषयकाः ग्रन्थाः एव अत्र न सन्ति नासन् च इति दृढः भावः अपि जगत्तले प्ररूढः, प्रायः प्ररूढः एव स्थापितः। एषः भावः अद्यापि निष्कासितः न भवति इत्यपि एका विशेषता। यद्यपि अत्र आंग्ला न सन्ति तथापि अत्र आंग्लप्रवृत्तिः प्रबला जाता अस्ति इत्येव कथनीयं भवति। अतः आंग्लभाषात्यागेन एषा प्रवृत्तिः अपि निष्कासिता समूलतया भवति नात्र काचित् शङ्का इति अस्मदीयानां मतिः।

आंग्लशासनकालात् पूर्वम् अत्र मुगलशासनकालः। अरबी-पारसी-उर्दूभाषिकाः एते शासकाः। एतेषां शासनं समाप्तम्। परन्तु अरबी-पारसी-उर्दूभाषामाध्यमेन एतेषामेव प्रभावः एतेषां शासनान्ते अपि अवशिष्टः आसीत्। यदा एतेषां भाषायाः त्यागः अस्माभिः कृतः तदा एव एतेषां प्रभावः नष्टतां गतः। ततः तेषां प्रवृत्तिः अपि अत्र नावशिष्टा।

अतः एव अद्यतनीये प्रजातन्त्रसत्ताकदिने आंग्लभाषायाः त्यागः करणीयः एव इति निश्चयः अस्माभिः करणीयः इत्येव अलम्।

**गुलाम दस्तगीरः**

# मातृभूलहरी*

महाकविः डॉ० श्रीधरभास्करवर्णेकरः, प्रज्ञाभारती

नमोवाकं साकं प्रणति-ततिभिर्भावुकतया
प्रियं गायं गायं तव गुणचयं पुण्यनिलयम् ।
स्मरन् स्वान्ते शान्ते तनुमतनुमूर्जस्वल-रुचं
जगद्वन्द्यां वन्दे प्रथित-यशसं त्वां भरतभूः ॥१॥

किरीटः सद्रत्न-प्रभव इति गीतो नगपतिः
समुद्रोऽयं रत्नाकर इति मतो वल्गुवलयः ।
अजस्रं सम्पन्ना पुरुष-महिला-रत्ननिवहैः
अहो राजत्येषा भुवनतल-रत्नं भरतभूः ॥२॥

अवाच्या भूरेषा मलयज-रजःसौरभमयी
प्रतीच्यां माधुर्यं-प्रचुर-फलसम्भार-सुरसा ।
उदीच्यां काश्मीरप्रभव-कमनीयद्युतिमती
तथा प्राच्यामुच्चैर्विपुल-कलमक्षेत्र-सुभगा ॥३॥

प्रतानैर्वल्लीनां सुरुचिर-हरिद्वल्कल-भृतः
गुहाभ्यन्तर्वर्तिः श्वसितकरणे संयमजुषः ।
प्रवाहैर्वारीणां धृत-विमलसूत्रा इव सदा
विभान्ति प्राधीता इव तव समस्ताः शिखरिणः ॥४॥

विधाता निर्माय प्रथितरचनं विश्वमखिलम्
अदृष्ट्वा चिन्तार्तो भगवदवतारोचित-भुवम् ।
सरित्पूतां सस्यप्रचय-विभवां रम्यविपिनाम्
तपोभूमिं पुण्यां तदनु भवतीं संघटितवान् ॥५॥

शुभावम्भः-कुम्भावुभय-जलधी [1]अत्र निहितौ
स्थिरारक्षौ पूर्वापर-ककुभवस्थौ गिरिवरौ ।
सरिल्लेखा-रङ्गावलि हिमनगोच्चैः कलशभृत्
तवागारं पुण्यं भगवति शरण्यं विजयते ॥६॥

घनच्छायावृक्ष-प्रवितत-महामण्डप-गतैः
शकुन्तैर्गायद्भिर्बटुभिरिव मुग्धैरुपचितम् ।
प्रशान्तैर्वल्मीकैर्ध्रुवमपिहितानेकमुनिकं
तवागारं काञ्चिज्जननि ! दिनशोभां वितनुते ॥७॥

तृणज्योतिर्दीपं भगण-विलसत्तोरणचणम्
तमस्काण्डोन्मिश्रागुरु-परिमलोद्धूपितमिव ।
प्रनृत्यद्वल्लीकं मरुतरुत-सङ्गीतकमिदम्
तवागारं कामप्ययि वितनुते रात्रिसुषमाम् ॥८॥

नूनं भरतभूः इयं कापि देवतात्रयी इव मत्पुरस्ताद् विराजते । तथा हि —

वसन्ते त्वं वाणी रसित-रसिके कोकिलकुले
शरत्काले लक्ष्मीर्दिशि दिशि लसत्-पद्मनिवहे ।
अपर्णा हेमन्ते खलु गलितपर्णेषु तरुषु
विलोके त्वां मातः सततमभितो दैवतमयीम् ॥९॥

अहो अस्या देवतायाः प्राभातिकी प्रादोषिकी च दिव्या वदनशोभा । तथा हि :—

नभो-गङ्गाधारा-विततत-सीमन्त-रुचिरम्
स्फुरत्-सान्द्रज्योत्स्ना-कुसुमित-तम.कुन्तलचयम् ।
उदञ्चद्बालार्कारुणिम-तिलकं कान्तिहसितम्
प्रभाते तन्मन्द-श्वसनमयि ते भाति वदनम् ॥१०॥

तथैव च—

प्रदोषे मञ्जिष्ठारुण-रविविभाऽऽरक्तसुषमाम्
अनुन्मीलत्तारं तिमिर-भसिताऽऽधूसरमयि ।
मुखं ते शान्ताशं गत-तपन-दोषं भगवति !
धृतध्यानं विश्वाशुभ-विलय-हेतोर्विजयते ॥११॥

* महाकवि डॉ० श्रीधरभास्करवर्णेकर–विरचितं खण्डकाव्यमिदं धारावाहिकरूपेण प्रकाश्यमानं वर्तते—सं०

१. अयं प्रयोगो विचारणीयः—सं०

हे भारतभू-स्वरूपिणि देवते ! सागरसरिदरण्यध्वनिषु तव महिम्नः स्तोत्रमेव सदैव शृणोमि । तथा हि —

सदैव स्वच्छन्दोच्छलदुदधि-कल्लोल-निनदैः
विनिर्गच्छत्-स्वच्छोर्मिल-सरिदुदीर्णैः कलकलैः ।
चलत्ताली - शाली - पनस - कदली - मर्मररवैः
महिम्नः स्तोत्रं ते श्रुतिपथमुपैतीव हि मम ॥१२॥

हे परम-वत्सले मातृभूमे ! त्वं खलु त्रिवर्गस्य कल्पलतिका इव मे भासि —

विधात्री धर्माणां निगमदृढमूलाऽतिविमला
सवित्री चार्थानां मणि-कनकबीजा सुरुचिरा ।
प्रदात्री कामानां बहुविध-कला-पुष्पसुफला
सुखच्छाया मातस्त्वमसि भुवने कल्पलतिका ॥१३॥

तथा च जीवानां मोक्षदायिनी त्वमेव असि सप्तमोक्षनगरीव —

अयोध्या शत्रूणां, त्वमसि मथुरा पावनहृदाम्
खलानां वा माया जननि ! खलु काशी सुतपसाम् ।
अवन्ती चार्तानामपि विधृतकाञ्ची विमनसाम्
विमुक्ते-र्द्वारावत्यपि[1] द्विविषदां त्वं ननु पुरी ॥१४॥

मुक्तिमार्गगामिनां सात्त्विकचरितानां कृते, भूमिः इयं धर्माश्रमायते नूनम् । तथा हि अत्र —

प्रपाः पुण्याः शीतामल-जलमयाः सप्तसरितः
प्रसन्नास्ते काश्मीरज-मलयजोद्गन्ध-पवनाः ।
सुगीतं पाथेयं तदुपनिषदां सारमतुलम्
विमुक्तेर्मार्गे त्वं खलु सकलधर्माश्रमसभा ॥१५॥

अहो सकल-जीवनोद्धारकं पवित्रत्वं परमात्मनोऽपि जन्मभूमेः अस्याः ! तथा हि—

नदीयं श्रीकृष्णामल-चरण-संस्पर्श-विमला
तथाऽरण्यानीयं रघुपति-पदाङ्का प्रतिपदम् ।
स्थली चेयं शश्वन्मुनिगण-तपःपूत-पवना
तवैवं माहात्म्यं स्वभिदधति वन्या अपि जनाः ॥१६॥

न हि ब्रह्मज्ञानं विना कैवल्यमिति मत्वैव नूनं देवा अपि मुमुक्षुतया अत्र ब्रह्मज्ञानोदय-भूमौ समायान्ति । हे ज्ञानोदयभूमे !

चिराय स्वर्भोगादुपगत-जुगुप्सा इव हि ते
तव ब्रह्मज्ञानामखिल-जगदुद्धार-मनसाम् ।
सदन्तेवासित्वं कथमपि समासाद्य विबुधाः
समीहन्तेऽवाप्तुं त्वयि जननि ! सायुज्यपदवीम् ॥१७॥

तथा च—

यदा सर्वं मातर्भुवनमिदमासीत् शिशुनिभम्
वचोहीनं दीनं पिहित-दृगिवाज्ञानतमसा ।
तदा गंगातीरे स्फुरित-विमल-प्रातिभदृशः
चतुर्वेदोद्गानं जननि ! निगिरन्ति स्म मुनयः ॥१८॥

तथा च—

अबोधोपग्रस्तं जगदिदमभूद् देवि ! सकलम्
अभोक्तव्यासक्तं क्षणिक-निजदेहात्मधिषणम् ।
तदा ते तत्त्वज्ञ-द्विज-सदन-सम्बन्धसुधियः
परब्रह्मात्मैक्यं स्फुटगिरमभाषन्त हि शुकाः ॥१९॥

शुका अपि वेदमन्त्रान् पठन्ति स्म इति अत्रत्यः एव वृत्तान्तः । तथा हि—

अहो गेहे गेहे प्रथितयशसां वेदविदुषाम्
अहोरात्रं मन्यानवहितधियाऽऽपीय विविधान् ।
जगुः कीरा धीरा इव पटुगिरः शिष्यनिकराः
तवायं वृत्तान्तश्चकित-चकितं कं न कुरुते ॥२०॥

अपूर्वा खलु इयं धर्मभूमिः, यद् अत्रत्या राजनोऽपि संन्यासिनोऽभूवन् । तथा हि—

विहिंसन्तो धर्मं नृपतिपद-लोभान्धमतयो
यदन्यस्थानीया रणमपि गता धर्मगुरवः ।
त्वदीया निर्विण्णा इव तु सुखभोगैर्नृपतयः
प्रयाताः संन्यासाश्रममखिलकल्याणमतयः ॥२१॥

(क्रमशः)

१. अत्र च्छन्दोमर्यादा विचारणीया—सं० ।

# प्रियाशा

**राजारामशुक्लः**

गताङ्कादनुवर्तते—

[ पूर्वाङ्के—अद्य शून्यालोकेन्दुमययोः विवादस्य निर्णयार्थं राज्ञः परिषद् भवति । चत्वारो नागरिकाः परस्परमालपन्तः सभायाः वृत्तं प्रस्तुवन्ति । सभाकार्यं प्रारभते । राजा इन्दुमयस्य प्राणरक्षार्थं दयितुं शून्यालोकं ब्रवीति । इतः परम्··· ]

शून्यालोकः—(ससम्भ्रममुत्थाय) महाराज !
दयामाश्रित्य किन्न्यायो निष्पक्षः
स्यात्कथञ्चन ?

राजा— नैव श्रेष्ठिन् ! निःशङ्कमुपविश्यताम् ।
दया तु भवतः पक्षः वयं न्यायपराश्रिताः ॥५॥

शून्यालोकः—अहो ! धन्येयं वदान्यता (उपविशति)

राजा— आर्येन्दुमय ! अपि भवान् किञ्चिद् विवक्षति ? हन्त ! भवता तु स्वत एव स्वगले पाशो निक्षिप्तः ।

इन्दुमयः— (उत्थाय प्रणमति)
चिन्तयाऽलमलं देव ! सर्वत्र प्रभुरीश्वरः ।
स्वकृतं भुञ्जते सर्वे ध्रुवं, शोचन्त्यपण्डिताः॥६॥

राजा— महामन्त्रिन् ! नन्विदानीमस्मदादेशेन स्थाप्यतां धर्मतुला मांसं तोलयितुम् ।

महामन्त्री—यथाऽऽदिशति देवः (इङ्गितेन भृत्यमादिशति)

राजा— श्रेष्ठी शून्यालोकोऽपि सन्नद्धो भवतु यथानिश्चितं मांसं कर्तयितुम् ।

शून्यालोकः—(छुरिकां तीक्ष्णयन्) एष सज्जोऽस्मि ।

भृत्यः— (प्रविश्य) एषा धर्मतुला (स्थापयति) ।

राजा— इदानीमार्य इन्दुमयोऽपि प्रस्तुतो भवत्वस्य समक्षम् ।

इन्दुमयः— हा हतोऽस्मि (विष्णुमयं प्रति) वयस्य ! इदानीं गच्छामि । मदीयं निखिलमपि कार्यं सौहार्देन निर्वह ।

विष्णुमयः—सखे ! कथमधुना जीविष्यामि ? (रुदन् परिष्वजति)

इन्दुमयः— सखे ! मारोदीः । भवितव्येन भवितव्यमेव ।

विष्णुमयः— (विलपन्) हरे ! कथमकरुणो वर्तसे ? कथमधर्माभ्युत्थानेऽपि तुष्णीं तिष्ठसि ? प्रभो ! किमर्थं न लज्जसे ?
दण्ड्यतां प्रापितः साधुः किमेषैवेशता तव ?
अथवा नास्ति तवात्र दोषः ।
प्रायेण प्रभवो लोके भवन्त्येव निरङ्कुशाः ॥६॥

इन्दुमयः— सखे ! हरिं मा धिक्कार्षीः । तस्य सर्वोऽपि व्यापारो लोककल्याणायैव कल्पते ।

विष्णुमयः—वयस्य ! मम हृदयं तु इत्थं प्रत्येति यत् त्वमग्नौ प्रक्षिप्तोऽप्यमृतकुण्डे निपतिष्यसि ।

राजा— ननु व्यत्येति समयः । तत्त्वर्यताम् ।

इन्दुमयः— सखे ! गच्छामि (आश्लिष्यापसरति)

शून्यालोकः—आदिशतु देवः । एषा तीक्ष्णा संवृत्ता मे छुरिका ।

राजा— श्रेष्ठिन् ! इदानीं स्वनियोगे भवानेव प्रभुः । (शून्यालोको यावत्प्रहतुं छुरिकामुत्तोलयति तावत्प्रविशति प्रतीहारः)

प्रतीहारः—(त्रिः प्रणम्य) देव ! न्यायविदा बिल्वप्रियेण[1] प्रेषितः कश्चिदभिभाषको देवं दिदृक्षते । श्रुत्वा देवः प्रमाणम् ।

राजा— कथं पक्वकेशोऽपि सभानियममुल्लंघयति भवान् ?

प्रतीहारः— देव ! क्षम्यतामपराधः । एष प्रभूणां न्यायपरामर्शसमयः, किञ्चिद् विरम्यागम्यतामिति बहुशः प्रार्थ्यमानोऽपि प्रस्तुते एव विषये श्रीचरणेषु किञ्चिन्निविवेदयिषुरस्मीति साम्रेडं कथयति ।

राजा— अपि प्रस्तुते एव प्रसङ्गे विवक्षुरस्ति ?

प्रतीहारः—ओम् देव !

राजा— तत् झटिति प्रवेशयैनम् ।

प्रतीहारः—यदादिशति देवः (निष्क्रान्तः)

[ततः प्रविशति पूर्वोक्तोऽभिभाषकः]

अभिभाषकः—विजयतां देवः । प्रवर्तमानेऽस्मिन् विवादे आर्येन्दुमयस्य पक्षतोऽभिभाषकत्वं स्वीकर्तुं तत्रभवता बिल्वप्रियेणाज्ञाप्य प्रेषितोऽयं जनः कृपयाऽनुमतिदानेनानुगृह्यतां महाराजचरणैः।

राजा— भद्र ! अस्त्यनुमतिरस्माकम् । गृह्यतामासनम् । परं यथा सभासमयो वृथा न यायात्तथा प्रयतताम् ।

अभिभाषकः—ओम्, यदादिश्यते देवेन । (शून्यालोकं प्रति) श्रेष्ठिन् ! यद्यप्यस्ति भवतः पक्षो द्रढीयान् अस्ति च न्यायोऽपि भवदनुकूलः तथापि दण्डान्तरं प्रकल्प्य…………

शून्यालोकः—(मध्ये एव) किमिति दण्डान्तरम् ?

अभिभाषकः–आम् श्रेष्ठिन् ! किञ्चिदधिकं धनं गृहीत्वा''''

राजा— (मध्ये एव) ओः वृथा श्रमः । अनेन तु दत्तस्य विंशद्गुणितमपि प्रतिगृहीतुमस्वीकृतम् ।

अभिभाषकः—हन्त ! तन्नास्त्यन्या गतिः । परं श्रेष्ठिवर्य ! मांसकर्तनेन विक्षतमस्य वपुश्चिकित्सितुं भवता कोऽप्युपायः कल्पितोऽस्ति न वा ?

शून्यालोकः—नैव खलु, समयपत्रे तु तादृशं किञ्चिन्नास्ति ।

अभिभाषकः—भवतु मया तु तथैव पृष्टम् । इदानीं स्वनियोगं प्रतिपालयतु (राजानं प्रति) महाराज ! क्षम्यतां, नास्ति मे वक्तव्यान्तरम् (आसनं गृह्णाति) ।

शून्यालोकः—(इन्दुमयं प्रति) स्मरेदानीं स्वाराध्यम् दारुणं मद्विरोधस्य फलं भुंक्ष्वाद्य दुर्मते । (साट्टहासम्)

सर्वेषां मे द्विषामेषा दशा नूनं भविष्यति ॥८॥

(छुरिकामुत्तोलति)

अभिभाषकः—(झटित्युत्थाय) श्रेष्ठिन् ! कियन्मांसं कर्तयिष्यसि ?

शून्यालोकः—(सरोषम्) ननु पूर्वमेवोक्तं—अर्धसेटकपरिमितमिति ।

(क्रमशः)

---

१. बिल्लारियो ।

अहन्यहनि भूतानि गच्छन्तीह यमालयम् ।
शेषाः स्थावरमिच्छन्ति किमाश्चर्यमतः परम् ॥

(म० भा० ३।३१३।१६)

एतावान् सांख्ययोगाभ्यां स्वधर्मपरिनिष्ठया ।
जन्मलाभः परः पुंसामतो नारायणस्मृतिः ॥

(भागवतम् २.१.६)

# तैलिनः प्रसेवः[1]

जगन्नाथः

अस्ति पुरा कश्चित् तैली। प्रायः तेन पण्यं क्रेतुं नगरस्य निर्माणीः प्रति गन्तव्यम् अभवत्। एकदा सः स्वं प्रसेवं कार्षापणैः आपूर्य स्टेशनं गतः। ततः असौ नगरं गन्तुं यानमुद्रां क्रीतवान्। कटिदेशे बद्धं प्रसेवं च सकृद् अवेक्ष्य सः सन्तुष्टः सन् बास्-यानम् आरूढः।

गन्तव्यस्टेशने यानं किञ्चित्कालाय संस्थितम्। तत्र आरोहकाऽवरोहकयात्रिणां परस्परसम्मर्दे तैलिकस्य प्रसेवः कटि-स्थानात् स्रस्तः सन् क्वचित् पतितः। स्टेशनाद् बहिर् आगत्य यदा तैली पुनः कटिस्थानं विलोकयति तदा प्रसेवं न पश्यति। सः व्याकुलः स्टेशनं प्रति धावति। संयोगवशाद् यावदेकः यात्री पतितं प्रसेवम् उद्धर्तुं नतः तावदेव तैलिकः तत्र प्राप्तः।

धनपूर्णं प्रसेवं दृष्ट्वा तस्य यात्रिणः भावना विकृता। अयं मम प्रसेवः इति उक्त्वा सः तं तैलिकाय दातुं न स्वीकृतवान्। तैली तत्कथं सहेत? द्वयोः अपि तस्मै प्रसेवाय कलहः सञ्जातः।

उभौ कलहं कुर्वन्तौ दृष्ट्वा बहवः यात्रिणः तत्र समवेताः। अन्ततः स कलहः आरक्षिभ्यः निवेदितः। आरक्षिणः तं न्यायाधीशस्य न्यायालये प्रस्तुतवन्तः।

न्यायाधीशः यात्रिणः तैलिनस्य कथनं ध्यानपूर्वकं श्रुतवान्। उभौ अपि प्रसेवं स्वकीयं घोषयतः स्म। अन्ते न्यायाधीशः प्रेष्यम् आज्ञापयत्-एकस्मिन् कुण्डे जलं पूरयित्वा प्रसेवं कार्षापणं च तस्मिन् मज्जय।

प्रेष्यः तत्कालम् आज्ञाम् अपालयत्। रजत-रूप्यकाः ताम्रपित्तलकार्षापणाः च यदा कुण्डस्य तले निषण्णाः तदा न्यायाधीशः वाक्कीलान् अवदत्— "भवन्तः तत्र गत्वा पश्यन्तु, जलस्य अधः उपरि च किम् अस्ति इति।" ते गत्वा अपश्यन् यत् कुण्डस्य तले कार्षापणाः सन्ति, उपरि च जले तैलं प्रसृतम्। ते प्रत्यागत्य न्यायाधीशाय निवेदितवन्तः।

सः अब्रवीत्,—"एतेन स्पष्टम् एव इदं यत् तैलसङ्गेन तैलिनः पणेषु प्रसेवे च तैलं संसक्तम्। तत् च जले प्लोतुम् आरब्धम्। अनेन सिद्धं यत् प्रसेवस्य सत्यः स्वामी तैली एव। यात्री असत्यं वदति।"

सः तं मिथ्याभाषणस्य तस्माद् अपराधाद् कारागृहं प्रेषितवान्। तैलिना स्वः पूर्णः प्रसेवः प्राप्तः।

सारः—नासत्यं प्रावृतं तिष्ठेत्
स्यात् कदाचित् प्रकाशितम्।
सत्यासत्यविवेके तु
दण्डितः स्याद् असत्यवाक्॥२४॥

सत्यमेव जयत्यन्ते नासत्यं विजयं व्रजेत्।
सत्येन ध्रियते लोकः सत्यान्नास्ति परा गतिः॥२०

1. प्रसेवः—मनी बैग (Money bag)



२

# बाल-विज्ञान-कारिकाः

(बालानां कृते सामान्य-विज्ञानम्)

चन्द्रगुप्त-श्रीधर-वर्णकरः, नागपुरम्

भौतिकानां पदार्थानामस्ति रूपत्रयं त्विह ।
घनो द्रवस्तथा वायुः विज्ञानार्थे सदा स्मरेत्॥१

यथा— द्रवरूपेण सामान्यं जलं भवति सर्वदा ।
तापेन बाष्परूपं च शीतत्वेन हिमं घनम् ॥२॥

मिश्रणम्—मिश्रिताः वायवस्सर्वे वर्तन्ते सर्वदा जले ।
जीवन्ति जलजास्तैर्वा जले बत चराचराः ॥३॥

बाष्परूपेण विद्यन्ते वायुमध्ये यथा द्रवाः ।
द्रवे तथैव सामान्ये मिश्रितास्सन्ति वायवः॥४॥

**वातावरण**मस्माकं वातानां मिश्रणं खलु ।
कर्बो नत्रस्तथा प्राणः बाष्पं चान्ये च वायवः ॥५॥

**प्राणवायुः**—प्राणवायुं विना शक्यं प्राणिनां नैव जीवनम् ।
अशक्यं ज्वलनं चैव यथा नाम तथा गुणाः ॥६॥

ज्वलनं जीवनं चैव वर्धेते प्राणवायुना ।
न नत्रः कर्बवायुर्वा ह्येतदर्थं सहायकः ॥७॥

वनस्पतिर्दिवा स्वाङ्गैः कर्बवायुं प्रकर्षति ।
मुञ्चति प्राणवायुं च प्राणिनामुपकारकम् ॥८॥

**विज्ञानम्**—पञ्चज्ञानेन्द्रियैः सर्वैः मानवस्य स्वभावतः ।
बाह्यार्थैः सह सम्बन्धैः विज्ञानमुपजायते ॥९॥

ज्ञानं विज्ञान-सहितमिति गीतावचोऽमृतम् ।
श्रद्धया रचिताः स्मृत्वा बालविज्ञानकारिकाः ॥

# हासविलासः

डॉ० प्रशस्यमित्रशास्त्री

## १—सेवानिवृत्तिरस्ति किम् ?

न्यायाधीशोऽभियुक्तस्य दण्डमुद्घोषयन् यदा ।
सुधारमिच्छुकस्तं च वाक्यमेवमुवाच यत् ॥

मन्ये त्वमन्तिमं वारं समागच्छसि मत्पुरः ।
भविष्यत्समये नैव पुनरत्रागमिष्यसि ॥

तस्य तद्वचनं श्रुत्वाऽभियुक्तः स जगाद यत् ।
भवान् सेवानिवृत्तः किं सद्यः सम्पत्स्यते प्रभो ! ॥

## २—कृष्णजन्मगृहं पुरा

अयोध्यां गन्तुकामोऽयम् एकदा देवदत्तकः ।
ट्रेनयाने समारूढो विनैव टिकटं यदा ॥

समागतस्तदैवैकः टिकटानां निरीक्षकः ।
टिकटं देवदत्तं च तत्र याचितवांस्तदा ॥

देवदत्तस्तमूचे यत् द्रष्टुमिच्छामि साम्प्रतम् ।
जन्मभूमिमहं पुण्यां श्रीरामस्य यशस्विनः ॥

तस्य तद्वचनं श्रुत्वा निरीक्षक उवाच यत् ।
जन्मभूमिमहं पूर्वं कृष्णस्य दर्शयामि ते ॥

## ३—सुखमेकं न दीयते

एकदा कलहे पत्नी पतिमेवम् उवाच यत्
किं किं सुखं सदा तुभ्यं नाहं दत्तवती वद ? ।
तस्यास्तद्वचनं श्रुत्वा क्षुब्धः पतिरुवाच यत्
वियोगसुखमेवैकं न त्वं दत्तवती प्रिये ! ॥

## ४—कार्यालयेऽपि किं कार्यम् ?

राज्यकार्यालयस्यैकः कर्मचारी स्वके गृहे
चापपानं प्रकुर्वाणः पत्रिकापठने रतः ।
बहुकाले व्यतीते च तस्य पत्नी जगाद यत्
गमिष्यति भवानद्य किं न कार्यालयेऽधुना ? ।
तस्यास्तद्वचनं श्रुत्वा विस्मितः स उवाच यत्
मया तु ज्ञातमेतद् यत् स्थितः कार्यालयेऽस्म्यहम् ॥

# मुद्रितं यद्दिनं धूसरं यन्नभः

**प्रो० परमानन्दः शास्त्री**, सिद्धार्थसदनम्,
मन्दिरमार्गः, अलीगढम्

मुद्रितं यद्दिनं धूसरं यन्नभः
पारेऽद्रि-द्युसरेण कराः संहृताः।
मा भयस्यास्तु लेशो मनसि ते, वरं
घनतमश्च्छायया ते सरणिरावृता।

उद्धृतो जातु नाङ्घ्रिभंवेत् पश्चगः,
दुर्गतिः केवलं यदि वृता नो गतिः।
कः स्थिरं याति पदमिह सुगतिमयि सखे !
तच्चरैवेति दिग्दर्शिकाऽऽर्षी मतिः।
संसृतेरेष नियतो निवेशक्रमः
चक्रवद् - यत्तमोज्योतिषोर्विभ्रमः,

बर्बरा शर्वरीयं गमिष्यति लयम्
आगमिष्यति पुनः कान्तिरुषसा कृता।
मुद्रितं यद्दिनं धूसरं यन्नभः
पारेऽद्रि - द्युसरेण कराः संहृताः।

सार्थकं किं भवेज्ज्योतिरुत्थं बहिः,
कालिमानं विधत्ते यदन्ता रविः।
नष्टमार्गस्य शोधस्तदपि संभवो
ह्यान्तरं ज्योतिरुद्दीपयेद् यदि कविः।
जीवनं सर्वदैवापदामास्पदम्,
सज्जनो नैव मुञ्चेत्तदपि सत्पथम्।

यत्नपालितलता इव फलन्ति क्रियाः,
शोचनीया सफलता छलैर्या कृता।
मुद्रितं यद्दिनं धूसरं यन्नभः
पारेऽद्रि - द्युसरेण कराः संहृताः।

दूरमास्तां कथा मित्र ! पूर्णाहुते-
र्वोढुमग्निर्निरर्चिर्हविर्न क्षमः।
हन्त ! कलहं स्वभावाद् गता याजका
आसुरश्च निपततीह कुलिशो गवि।

विश्वमैत्री विधौ यस्तु रामायते
यज्ञरक्षापि तेनैव जाजायते।

दीपितोत्साहवह्निप्रकाण्डोर्जसा
रक्षिता वेदिका, ताडका निष्कृता,
मा भयस्यास्तु लेशो मनसि ते, वरं
घनतमश्च्छायया ते सरणिरावृता।

चेतसो वाडवाग्निर्दहेन्नार्दतां
चित्तनिष्ठास्तु सत्त्वे न स्वत्वे क्वचित्।
लक्ष्यवेधस्य सर्वैः फलं बन्धुभिः
भुज्यतां संविभज्यैव लक्ष्यजिद्भुवि।
सिद्धयो योगिमार्गे यथा ह्युपना,
कर्मयोगस्थितानां तथा सङ्गता।

चित्तविक्षेपकारिण्य एता हठात्
ते हि पारं गता यैः सदा धिक्कृताः।
मा भयस्यास्तु लेशो मनसि ते, वरं
घनतमश्छायया ते सरणिरावृता।

'किंफला स्यान्ममाधारपाषाणता'
इति विचारो न ते स्यादये ! क्षेपकः।
आत्मतोषात् परः को निधिर्वरतरः
प्राप्तुमिच्छेन्नु यं निःस्पृहः सेवकः।
देश उदियान्नवीकृतमनुजतापथः,
तन्महत् खलु फलम्, अपि भवेदंशतः।

भद्रमाचर्य तत्रैव तद्विस्मृति-
र्भद्रपुरुषस्य सैषा प्रकृतिर्हि मता।
मुद्रितं यद्दिनं धूसरं यन्नभः
पारेऽद्रि - द्युसरेण कराः संहृताः।
मा भयस्यास्तु लेशो मनसि ते, वरं
घनतमश्छायया ते सरणिरावृता।

# अक्षरबन्धः

## (प्रतियोगिता)

## ४

| | | | | | |
|---|---|---|---|---|---|
| वि | क्र | मो | र्व | शी | यं |
| | | | | | |
| अ | ज्ञा | न | वा | र | णं |
| रा | ज | ने | व | ई | शः |
| म | हा | वि | श्व | रू | पं |
| म | च | र | कः | रः | पं |
| हे | कृ | न्द्र | शे | ख | रः |
| ष्णः | या | ज्ञ | व | ल्कः | गः |

**विषयाः**

१—कालिदासनाटकेषु अन्यतमम् ?
२—मिताक्षरा इति स्मृतिग्रन्थस्य रचयिता ?
३—सांख्यकारिका इति ग्रन्थस्य कर्ता ?
४—प्रसिद्धः आयुर्वेदविद्वान् ?
५—कृष्णेन अर्जुनाय प्रदर्शितं रूपम् ?

नाम.........................................................
सङ्केतः.....................................................
.........................................................

### सूचना

पृष्ठेऽस्मिन् वामभागे चतुष्कोणे कोष्ठके कानिचन अक्षराणि दृश्यन्ते। तेषु अक्षरेषु केचन साहित्य-सम्बन्धिनः विषयाः गुप्ताः सन्ति।

तस्य अधः क्रमशः ससंख्याकाः केचन विषया सन्ति। तेषाम् आधारेण तान् विषयान् उपस्थितेषु कोष्ठकस्थ-अक्षरेषु प्रदर्शयन्तु।

कथं वा प्रदर्शनीयम् इति एकम् उदाहरणम् अपि वयं दत्तवन्तः। तद् उदाहरणं मनसि निधाय, अवशिष्टानि नामानि रेखांकितानि कुर्वन्तु।

एवम् एनम् अक्षरबन्धं सम्पूर्य—अधःस्थितं कूपनं अपि सम्पूर्य वामभागं सर्वं निर्दिष्टस्थलेषु परितः कर्तयित्वा, अङ्कप्राप्तेः एकमासाभ्यन्तरे अधोनिर्दिष्ट-संकेतानुसारं प्रेषयन्तु। अत्र चत्वारः विजेतृरूपेण उद्घोषिताः भविष्यन्ति। यदि चतुर्भ्यः अधिकाः उत्तमपूरकाः भविष्यन्ति, तर्हि 'लाटरी' पद्धतिद्वारा चतुर्णां नामानि निष्कास्य ते एव विजेतारः इति उद्घोष्य तेषामेव पुरस्कारान् प्रेषयिष्यामः। यदि चतुर्षु अपि एकः-द्वौ-त्रयः एकेन दोषेण दोषद्वयेन दोषत्रयेण वा प्रेषयन्ति, तदा द्वितीय-तृतीय पुरस्काराः भविष्यन्ति।

**अक्षरबन्ध-प्रतियोगिता ३—फलम्**

**समानरूपेण विजेतारौ—**

| १ | २ |
|---|---|
| कु० मीनाक्षी पाण्डेया | पी० एस० आर० शर्मा |
| सी० २७/१११, जगतगंज | ओल्ड पी० जी० हास्टल |
| वाराणसी—२२१००२ | प्रकोष्ठ सं० ३३, उस्मानिया |
| | विश्वविद्यालय-हैदराबाद—२ |

**अक्षरबन्धविभागः**
**विश्वभाषा, दुर्गं—रामनगरम् वाराणसी-८**

# पिछड़ों को आरक्षण : सामाजिक न्याय की पूर्व पीठिका

—वीरेन्द्र

डा० लोहिया के चिन्तन से प्रेरणा लेकर उत्तर प्रदेश के मुख्यमंत्री श्री मुलायम सिंह यादव ने सामाजिक न्याय तथा आर्थिक विकास के लिए जो अनेक कदम उठाये हैं उनमें एक प्रमुख कदम है सरकारी सेवाओं में पिछड़ों को २७ प्रतिशत आरक्षण देने का फैसला। मण्डल आयोग की सिफारिशों को यथावत् लागू करते हुए मुख्यमंत्री श्री यादव ने यह भी कहा है कि शिक्षा तथा तकनीकी शिक्षा में भी आरक्षण व्यवस्था लागू करने का संकल्प है। इसके साथ ही प्रदेश सरकार का यह भी संकल्प है कि पर्वतीय क्षेत्र के लोगों तथा ऊँची जाति के निर्धन लोगों को भी आरक्षण सुविधा का लाभ दिया जाय। आरक्षण पिछले कुछ दिनों से बहस का मुद्दा बना हुआ है। इसलिए इसके बारे में एक तटस्थ विवेचन बहुत जरूरी है।

भारतीय समाज में सामाजिक न्याय एवं बदलाव की कोई सार्थक पहल हमारी संरचना की जटिल बुनावट को अनदेखी नहीं कर सकता। संविधान के निर्माताओं ने भारतीय समाज की इस जटिल बुनावट को पहचानते हुए ही संविधान की धारा १५ (संशोधित), धारा १६ की उपधारा (४) एवं धारा ३४० के अन्तर्गत सामाजिक एवं शैक्षणिक रूप से पिछड़े वर्गों के लिए आरक्षण की आवश्यकता को महत्त्व दिया। भारतीय समाज की पड़ताल करते हुए पंडित जवाहर लाल नेहरू ने पहले ही अपनी पुस्तक 'डिसकवरी ऑफ इंडिया" में लिखा था, "किसी भी समूह के पिछड़ेपन या अधोगति का कारण स्वत: निर्मित न होकर, सिद्धान्ततः उचित अवसरों का अभाव तथा दूसरे समूहों द्वारा लम्बे समय तक शोषण होता है।··· इसलिए सभी को मान-सम्मान का अवसर ही नहीं दिया जाने चाहिए बल्कि पिछड़े समूहों को शैक्षणिक, आर्थिक तथा सांस्कृतिक विकास की विशेष सुविधाएँ प्रदान की जानी चाहिए ताकि वे अपने से आगे बढ़े हुए लोगों की बराबरी कर सकें।" डा० अम्बेडकर और डा० लोहिया की समाजिक न्याय की अवधारणा का तो केन्द्रबिन्दु ही दलितों और पिछड़ों को विशेष अवसर प्रदान कर समतावादी समाज का निर्माण करना था।

समतामूलक समाज एवं सामाजिक न्याय की इसी सदिच्छा का परिणाम है। मण्डल आयोग की सिफारिशें, जो नौकरियों तथा शिक्षण संस्थाओं में पिछड़े वर्गों के लिए सत्ताईस प्रतिशत आरक्षण की संस्तुति करती हैं। यह कुछ जातियों को मात्र नौकरियाँ देने का सवाल न होकर व्यापक सामाजिक बदलाव की प्रक्रिया में भारत की आधी से अधिक दलित पिछड़ी जनता की सम्यक् भागीदारी का सवाल है। यह संयोग मात्र नहीं है कि जो जातियाँ मण्डल आयोग के दायरे में आती हैं उनमें नब्बे प्रतिशत से अधिक लोग आर्थिक रूप से भी पिछड़े हैं। मण्डल आयोग ने सामाजिक एवं शैक्षणिक पिछड़ेपन के अलावा आर्थिक पिछड़ेपन को भी पिछड़ी जातियों के निर्धारण का आधार बनाया। आर्थिक पिछड़ेपन के मूल्यांकन के लिए इन पिछड़े समूहों में शारीरिक श्रम पर निर्भरता, विवाह की आयु, काम में महिलाओं की साझेदारी, पाठशाला में बच्चों की उपस्थिति, स्कूली स्तर से पढ़ाई छोड़ने की दर, मैट्रिकुलेशन शिक्षा प्राप्त लोगों की संख्या, पारिवारिक सम्पत्ति का मूल्य, कच्चे मकानों में रिहाइश, पीने के पानी के निजी स्रोत से उनकी दूरी तथा कर्जे का उपभोग आदि सम्बन्धी तथ्यों को दृष्टिगत रखा गया। यदि शैक्षणिक, सामाजिक एवं आर्थिक रूप से पिछड़े लोग नीची जातियों से भी सम्बन्धित हैं तो यह उनका दोष नहीं यह परिणाम है सम्पन्न एवं सुविधा प्राप्त उच्च वर्गों तथा जातियों द्वारा सदियों से उनके शोषण, उत्पीड़न एवं वंचित रखे जाने का। सच तो यह है कि इस पिछड़ेपन के मूल में उनका जाति विशेष से जुड़ा होना ही है। कारण यह कि समाज के सामंतवादी दौर में जातिगत स्थिति पेशे एवं सामाजिक हैसियत का भी निर्धारण करती थी। इसी के चलते दलित एवं पिछड़ी जाति के लोगों को "बेकार" करने से लेकर अपने उत्पादन का बड़ा हिस्सा जमींदार एवं सवर्ण भूस्वामियों को देना पड़ता था। जन्म से निर्धारित इस जातिगत स्थिति के परिणामस्वरूप इन जातियों के लोगों का शैक्षणिक एवं सांस्कृतिक रूप से पिछड़ना स्वाभाविक ही था।

मण्डल आयोग के दायरे में शामिल अधिकांश पिछड़ी जातियों के नामों से उनके पेशे का भी बोध होता है। उदाहरण-स्वरूप ग्वाला, बढ़ई, लोहार, सुनार, ठठेर, गड़रिया, तेली, बारी, भड़भूजा, हलवाई, कहार, केवट, मल्लाह, कुम्हार, मुराऊ, तमोली, नाऊ, नट आदि। मण्डल आयोग द्वारा निर्दिष्ट मुस्लिम पिछड़ी जातियों से भी उनके पेशे का बोध होता है— अन्सारी (जुलाहा), बाजीगर, चिकवा, डफाली, दर्जी, रजक (धोबी), धुनिया, फकरी, गद्दी, कसाई, कसगर, कुंजड़ा, मनिहार, अन्सा, बंजारा, हज्जाम आदि। जाति-निर्धारित इन पेशों में से अधिकांश पेशे आधुनिक समाज की आवश्यकताओं को देखते हुए अनुत्पादक तथा अलाभकारी सिद्ध हो चुके हैं।

आजादी के बाद उत्पादन सम्बंधों में बदलाव आने से जातिगत पेशे काफी सीमा तक टूटे लेकिन इन पेशों से जुड़े लोग अपने पारंपरिक शोषण तथा सामाजिक एवं शैक्षणिक पिछड़ेपन के कारण रोजगार के नये अवसरों तथा औद्योगिक विकास का पर्याप्त लाभ न उठा सकें। वंशानुगत पेशों के अनुत्पादक होने के कारण जहाँ गाँवों में इन पेशों से जुड़े लोगों का जीवनयापन दूभर होता गया, वहीं शहरों में नयी तकनीक तथा पूंजीगत आवश्यकताओं के चलते ये पेशे अन्य सम्पन्न वर्गों के हाथों में चले गये। परिणाम यह हुआ कि पिछड़े वर्गों में आने वाली अधिसंख्य जनता भारतीय समाज की विकास यात्रा में हाशिये पर रह गयी। उपलब्ध आंकड़े बताते हैं कि भारत की कुल

...ख्या में पिछड़ों का अनुपात बावन प्रतिशत है, लेकिन ...सरकार एवं सार्वजनिक उपक्रमों की प्रथम श्रेणी की ...यों में पिछड़े वर्ग के सिर्फ पांच प्रतिशत और तृतीय ...चतुर्थ श्रेणी में तेरह प्रतिशत लोगों की हिस्सेदारी है। ...नौकरियों में पिछड़े वर्गों एवं दलितों का उचित ...प्रतिनिधित्व न होने के कारण नौकरशाही का एक ऐसा ...तंत्र बन गया है जो देश की तीन चौथाई से अधिक ...की जरूरतों के प्रति असंवेदनशील होता जा रहा है। ...परिणामस्वरूप सरकार की विभिन्न विकास योजनाओं तथा ...उन्मूलन व गरीबी हटाने के कार्यक्रमों के वांछित परिणाम ...मिल रहे हैं। यह तभी संभव है जब नौकरशाही का ...तंत्र समाप्त करके उसका जनतांत्रीकरण किया जाय। ...तरह वयस्क मताधिकार का प्राविधान करके भारतीय ...विधान ने राजनीतिक जनतंत्र सुनिश्चित किया है, उसी ...मंडल आयोग के अपनी आरक्षण संबंधी सिफारिशों द्वारा ...नौकरशाही के जनतांत्रीकरण का प्रयास किया है।

जिस तरह वयस्क मताधिकार की माँग के विरुद्ध शिक्षा ...सम्पत्ति के तर्क दिये जाते थे, कुछ उसी तरह आज आरक्षण ...विरुद्ध "योग्यता" एवं "कायकुशलता" के तर्क दिये जा ...हैं। आरक्षण के विरुद्ध "योग्यता एव "कार्यकुशलता" के ...पूरी तरह खरे नहीं उतरते क्योंकि दक्षिण भारत में ...आरक्षण के प्रयोग के परिणाम हमारे सामने हैं। दक्षिण भारत ...आरक्षण पचास से सत्तर प्रतिशत होने के बावजूद वहाँ का ...शासन उत्तरी भारत के उन राज्यों से कहीं बेहतर है जहाँ ...आरक्षण की पूरी सुविधाएं अभी पूरी तरह से नहीं प्रदान की ...हैं। भ्रष्टाचार की समस्या भी जितनी उग्रतर उत्तर भारत ...राज्यों में है, उतनी दक्षिण भारतीय प्रदेशों में नहीं। ...असल नौकरशाही मे "योग्यता" एवं "कार्यकुशलता" जैसे ...निरपेक्ष न होकर सापेक्ष होते हैं। उचित संवेदनशीलता, ...कता एवं प्रतिबद्धता का अभाव जहाँ "योग्य" एवं ...कार्यकुशल" उच्चाधिकारियों को काष्ठवत् एवं भ्रष्ट बना ...ता है वहीं अपेक्षाकृत कम योग्य एवं कम कार्यकुशल ...अधिकारियों की संवेदनशीलता, नैतिकता एवं प्रतिबद्धता ...समाज के लिए अधिक कारगर एव उपयोगी बनाती है। ...हमें यह भी ध्यान रखना चाहिए कि सरकार की अधिकांश ...विकासमूलक योजनाएँ छोटे किसानों, सब्जी उत्पादकों, पशुपालन ...जुड़े पेशों, जुलाहों, टोकरी बिनने वालों, मछुवारों तथा ...कारीगरों से संबंधित हैं। इनमें से अधिकांश पेशे पिछड़ी ...जातियों से पाम्परिक रूप से जुड़े रहे हैं। दो राय नहीं कि ...इन जातियों के लोगों का सरकारी नौकरियों में प्रति-...निधित्व होगा तो वे इन पेशों से जुड़ी हुयी समस्याओं को ...बेहतर ढग से समझ कर उसका निदान कर सकेगें और ...सहानुभूतिपूर्वक रवैया अपनायेंगे। कहने की आवश्यकता नहीं कि वे इन क्षेत्रों में अन्य लोगों की अपेक्षा अधिक "योग्य" ए... "कार्यकुशल" सिद्ध होंगे।

यदि संपूर्णता में देखा जाये तो "आरक्षण" का सिद्धान्... कुछ जातियों को नौकरी संबंधी रियायतें देने का न होक... सत्ता तंत्र में जनतांत्रिक हिस्सेदारी तथा कालांतर में दलि... एवं वंचित जातियों के प्रति हुए अन्याय का प्रतिकार करन... है। आरक्षण का विरोध सुविधासम्पन्न वर्गों द्वारा अपने वर्चस्... को बनाये रखने के लिए न्याय एवं समतामूलक समाज क... लक्ष्य की दिशा में रोड़ा पहुँचाना है। राजनीतिक जनतंत्र बहु... दिनों तक आर्थिक जनतंत्र से मुँह नहीं चुरा सकता। उसक... अनिवार्य परिणति समतामूलक समाज में ही होती है। हमा... संविधान निर्माताओं ने इस तथ्य को दृष्टिगत रखते हुए ... दलितों एवं पिछड़े वर्गों के लिए "आरक्षण" के माध्यम ... सामाजिक न्याय सुनिश्चित करने का प्रयत्न किया है। भारती... समाज की गहरी समझ न रखने वाले एवं औद्योगिक रूप ... विकसित देशों की सामाजिक न्याय की प्रणाली को आद... समझने वाले पाश्चात्य बुद्धिजीवियों को आरक्षण में जातिवा... की गंध आ सकती है। लेकिन जो समाज सदियों से वर्ण ए... जाति का बंदी रहा हो, वहाँ जाति के अस्तित्व को नकार क... सामाजिक न्याय की कोई भी अवधारणा सफल नहीं हो सकती... जाति के नाम पर हुए भेदभाव तथा शोषण के कारण जो लो... सामाजिक मर्यादा, पद एव प्रतिष्ठा में पिछड़ गये हैं, उ... जातीय भेदभाव को पहचान कर उन्हें आरक्षण का सहार... देकर ही एक स्वस्थ समतामूलक जातिविहीन समाज क... स्थापना की जा सकती है।

मंडल आयोग ने पिछड़ी जातियों के लिए नौकरियों ... साथ-साथ शिक्षण संस्थाओं में भी आरक्षण की संस्तुति की है... उत्तर प्रदेश सरकार ने मंडल आयोग की सिफारिशों क... संपूर्णता में स्वीकार करके सामाजिक न्याय की प्रक्रिया क... तेज करने का जो संकल्प लिया है, समतामूलक समाज क... स्थापना की दिशा में उसके दूरगामी परिणाम होगें। उत्त... प्रदेश के मुख्यमंत्री मुलायम सिंह यादव पिछड़ों के स्वाभावि... नेता हैं, पिछड़े वर्गों के दुःख-दर्दो के वे सहयात्री एवं सहभोक्त... रहे हैं। उनसे सहज ही उम्मीद की जा सकती है कि वे दलित... एवं पिछड़े वर्गों के लिए सामाजिक न्याय तथा सत्ता तंत्र ... उनकी भागीदारी सुनिश्चित कर सकेंगे। आर्थिक रूप ... पिछड़े लोगों के लिए सिद्धान्त रूप में आरक्षण स्वीकार करक... उन्होंने सामाजिक न्याय के सिद्धांत को जो व्यापकता प्रदा... की है, वह सही दिशा में सही कदम है। इससे आर्थिक रूप ... निर्बल ऊँची जातियों के लोगों को भी उन्नति एवं विकास ... समान अवसर मिल सकेंगे और "आरक्षण" सही अर्थों ... भेदभाव का नहीं, बल्कि "समता" एवं "सामाजिक न्याय" का एक कारगर हथियार बन सकेगा।

# सङ्गच्छध्वं सङ्गच्छध्वम्

**ओम्प्रकाशठाकुरः**
डी०—७५७ सरस्वती विहारः
दिल्ली ११००३४

अयि भरतदेशसदलङ्कारा:
सुजना मोहादवबुध्यध्वं,
समस्याह्वानमिदं स्फीतं
सङ्गच्छध्वं सङ्गच्छध्वम्

१

क्व गतं तद् भारतवर्चस्वं
क्व गतं तेजः पौरूषमतुलं,
जातिर्याता किं कातरतां
पीत्वा मदमोहमयीं मदिराम्।
हास्यास्पदतां यातां स्वदशां
किञ्चिच्चेतस्याकलयध्वम् ।

समयस्या०—

२

अलमलं प्रथाभिस्ताभिर्वो
या मनसि विघटनं जनयन्ते,
कुर्मः किं जातिविभेदैस्तैः
हीनोन्नतभावं घटयन्ते।
भित्त्वा पुराणजर्जरदुर्गं
नव्योदयहेतोः प्रयतध्वम्।

समयस्या०—

३

परिचिनुत संघशक्तिं महतीम्
अन्योन्यं वृथाविवादैः किं,
सर्वेऽन्ये लक्ष्यनिषक्तदृशः
शक्तिर्वो हन्त ! विकीर्णा किम्
स्थितिमाकलय्य सकलां सद्यो
मोहस्वापादवबुध्यध्वम् ।

समयस्या०—

४

अरयः षड्यन्त्रपराः परितः
समयं गमयथ तन्द्राभक्ताः,
प्राचां गुरुतागौरवगाने
लग्नाः स्मृतशौर्यकथावृत्ताः।
अवधारितकरणीयास्त्वरितम्
उचितं प्रतिकारं प्रकुरुध्वम्।

समयस्या०—

५

विद्याबल-बुद्धिनिधानानां
क्षुद्रैररिभिः कथमवमानः,
आनीय चेतनां राजनये
संरक्ष्यो राष्ट्रियसम्मानः।
स्वार्थानपहाय समृद्धिभिः
विलसत नृत्यत संमोदध्वम्।

समयस्या०—

# शीला भट्टारिका

चोडूरी उपेन्द्रराव:, महबूबुनगरम् , आन्ध्रप्रदेश:

शीला भट्टारिका काश्मीर-कवयित्री । राजशेखर: 'शीलाभट्टारिकाया: कविता उत्तमा' इत्युवाच । संस्कृतसाहित्ये कवयित्रीणां कवितानैपुण्यं निष्पक्षपातरूपेण यथा राजशेखरेण प्रदर्शितं तथा नान्यै: प्राचीनसंस्कृतालंकारिकै: ।

यद्यपि शीलाभट्टारिकाया: कालनिर्णये स्पष्टता नास्ति, तथापि अस्या: समय: क्रैस्तवीय-नवम-शतकमिति वक्तुं शक्यते । मिहिरभोजराज: राजशेखरस्य समकालिक: । अनेन भोजराजेन अस्या: प्रणयसम्बन्ध: आसीत् इति ज्ञायते । अत: अस्या: क्रैस्तवीयनवमशतकमिति शक्यते वक्तुम् ।

इयं प्रतिभान्विता संस्कृत-कवयित्री । क्रैस्तवीय १३६३ प्रान्तीय: शार्ङ्गधर: स्वीय-'शार्ङ्गधरपद्धति:' इत्याख्ये ग्रन्थे शीलाभट्टारिकाया: परिचयं इत्थमयच्छत्—

श्लोक:—शब्दार्थयो: समो गुम्फ: पाञ्चाली रीतिरिष्यते ।
शीलाभट्टारिकावाचि बाणोक्तिषु च सा यदि ॥

अनेन ज्ञायते यत् शीलाभट्टारिकाया: कविता समुचितशब्दार्थगुम्फनेन युक्ता पाञ्चालीरीत्यां शोभते स्म इति । अनया लिखितं काव्यमेकमपि अस्माभिर्न लब्धम् । संस्कृतसाहित्यजगति एवमेव बह्वीनां नामानि वयं जानीम: बहुधा प्रशंसिताश्च तासां कविता: आलंकारिकै: । तथापि ताभि: रचितानि महाकाव्यलघुकाव्यादीनि अद्य नैवोपलभ्यन्ते । समुचित-आदरस्य, व्याप्तेश्च अभावेन कवयित्रीणां कृतय: नष्टा: स्यु: । स्त्रीणामुपरि ईदृशी ह्रस्वदृष्टि: नूनमस्माकं संस्कृतौ कांचित् न्यूनतामापादयति । न्यूनातिन्यूनं साहित्ये स्त्रीपुरुषसमभावना भवेत्, येन संस्कृतसाहित्यमितोऽपि पुष्पितं भवेत् ।

आलंकारिकैर्दत्तैरुदाहरणश्लोकै: ज्ञायते यत् शीलाभट्टारिका मुक्तककाव्यम् एकं रचयामासेति । काव्यप्रकाशकारेण मम्मटेन शीलाभट्टारिकाया: श्लोक: एक: काव्योदाहरणरूपेण दत्त: ।

मम्मटेन हि काव्यप्रकाशे प्रथमोल्लासे 'तददोषौ शब्दार्थौ सगुणावनलंकृती पुन: क्वापि' इति काव्यलक्षणमुक्त्वा उदाहरणरूपेण शीलाभट्टारिकाया: श्लोकोऽयं दत्त:—

य: कौमारहर: स एव हि वर: ता एव चैत्रक्षपा:,
ते चोन्मीलितमालतीसुरभय: प्रौढा: कदम्बानिला: ।
सा चैवास्मि तथापि तत्र सुरतव्यापारलीलाविधौ,
रेवारोदसि वेतसीतरुतले चेतस्समुत्कण्ठते ॥

शार्ङ्गधरपद्धति: इत्याख्ये ग्रन्थे श्लोकोऽयं शीलाभट्टारिकया रचित: इत्युक्तम् ।

अस्या: एव कवयित्र्या: अन्य: एक: लब्ध: श्लोक:–

दूति ! त्वं तरुणी युवा सचपल: श्यामास्तमोभिर्दिश:,
संदेशस्सरहस्य एव विपिनो संकेतकावासक: ।
भूयो भूय इमे वसन्तमरुतश्चेतो नयंत्यन्यथा,
गच्छ क्षेमसमागमाय निपुणं रक्षन्तु ते देवता: ॥

नायिकया दूती नायकसमीपं प्रेषणीया । परन्तु सापि दूती युवती । नायकश्च युवा चञ्चलश्च । संकेतस्थाने प्रतीक्षा क्रियते नायकेन । दूत्या सह प्रेषणीय: संदेश: अत्यन्तनिगूढ: । कामवर्धका: वसन्तमरुत: वान्ति । सर्वत्राप्यन्धकार: । एतादृशे समये दूतीसंप्रेषणपरिणाम: क: भविष्यतीति न ज्ञायते । परन्तु संदेशस्तु अवश्यं प्रेषणीय: । किं वा कर्तव्यमिदानीमिति चिन्तयन्ती अन्ते दूतीमाहूय 'हिताय मे गन्तव्यं त्वया, देवता: त्वां रक्षंतु' इति ब्रूते नायिका ।

श्लोकेऽस्मिन् विरहविदग्धाया: नायिकाया: आन्तरिकतर्कवितर्का: कवयित्र्या सम्यक् प्रदर्शिता: । इत्थं शीलाभट्टारिकाया: कविता धाराशुद्धियुता संगीतगुणशालिनी भूत्वा नितरां शोभते ।

## कुर्गीयः अनन्नाससूपः

राजकुमारी कृष्णप्रिया

सामग्री—५०० ग्रामपरिमितमेकं अनन्नासफलम्, ६ लोहितमिर्चफलिकाः, १ पृथुचमसपरिमितं धान्यम्, १ पृथुचमसपरिमितं धृतम्, १/२ पृथुचमसपरिमिः गुडः स्वादानुसारं लवणम्।

विधिः—लोहितमिर्चफलिकाः धान्यकं च जलेन सह पेषयेत्। अनन्नासफलं गोलरूपेण कर्तयेत्। पलाण्डुमपि पेषयेत्। एकस्मिन् कटाहके धृतम् उत्ताप्य तस्मिन् पलाण्डुफलं भर्जयेत्। तदनु तत्र अनन्नासखण्डान् पिष्टोपस्करं च प्रक्षिप्य पेषयेत्। ५ मिनटानन्तरं गुडं प्रक्षिपेत्। स्वादानुसारं लवणं यथेष्टं जलं च प्रक्षिप्य पाकं कुर्यात्। मन्दाग्नौ सूपस्य (कढ़ी के इति भाषायां) गाढताप्राप्तिं यावत् पाढ करणीयम्।

## मद्रासीयम् कृसरौदनम्

सामग्री—१/२ कंसपरिमितः बासतीतण्डुलः, १ नारिकेलफलम्, १ लघुचमसपरिमितं जीरकम्, १ कंसपरिमिता गोजिह्विकाखण्डाः, १/५ चमसपरिमितं हरिद्राचूर्णम्, २ हरितमिर्चफलिके, १ इंचपरिमिताः आर्द्रकखण्डाः, ४ लशुनकलिकाः, २ पृथुचमपरिमितं तैलम्, १/४ कंसपरिमितं कर्तितं हरितधान्यकम्, स्वल्पं कलायम्। स्वादानुसारं लवणम्।

विधिः—१० मिनट यावत् तण्डुलं जलेन आर्द्रीकृत्य चालन्या छालयेत् यतः जलं निस्सरेत्। कूष्माण्ड-कर्षकोपरि नारिकेलं संघृष्य दुग्धं निस्स्रावयेत्। तदनु लशुनं हरितमिर्चं च सूक्ष्मपेषं पेषयेत् एकस्मिन्। कटाहके तैलं तापयेत्। ततः तैलं जीरकेण भावयेत् नदनन्तरं तस्मिन् पिष्टम् उपस्करद्रव्यं (मसाला इति भाषायाम्) प्रक्षिप्य सम्यक्तया पेषयेत्। यदा उपस्करद्रव्यतः तैलं प्रस्रवेत् तदा गोजिह्विकाखण्डान् प्रक्षिपेत्। किंचित्कालं यावत् भर्जयित्वाहरिद्राचूर्णं प्रक्षीयेत्। पुनश्च किंचिद् भर्जयित्वा तण्डुलं प्रक्षिपेत्। तदनु ७-८ मिनटं यावत् भर्जनानन्तरं हरितकलायान् नारिकेलदुग्धंच प्रक्षिपेत्। ततः स्वादानुसारं लवणं प्रक्षिप्य पचनिकाम् आच्छादयेत्। यदा तण्डुलः पक्वप्रायः स्यात् तदा आच्छादनोपरि ज्वलदंगारकाणि स्थापयेत्। ७-८ मिनटानन्तरम् आच्छादनम् अपसारयेत्। इत्थं कृसरौदनम् प्रस्तुतं भवति। परिवेषणसमये कर्तितं परितधान्यकं तदुपरि प्रक्षिपेत्।

# अनुच्चारितम्*

डॉ० केशवचन्द्र दाशः
श्रीजगन्नाथसंस्कृतविश्वविद्यालयः पुरी-७५२००२

व्याहरणमात्रमिह
मिथ्यायते कथा,
अनुच्चारितामभिव्यक्तिम्···
कवलीकरोति
स्खलनस्य भीतिः
आरतीतो रतिर्विगलति
प्रियाया रुग्णस्वप्ने
सुन्दरस्य सीमा दरिद्राति।
निवेदने कलङ्को जृम्भते
अश्रु अघ्र्यायते
चिन्तालहरीषु,
कर्मविस्मरणेऽपि कदाचिद्
अतीततो मुक्तिर्न मिलति।
शिशुपुत्रं पतनतो वारणाय
मातुश्चकितधावनमिव
समयः त्वरते
उद्धर्त्तुं वर्त्तमानसंज्ञाम्
तथापि प्रतिध्वनिः
अतीतमभ्येति।
झङ्कारो झरति जलदतः
मर्मरायितुं निर्झरस्य स्वरे
निःश्वासस्तु पीड्यते पुरतः
कामनाया ज्वरे
काकलिःजीर्यते निषिद्धकोटरे।
वृक्षतले तु च्छाया निजात्मिका····
अनुद्भूतमाबध्नाति
आनन्दस्य अभिधानलाक्षा।

* संस्कृते छन्दोरहितपद्येषु च्छायावादस्य नातिप्राचीनोऽयं प्रयोगः कवेः प्रशंसार्हः—सं०।

# मिलनसेतुः

**डॉ० भक्तिसुधामुखोपाध्याया**
भू० पू० रीडर (संस्कृतम्) का० हि० वि० वि० वाराणसी

**पञ्चमोऽङ्कः**

(गताङ्कादनुवर्तते)

[ **गताङ्के**—सुनन्दा जयां सूचयति यं सा प्रीणाति स्म तस्य नाम सुव्रत इति । सुव्रतः जयायाः पतिः एव । जया तं त्यक्त्वा आगता । सुनन्दा सुव्रतस्य जयामात्रप्रीतिं जयां बोधयति क्षमां याचितुं च तां तस्य समीपे प्रेषयति । इतः परम्...... ]

(ततः प्रविशतः सुव्रतस्य कलिकातास्थभवनकक्षे आसनस्थौ जयन्तीसुव्रतौ)

**जया**—बहुधा सन्तापितोऽसि मया । ममापराधानां क्षमा कृता किम् ? तवाकृत्रिमं प्रेम, प्रगाढस्नेहः, अमर्षशून्यतैव च आवयोः पुनर्मिलनसुखहेतुः । बहुशस्त्वामन्यविधं मत्वा कठोरायाः कठोरतरा संजाताऽहम् । तव स्नेहे नासीत् प्रतिक्रिया मम दुर्व्यवहारस्य ।

**सुव्रतः**—कथं विगतं चिन्तयसि ? मम हृदयस्य खाण्डवदहन-ज्वालां शमयित्वा यदि पुनर्मिलितासि तत् कथमतीतमधिकृत्य आलपसि ? जाने मत्सदृशोऽभाग्यवान् नास्ति भूतले । अर्धाङ्गिन्यसि मम पार्श्वं परित्यज्य मा पुनर्गच्छ । भृशं सन्तापितोऽस्मि दैवहतकेन । अधुना त्वां प्राप्य स्वर्गसुखमपि न कामये । (हस्तेन हस्तं गृहीत्वा) जये ब्रूहि, देहि मे वचनं मां परित्यज्य न पुनर्गमिष्यसि इति ।

**जया**—समाश्वसिहि, जीवितसर्वस्व, समाश्वसिहि । मृत्योरन्यः कोऽपि तव जयां त्वत्तः दूरीकर्तुं न शक्ष्यति । न जाने कियता सौभाग्येन पापिन्या मया त्वं प्राप्तः, किन्तु महामानपूरितया मया मर्षहेतोर्निष्ठुरमाचरितं, मर्मच्छेदकर्यो वाचोऽप्युच्चारिताः । सुतीक्ष्ण-वाक्शङ्कुभिस्त्वामाहत्य स्वयमपि नितरां पीडितासम् । तत्पीडया अद्यावधि पीडिताऽस्मि क्षमस्व मामपराधिनीम् ।

**सुव्रतः**—अलमेवंविधेन वाक्येन, ममापराधोऽपि नाल्पः । अपराधस्य चतुर्गुणं प्रायश्चित्तमपि कृतम् । सदैव हृदयदावदाहेन नितरां सन्तप्तोऽहं कदापि निर्वृतिं न लब्धवान् । त्वत्सकाशं गत्वा मर्मपीडां लघयितुमपि नासं साहसिकः । पितृव्यमरणस्य पश्चाद् वारं वारं पत्राणि प्रेषितवान् । किन्तु सर्वं विफलम् । दैवयोगात् बोटानिक्यालोद्याने त्वां दृष्ट्वा धावन्नागतः । किन्तु दुर्भाग्य...... ।

**जया**—विरम, विरम । वज्रकठोरहृदयाहमासम् । परिणामे हृदयज्वालया नितरां दग्धा । मां दृष्ट्वा अद्य प्रभृति सर्वा नार्यः शिक्षन्तु—

कोमलहृदया नारी साकरुणा शरीरिणी ।
अभिमानं न संश्रयेत्स मूलं परमापदः ॥

पाषाणमय्येवासम् । अद्य मे हृदयपाषाणं भित्वा निरुद्धः स्नेहः निर्झररूपेण प्रवाहितः । मम प्रेमनिर्झरिणी तव स्नेहसागरेण मिलित्वा सफलीभवतु ।

सुनन्दया मम महानुपकारः कृतः । तां विना अद्य एतस्य सुखस्याधिकारिणी कथं भवेयम् ?

**सुव्रतः**—सत्यं सा मे सोदराधिका । अद्यैतावत् सुखं प्राप्यापि मम हृदये तस्या हेतोरेकः शङ्कुः वर्तते । मुग्धा सा मामन्यथा चिन्तयित्वा स्वात्मसुखं चिराय विसर्जितवती । तया चिरकौमार्यव्रतं गृहीतं, जननी तस्याः परमदुःखिना । अहमेव तस्या आत्मोत्सर्गस्य कारणमिति चिन्तयतो मम निरतिशयं दूयते आत्मा ।

**जया**—एहि, वाराणसीं यावः । भगिनीं सुनन्दामसम्भाव्य कथमहं गृहसुखम् अनुभविष्यामि ? सैवास्माकं मिलनसेतुः । तथाहि—

सर्वत्र राजतां सौख्यं क्लेशलेशो न कुत्रचित् ।
आस्ते मिलनसेतुश्चेत् सुतरां मानवारिधिः ॥

(निष्क्रान्तौ) यवनिकापातः ॥



# एकता परेड

हम सब, पुरुष, स्त्री और बच्चे हिन्दू, मुसलमान, सिख, ईसाई, बौद्ध, जैन, पारसी.... पूरब, पश्चिम, उत्तर, दक्षिण से हजारों की संख्या में, गणतंत्र दिवस समारोह में शामिल होते हैं।

और एक बार फिर प्रदर्शित करते हैं अपनी एकता की भावना।

जाति, धर्म, क्षेत्रीय और भाषायी बंधन तोड़ने के लिये समर्पित करते हैं अपने आपको, और करोड़ों भारतीयों के उत्थान के लिये प्रेरणा देते हैं पूरे राष्ट्र को।



**एकता परेड की इस भावना को सफल बनायें एक जुट होकर आगे बढ़ें**

डीएवीपी 90/751

# भारतवर्षे संस्कृतस्य अनिवार्यता

डॉ० रेखा शर्मा

The Sanskrit word for a scientific work is Śastra the same word is used to denote also any branch of knowledge. Hence Śastra probably means with text book as also science śastra may be either a scientific work or a theological treatse—wintemitz.

सम् उपसर्गपूर्वक-कृ-धातोः निष्पन्नोऽयं 'संस्कृतम्' शब्दः भाषाया अस्याः प्रकृति-प्रत्ययादि-संस्करणाधानत्वं स्फुटं सूचयति। परिष्कृतं परिशुद्धं व्याकरणादि-दोष-रहितं यत् तत् संस्कृतम् मतम्। निरुक्तकारो यास्कः संस्कृतं भाषा (व्यवहारभाषा) इति निरुपयति। सैव देवभाषा, देववाणी, गीर्वाणवाणी इत्यादिभिः नामभिः व्यवह्रियते।

**संस्कृतस्य प्रचारार्थं प्रसारार्थञ्च इदम् आवश्यकं यत् सर्वेषामपि प्रमुखानामुपयोगिनां संस्कृतग्रन्थानां न केवलं भारतीयास्वेव भाषासु प्रामाणिकोऽनुवादः स्यादपितु विश्वस्य सर्वास्वेव प्रधानासु भाषासु तेषामनुवादो भवेत्।**

संस्कृतभाषेयं सर्वास्वपि विश्वभाषासु प्राचीनतमा, नास्ति अत्र कश्चिद् संशयः। भारतवर्षस्य समस्तमपि प्राचीनं वाङ्मयं संस्कृतभाषायामेव वर्तते। निखिलमपि वाङ्मयं, रामायणं, महाभारतं, पुराणानि स्मृतिग्रन्थाः, दर्शनानि, धर्मग्रन्थाः, महाकाव्यानि, नाटकानि, गद्य-काव्यानि, गीतिकाव्यानि, आख्यान-साहित्यम्, गणितं, ज्योतिषं, आयुर्वेदः, धनुर्वेदः, अर्थशास्त्रम्, वास्तुकला-शास्त्रम्, राजनीतिशास्त्रम्, कोशग्रन्थाश्च संस्कृत-भाषाया गौरवम् अभिवर्धयन्ति। ज्ञानविज्ञानस्य न तादृशः कोऽपि अङ्गः यः संस्कृतभाषायां न उपलभ्यते।

भाषणाद् हि भाषा भवति। कस्याश्चिद् भाषायाः महत्त्वं द्वयोः तथ्ययोः आधारे स्थितं भवति। तयोः एकं तु तथ्यम् इदं यत् तस्याः भाषायाः वाङ्मयं कीदृशं वर्तते अपरं च तथ्यम् इदं यत् सा भाषा स्वयं कीदृशी अस्ति। इत्यं कस्याः अपि भाषायाः महत्त्वं स्वप्रतिपाद्याधारकं स्वाधारकं च भवति। संस्कृतभाषाया महत्त्वं न केवलं भारतीयैरेव अपितु पाश्चात्यैरपि स्वीक्रियते। उक्तं च—

साऽमर-भारती लोके भारते भातु नित्यशः।
यस्या दिव्य-प्रभावेण भारतं भारतं मतम्॥

भारतेऽपि जन्म लब्ध्वा यो मानवः संस्कृतं न जानाति सः कीदृशो भारतीयः? एतादृशान् भारतीयान् दृष्ट्वा विदेशीयाः आश्चर्यं कुर्वन्ति। Without Sanskrit India would be nothing but a bundle of linguistic groups.

अस्ति संस्कृतभाषाऽनेकवैशिष्ट्यशालिनी। तत्र सा संस्कृतिमन्दाकिनी प्रवहति यया मानवता जीवन-मश्नुवाना सततमुपचयमधिगच्छति। **मैक्डानल**-महोदयस्य मतानुसारं समग्रसभ्यताया मूलं संस्कृत-वाङ्मये एव निहितम्। भारोपीयपरिवारे संस्कृतभाषैव प्राचीनतमा तन्मूलकः एव भाषाविज्ञानस्य उद्भवः परिणामतः तुलनात्मक-भाषाविज्ञानस्य प्रादुर्भावः जातः। अतएव मैक्डानलः कथयति—The discovery of the Sanskrit language led to the foundation of the science of comparative philology, an acquaintance with

the literature of the Vedas resulted in the foundation of the science of comparative mythology.

यद्यपि भाषाविज्ञानस्य भाषाशास्त्रस्य च वर्तमानं स्वयम् आधुनिकमेव तथापि भारतवर्षे वैदिककालाद् आरभ्य भाषाविषयकं चिन्तनं, विवेचनं, विश्लेषणं चोपलभ्यते। वेदेषु भाषाविज्ञानसंबद्धा निर्वचनादयः प्राप्यन्ते। यजुर्वेदे सर्वप्रथमं विश्लेषणार्थे व्या+कृ धातोः प्रयोगः उपलभ्यते। संस्कृतं खलु भारतीयाधुनिक-प्रान्तीय-भाषाणामपि जननी। साम्प्रतम् अस्या ज्ञानादेव प्रान्तीय-भाषाणां सम्यग् ज्ञानं भवितुमर्हति। मैक्स-मूलरमहोदयेन सत्यम् उक्तम्—The greatest language in the world the most wonderful and the most perfect.

शब्द-कोश-दृष्ट्या एषा अतीवोच्चतमं पदमधितिष्ठति। वर्णमाला-लिपि-दृष्ट्या एषा भाषा वैज्ञानिकी वर्तते। उच्चारण-दृष्ट्या आंग्लभाषायां लिख्यतेऽन्यत् पठ्यते चान्यत्—But बुट लिख्यते पठ्यते बट। Walk वाल्क लिख्यते उच्चार्यते च वॉक, Right रिघट लिख्यते उच्यते च राइट। परं संस्कृत-भाषायां यल्लिख्यते तदेव उच्चार्यते। पाश्चात्य-विद्वांसः अस्या एतादृशीं परिपूर्णां दशां विलोक्य अस्या अध्ययनाय प्रवृत्ताः। विण्टरनिट्ज-मैक्डानल-मैक्समूलर-कीथ, वेवर इत्यादयो विद्वांसः संस्कृतमधीत्य अस्या गुणगण-महिमानमुपवर्णयन्तोऽमरत्वमुपगताः।

धन्योऽयं भारतं देशः धन्येयं सुरभारती।
तत्पूजकाः वयं धन्याः अहो! धन्या परम्परा॥

संस्कृतभाषा एव मानवसंस्कृतेः प्राचीनतमस्य स्वरूपस्य प्रकाशिका वर्तते तस्याम् एव च भारतस्य सांस्कृतिकं जीवनं निहितं वर्तते। षोडश-संस्काराः गर्भाधानादारभ्य अन्त्येष्टिपर्यन्ताः सन्ति। ते च संस्कृतभाषायामेव उपनिबद्धाः सङ्कलिता वा। इत्थं सांस्कृतिक-दृष्ट्या संस्कृतभाषा अनर्घा श्रेष्ठा च। विश्वसाहित्ये संस्कृतभाषायाः श्रेष्ठतमं स्थानमस्ति—

संस्कृते संस्कृतिर्ज्ञेया संस्कृते सकलाः कलाः।
संस्कृते सकलं ज्ञानं संस्कृते किन्न वर्तते॥

आधुनिक काले विज्ञानं यानि तथ्यानि प्रकाशयति तानि सर्वाण्यपि अस्माकं संस्कृतसाहित्यस्य वेदवाङ्मये पूर्वमेव निहितानि सन्ति। यथा हैलीकोप्टरः पुष्पक-विमानरूपे मिसाइलादयः च अग्निबाणरूपे आसन्। अद्यापि चिकित्सायाः क्षेत्रेऽपि यानि अनुसन्धानानि जातानि तानि सर्वाण्यपि अथर्ववेदे सन्ति। वर्तमान-काले आयुर्वेदस्य या महती उपयोगिता वर्तते तत्रापि अस्माकं सुविदित—आचार्यचरकवाग्वाटसुश्रुतादयः आचार्या मूलम्। रोगाणां निवारणे आधुनिक-चिकित्सकाः तेषां पद्धतीनाम् अनुकरणं कुर्वन्ति।

संस्कृतवाङ्मये मानसरोगाणां वर्णनमपि प्राप्यते यस्य आधुनिकमनोविज्ञानम् अनुकरणं करोति। इत्थं सर्वेषाम् उन्नतेः साधनानि संस्कृत-वाङ्मये एव निहितानि सन्ति। वेदस्यानुशीलनेनैव मानवा लौकिकं पारलौकिकं वाऽभ्युदयं साधयन्तो जीवनं सर्वविधसमुन्नतिशीलं विधातुं शक्नुवन्ति। च्यवनकविनिर्मितम् औषधं च्यवनप्राशरूपेण चिकित्सकैः प्रयुज्यते।

संस्कृतभाषायाः बहवः शब्दाः अन्याभिः भाषाभिः गृहिताः सन्ति। यथा संस्कृतभाषायां प्रयुक्तः 'स्वेद' शब्दः आंग्लभाषायां गृहीत्वा Sweat कृतः। उर्दू-पंजाबी-भाषानाम् अनेके शब्दाः संस्कृतादेव गृहीताः सन्ति।

यदि भारतस्य सर्वाङ्गीणा समुन्नतिः काम्यते सर्वसुखदो विकासश्च अभिलष्यते तर्हि संस्कृतस्य प्रचारः प्रसारश्च नितरामनिवार्यः। संस्कृतभाषा-परित्यागेन भारतं स्व-स्वरूपेण हीनं भविष्यति। तस्याः प्रतिपाद्यं व्याकरणं महत्त्वरूपं वस्तु सत् जगतः निधिः वर्तते। धर्मार्थकाममोक्षात्मकपुरुषार्थचतुष्टयस्य साधनं संस्कृताध्ययनादेव। सेयं संस्कृतिरजस्रं रक्षणीया, पालनीया परिवर्धनीया च। तस्याः संस्कृतेः समुद्धाराय अवबोधाय च संस्कृतज्ञानमनिवार्यम्।

(शेषांशः ३६ पृष्ठे)

# प्रदूषण-समस्या

-- डॉ० वा० का० क्षीरसागरः
सुपरिण्टेण्डेंट,
तैलङ्ग मेमोरियल होस्टेल, चर्चगेट, मुंबई ४०००२०

इदानीं यत्र तत्र सर्वत्र प्रदूषणसमस्याविषयकः विचारः चर्चा वा सातत्येन दरीदृश्यते। एकविंशतितमे शतके जगतः परिस्थितिः किंविधा भवेत् इति आशङ्कया शास्त्रज्ञाः, सामाजिकधुरीणाः, नेतारः विद्वांसश्च भयग्रस्ताः वर्तन्ते। यतः निसर्गः मानवश्च एतयोः यः स्वाभाविकः समतोलः, स एव अधुना विघटितः, यस्य वशात् सम्पूर्णमपि मानवजीवनमेव अद्य सङ्कटग्रस्तम् इति चेत् उच्येत न सा अतिशयोक्तिः भवेत्। अत एव जागतिकस्तरे 'वसुन्धरा-संरक्षण-दिनोत्सवः' अधुना प्रतिवर्षम् सम्पाद्यते। अतः प्रदूषणविषये ये केचन विचाराः मदीये मनसि समुद्भूताः, तान् विचारान् लेखे अस्मिन्, समाविष्टान् करोमि।

अयं प्रदूषणप्रश्नः प्राधान्येन औद्योगिक्याः क्रान्तेः अनन्तरम् एव उद्भावितः इत्यत्र नास्ति संशयः। औद्योगिक्या क्रान्त्या इदं सिद्धं यत् निसर्गम् अपरिमिततया लुण्ठितुं वयं शक्ताः। प्रथमे तथा द्वितीये महायुद्धे नैकेषां वस्तूनाम् आवश्यकता बृहति प्रमाणे अनुभूता। लोकसंख्या अपरिमिता वर्धिता। तथा वैद्यकीयं ज्ञानमपि विकसितम्। तस्मात् मृत्युप्रमाणं संकोचितम्। प्रतिदिनवर्धमानलोक-संख्यायाः कृते आवासभूमेः आवश्यकता, आवसभूमेः कृते वनच्छेदः अपरिहार्यः। वनच्छेदवशात् इयम् आपत् समागता। वनच्छेदात् पशुहत्या पक्षिनाशः च उपोद्बलकौ। अयं विशेषः मनुष्यमात्रस्य अन्यप्राणिमात्रस्य च यत् मनुष्यसंख्या येन वेगेन वर्धते न तथा अन्यप्राणिसंख्या। अन्यच्च अन्यप्राणिभिः वातावरणं प्रदूषितं कृत्वा पर्यावरणसमस्या न निर्मिता यथा मानवेन। 'जीवो जीवस्य जीवनम्' इति तत्त्वं अन्यप्राणिभिः यथा निष्ठया भक्त्या समाचरितं न तत् तया एव निष्ठया भक्त्या वा मानवेन आचरितम् इति दाहकं सत्यम्। भक्षकः प्राणी भक्ष्यं जीवयति। 'जीव जीवय च' इति अन्यप्राणिनां तत्त्वप्रणाली। यदि तृणाभावः तर्हि हरिणाभावोऽपि इति निसर्गनियमः।

एवं पर्यावरणशास्त्रज्ञानां मानवनिसर्गयोः नैसर्गिकः असमतोलः मानवजीवने विपरीतपरिणामकारी। अस्मात् असमतोलात् पर्यावरणं प्रदूषितं भवति। तच्च पर्यावरणप्रदूषणं त्रिधा भवति।

**वायुप्रदूषणम्—**

प्रथमं तावत् वायुप्रदूषणं विचारयामः। जागतिक्याः आरोग्यसङ्घटनायाः मतेन एतत् वायुप्रदूषणं प्राधान्येन यन्त्रोद्योगप्रधानेषु मुम्बई-लन्दन-लास एञ्जेलिसेत्यादिषु महानगरेषु दृश्यते। एतेषु महानगरेषु यन्त्रशालातः यः रासायनिको धूमः वातावरणं प्रविशति तस्य विपरीतः परिणामः मानवीयजीवने भवति। मानवशरीरेषु कर्करोगहृद्रोगादयः रोगाः प्रसरन्ति। पङ्गुत्वकाणत्वान्धत्वादिविकृतयः जन्मनः प्रभृति एव उद्भवन्ति। अस्य रासायनिकधूमस्य विपरीतः परिणामः वृक्षेषु, शाकेषु, पुष्पेषु च भवति। तेषां वृद्धिः खण्डिता भवति। गृहेषु तथा प्रासादेषु अपि एते विपरीताः परिणामाः भवन्ति। या सञ्चिता उष्णता वातावरणात् न निर्गच्छति सा पृथिव्यामेव एकत्रिता भवेत्। समस्ता पृथिवी एव एकं काचभवनं भवेत्। अनया एकत्र सञ्चितया उष्णतया पृथिव्याः तापमानं वर्धेत।

अनेन सकलामपि पृथिवीम् अभितः यः वर्तुलाकारः ओझोनवायुस्तरः वर्तते यस्य वशात् पृथिवीस्थितं

प्राणिमात्रं जीवति स ओझोनस्तरः एव कालान्तरेण विरलतरलो भविष्यति। शास्त्रज्ञानां मतेन तदा पृथिव्याम् आम्लपर्जन्यः रसायनपर्जन्यो वा स्यात्। तेन वृक्षाः मत्स्याः च म्रियेरन्। यदि आणविकं युद्धं भवेत् तर्हि अणुस्फोटेन एते विपरीताः परिणामाः शीघ्रमेव भवेयुः। अणुस्फोटप्रसृतधूमपटलं सूर्यप्रकाशं विरुन्ध्यात् ततश्च हिमपर्जन्यो भवेत्।

**जलप्रदूषणम्—**

सैव कथा जलप्रदूषणस्य। महानगरेषु यन्त्रालयेभ्यः औद्योगिककेन्द्रेभ्यः यः पारदः तथा इतराणि रसायनानि नदीषु सागरे वा मोचितानि तैः अपि नदीजलं सागरजलं वा प्रदूषितं भवति। एतेषां सूक्ष्मरसायनानां वशात् बहूनां रोगाणां अतिसारसंनिपातज्वरादिकानां प्रादुर्भावो भवति इति शास्त्रज्ञानां मतम्।

**ध्वनिप्रदूषणम्—**

ध्वनिप्रदूषणम् अपि तथैव भयावहम्। महानगरेषु योऽयं तैलशकटानां करालो ध्वनिः उत्पद्यते तस्य विपरीताः परिणामाः अद्य अनुभूयन्ते। एतद्ध्वनिप्रदूषणवशात् कर्णबधिरता, हृद्रोगः, भयगण्डः, निद्रानाशः, अन्याश्च विकृतयः समुत्पद्यन्ते। कुत्रचित् कार्यक्षमतायाम् अपि विपरीतः परिणामः दृश्यते।

एवं वायुजलध्वनिप्रदूषणवशात् पर्यायेण पर्यावरणप्रदूषणवशात् पृथिवीस्थितायाः मानवजातेः या हानिः भवेत् तस्य संक्षेपेण दिग्दर्शनं कृतम्। अधुना एतत्प्रदूषणप्रतीकारार्थं के उपायाः योजनीयाः कथं वा तस्य प्रतीकारः कर्तव्यः इति दृशा विचार्यमाणे अधोलिखिताः केचन उपायाः नयनगोचरीभवन्ति।

(१) वनीकरणप्रस्तावः—लोकसंख्याया वृद्धेः वशात् वनोच्छेदः निवासस्थानार्थम् आवश्यकः, वर्धितायाः लोकसंख्यायाः कृते इन्धनम् आवश्यकम्। अतः वनोच्छेदः अपरिहार्यः। वृक्षोच्छेदवशात् पर्जन्यसंकोचः। अतः वनीकरणं नितरामावश्यकम्। इन्धनपर्यायो नाम विद्युदूर्जानिर्मितिः। विद्युतदूर्जानिर्मितिः प्रदूषणं लघूकरिष्यति।

(२) शून्यलोकसंख्यावृद्धिः—यदि लोकसंख्यावृद्धिः नियन्त्रिता नियमिता वा तर्ह्यपि प्रदूषणसमस्यायाः समाधानं भवेत्। अथवा अवकाशे नवनगरनिर्मितिः करणीया। किन्तु वयम् इह पृथिव्याम् अधुना गगनचुम्बिप्रासादान् निर्मिमीमहे। परन्तु एतादृशाः गगनचुम्बिनः प्रासादाः वातान् रुन्धन्ति।

(३) पर्यायीन्धननिर्मितिः—प्रदूषणकारि-पेट्रोल-डिजलादि खनिजतैलापेक्षया किमपि पर्यायि इन्धनं विद्युदूर्जावलम्बि सौरोर्जावलम्बि वा यदि निर्मितं स्यात् तेनापि प्रदूषणसङ्कटं महति प्रमाणे परिहृतं स्यात्।

(४) कीटनाशनोपयोगः परिहर्तव्यः—यानि कीटनाशनानि अद्य उपयुज्यन्ते तानि भुक्त्वा पक्षिणः पशवश्च म्रियन्ते प्रदूषिताः वा भवन्ति। क्वचित् एतानि कीटनाशनानि भूम्या संमिश्रितानि अन्ते दुग्धद्वारा धान्यद्वारा वा मानवशरीराणि विशन्ति। अत एव एतेषां कीटनाशनानामपि उपयोगः मर्यादितः यदि भवेत् तर्हि तत् मानवजातेः हितायैव स्यात्।

एवं प्रदूषणसमस्यायाः विचारः अस्मिन् लघुनि लेखे संक्षेपेण कृतः। पृथिवीस्थितायां सकलायामपि मानवजातौ इयं प्रदूषणापद् आपतिता। यदि सत्यमेव वयं 'वसुधैव कुटुम्बकम्' इत्यस्मिन् तत्त्वे दृढं विश्वसिमः तर्हि वसुन्धरायाः अस्याः प्रदूषणात् संरक्षणार्थं वयं बद्धपरिकराः स्याम।

# सपादिका[1] मधुमासस्य !

मिश्रोऽभिराजराजेन्द्रः
प्रयागविश्वविद्यालयीयः

मधुगन्धवशीकृतपानकलम्पटभृङ्गनिकायसमाकलिता
[2]पुरुहूतदिगागतगन्धवहेरितपल्लवसञ्चयसञ्चलिता ।
ददृशे यदरालरसालवनी प्रतिशाखमनारतमञ्जरिता
बुबुधे सहसैव तदा धरणी-'मधुमासकथा पुनरापतिता' ॥१॥

भुवि यावदिहोपससार जगत्त्रयजेतृमनोजबलाधिकृतः
सततं तमहोऽभिननन्द न को जयजीववचोऽमृतकन्दलितः ?
कलमाशु चुकूज पिकोऽविकलः प्रणनर्त शिखी द्रुतिमण्डलितः
'पिहु-पीहु' इति प्ररराट मुदा ननु चातक इष्टसुखोच्छ्वसितः ॥२॥

परिणामपिशङ्गकदम्बरसालमधूकपलाशपलाशचयैः
प्रपतद्भिरियं पृथिवीरमणी विललास लसत्पटवासमयैः[3] ।
यकृदाकृतिपुष्पकदम्बकशोभितकिंशुककाननमात्तभयैः
परितोऽपि दहन्मदनज्वलनैर्ददृशे परिवारितमूर्ध्वरयैः ॥३॥

गृहदेहलिकाऽजिरपत्रिविटङ्क[4]महानस[5]गोपुरपण्यगृहे
तटिनीपरिखागिरिनिर्झरकूपनिपानपयोधिसरिन्निवहे ।
कृमिकीटपतङ्गचतुष्पदखेचरवारिचरेऽथ जनप्रवहे
क्व न हन्त समाक्रमतेऽद्य वसन्त उपेत्य मदं विरहेऽविरहे ॥४॥

विविधैस्सुमनोभिरशेषवनी कमनीयतमां द्युतिमातनुते
नवपल्लविनी गिरिजा व्रतती गिरिजश्च तरुश्छविमुच्चिनुते ।
द्रुमपर्णनिरन्तरताऽन्तरितार्कमयूखवटश्श्रियमाश्रयते
निखिलं भुवनं परिवर्तयते मधुमाधवमास इहाक्रमते ॥५॥

---

१. सवैया इति भाषायाम् । २. पुरुहूतदिग्-पूर्वदिशा । ३. पटवासः—पिष्टातः (सुगन्धोपेतं चूर्णम्) ।
४. विटङ्कम्-कपोतपालिका । ५. महानसम्-रसवती (पाकशाला) ।



४

[1]पिचुमन्दतले [2]कलविङ्कततिस्सविलासकलं समुपैति रतिं
दयितामुपलालयते च शुकश्चलचुङ्कृतिसौम्यविलोलगतिम् ।
विटपाद् विटपं पतति प्रसभं कलकण्ठपिकोऽपि विरौति नुतिं
प्रसृते रतिनाथसहायपरे प्रणयी नहि कोऽनुभवेदगतिम् ॥६॥

रुचिरैव विभाति गृहे नगरे तरसा मधुमाधवमासकथा
स्थविरोऽपि समञ्चति देवरतां चटुवाचनिकः प्रमदासु यथा ।
अवलोक्य विलासकुतूहलकेलिरतान् युवकान् हतचित्तरथा
ननु वर्षवराः कलयन्ति रुजं समजायत जन्म चिराय वृथा ॥७॥

ऋजुकं [3]स्वछविल्लकदेवरमाशु विलोक्य निमीलितलोचनकं
मसिकाञ्जनकज्जलधातुचयैः कृतभण्डविदूषकरुद्रमुखम् ।
प्रहसन्ति सहेलमहो प्रमदाः स न वेत्ति रहस्यमिदं तनुकं
मुकुरे नहि यावदसौ स्वमुखं प्रविलोकयते कृतवञ्चितकम् ॥८॥

पणवानकदुन्दुभिझर्झरिकाकरतालविनोदितचारुलयैः
प्रकरो प्रतिभानवतामनिशं वृषभानुसुताहरिवृत्तचयैः ।
वसतौ ननु गायति फाल्गुनिकं विविधैश्श्रुतिपेशलरागरयैः
सति दुःखचयेऽप्यविषादयुतः खलु जीवति लोक उदारनयैः ॥९॥

मदने धृतचापशरे मधुमास इहास्ति सुखं कुशलं न सतां
भजते नहि को निरपत्रपतां क्षयमेति च मानबलं जगताम् ।
ननु निर्वसनीकृतशाखिचया विधुरा उपयान्ति वशंवदतां
शिरसा नहि को मतिमान् मनुजो वृणुते महिमानमहो महताम् ॥१०॥

रतिराग[4]विसंष्ठुलभावसृतिप्रसवेषुविकारकथाजनकौ
जननान्तरसौहृदसंस्मृतिदौ चितिमन्थसमुत्थसुधाघटकौ ।
वसुधाम्बरभोगसमिद्धरसायनपानकपानलसच्चषकौ
धृतहायनकौ धरणीकुचकुम्भनिभौ जयतां मधुमाधवकौ ॥११॥

---

१. पिचुमन्दः-निम्बः ।
२. कलविङ्कः-चटकी नाम पक्षी ।
३. स्वछविल्लकः-स्वकान्तिप्रियः ।
४. विसंष्ठुलम्-अस्थिरम् ।



# ज्ञानशिविरम्

**ऐतिहासिकम्**

१—रजिया बेगम कस्य वंशस्य आसीत् ?

| क | ख |
|---|---|
| खिलजी | गुलाम |
| **ग** | **घ** |
| मुगल | तुगलक |

२—रजियाबेगम कस्य पुत्री आसीत् ?

| क | ख |
|---|---|
| इल्तुतमिशः | कुतुबुद्दीन ऐबकः |
| **ग** | **घ** |
| फिरोज शाहः | बलबनः |

३—प्रसिद्धः संस्कृतविद्वान् दाराशिकोहःकस्य पुत्रः आसीत् ?

| क | ख |
|---|---|
| शाहजहाँ | बाबरः |
| **ग** | **घ** |
| जहाँगीरः | मुहम्मद बिन तुगलकः |

**विश्वप्रसिद्धपुस्तकानि—**

| पुस्तकनाम | रचयिता |
|---|---|
| १—बृहत्कथा | —गुणाढ्यः |
| २—विनयपत्रिका | —तुलसिदासः |
| ३—डिस्कवरी आफ इण्डिया | —पं० जवाहर लाल नेहरुः |
| ४—मैक्बैथ | —शेक्सपियरः |

**त्रैमासिकम्—**

१—विश्वनाथप्रतापसर्वकारस्य पतनं, श्रीचन्द्रशेखरः नूतनः प्रधानमन्त्री।

२—ब्रिटिशप्रधानमन्त्रिण्याः श्रीमतीमार्गेटथैचर इत्यास्या त्यागपत्रं, जानमेजरः नूतनः प्रधानमन्त्री।

३—एशिया-कप-क्रिकेट-स्पर्धायां भारतं विजयि जातम्।

४—बहुराष्ट्रियसेनायाःईराकस्योपरि आक्रमणम्।

उत्तराणि

१—ख  २—क  ३—क

**परीक्षा—**

१—वन्देमातरम् इत्यस्य लेखकः कः ?

२—महाभारते कति पर्वाणि सन्ति ?

३—भारते इक्षु-उत्पादः सर्वाधिकं कस्मिन् प्रदेशे ?

४—रादरफोर्ट इत्यस्य परमाणुविषये का मान्यताऽस्ति ?

परीक्षा—उत्तराणि, विश्वभाषाकार्यालये प्रेष्यन्तां, विजेतुः नाम प्रकाशयिष्यते—सं०।

# लौहगोलकप्रक्षेपणम् (SHOT-PUT)

कु० मिताली देव
संस्कृत विभागः, का० हि० वि० वि०

अथातः लौहगोलकप्रक्षेपणं व्याख्यास्यामः—

मृत्स्नासुधां सपदि मोदकवत्समोद-
मापीय सोदकमहो सखिभिः स खेलन् ।
पृष्टः पुनः ननु यशोदयया मुखे स्वे
सन्दर्शयन् भुवनगोलमसौ पुनातु ॥१॥

तल्लोकगोलकमिदं शिरसीह बिभ्रद्
योऽसौ विडम्बयति सर्षपबिन्दुशोभाम् ।
शेषोऽप्यशेषमहिमा हृदये मुकुन्दं
ध्यायञ्जयेच्छिवगलाऽभरणैकलक्ष्मीः ॥२॥

**भूमिका—**

अस्ति वैज्ञानिकविषयः लौहगोलकप्रक्षेपणं लौह-कन्दुकप्रक्षेपणं वा, यस्य क्रीडनाय शारीरिकक्षमतायाः महती आवश्यकता ।

**अस्य इतिहासः—**

इतिहासज्ञानां मते कन्दुकप्रक्षेपणस्य आधुनिक-स्वरूपाविर्भावः संयुक्तराज्यअमेरिकायाम् अभवत् । परं तु अन्येषाम् इतिहासविदां मतानुसारेण इयं खेला-परम्परा आयरलैण्डदेशात् अमेरिकाम् आगत्य विकासं लब्धवती । गोलकप्रक्षेपणं शिलाप्रक्षेपणात् आविर्भूतम् इति प्राचीनैतिहासिकाः । यूनानदेशस्य (यवनस्य) प्रसिद्ध-'ओडसी' महाकाव्ये भारक्षेपणस्पर्धा इति, रामायण आर्षग्रन्थे च कपिगणैः शिलायुद्धस्य स्पष्टोल्लेखः अस्ति । मन्ये, 'ओडसी' 'रामायण' महाकाव्ययोः वर्णितम् इदं शिलाप्रक्षेपणम् एव आधुनिकक्रीडापरम्परायाः 'गोलकप्रक्षेपणस्य' पूर्वरूपम् ।

**गोलकस्य स्वरूपविचारः—**

अस्यां प्रतिस्पर्धायाम् एकं भारयुक्तलौहगोलकं स्वसामर्थ्यानुसारम् दविष्ठैः यथाविधि प्रक्षिप्यते । गोलकस्य भारः पुरुषक्रीडकानां कृते ७.२६ किग्रा महिलाक्रीडकानां कृते च ४ किग्रा । इदं गोलकं चक्राकारवृत्तस्य सप्तगजपरिमितव्यासयुक्तपरिधेः प्रक्षिप्यते (गज=फीट) । अस्य वृत्तस्य द्वौ समानौ भागौ । अस्मात् केन्द्रात् $2\frac{1}{2}$ गजपरिमिते दूरे एका पदावरोध-पट्टिका वर्तते, यस्य अन्तरा क्षेपणकार्यं सम्पद्यते ।

**प्रक्षेपणप्रकाराः—**

कन्दुकप्रक्षेपणस्य बहवः भेदाः सन्तिः । प्रमुख-भेदानां मूलविधिः निम्नलिखितप्रकारेण अस्ति—

१—हस्ते गोलकधारणम् (चित्र संख्या-१)
२—गोलकस्य मूलस्थितिः (चित्र संख्या-२)
३—प्रक्षेपणक्रियारम्भः (चित्र संख्या-३)
४—विसर्पणकलाविशेषः (चित्र संख्या-४)
५—प्रक्षेपणप्रक्रिया (चित्र संख्या-५)
६—गोलकत्यागप्रक्रिया (चित्र संख्या-६)
७—पृष्ठाघातपदपरिवर्तने च (चित्र संख्या-७)
८—शरीरस्य सन्तुलनप्राप्तिः (चित्रसंख्या-८) ।

**यान्त्रिकसिद्धान्तः—**

उपर्युक्तवैज्ञानिकप्रक्रियोपजीवकगोलकप्रक्षेपस्य बहवः विधयः वर्तन्ते, येषु त्रयः एव प्रमुखाः ।




गोलकप्रक्षेपणकलायां–यान्त्रिकसिद्धान्तस्य ज्ञानम्, पेशीतन्त्रीयकार्याणां ज्ञानम्, गतिविज्ञानस्य नियमानां समुचितप्रयोगः चैतत्त्रम् अतीव आवश्यकमस्ति। उपर्युक्तं त्रयमेव अस्यां खेलायां मूलमन्त्रः बीजमन्त्रः च।

**न्यूटनकृत गतिविज्ञानस्य प्रथमनियमस्य प्रयोगः—**

तत्रभवतां न्यूटनमहोदयानां गतिविज्ञानस्य प्रथमनियमानुसारेण—"कस्मिन्नपि पदार्थे गतिसम्पादनाय स्थिरत्वनाशाय च बाह्यबलारोपणम् आवश्यकम्।" इदं बाह्यबलं 'त्वरणबल' रूपेण तद्दिशायाम् एव कार्यं करोति, यां दिशाम् उद्दिश्य बलम् आरोप्यते। गोलकक्षेपणे यान्त्रिकसिद्धान्तानाम् उपयोगेन भूयिष्ठं फलं प्राप्तव्यम्।

**न्यूटनकृत गतिविज्ञानस्य द्वितीयतृतीयनियमयोः प्रयोगः**

गोलकक्षेपणे तत्रभवतां न्यूटनमहोदयानां गतिविज्ञानस्य द्वितीयतृतीयनियमौ अपि भूयिष्ठं प्रयुज्येते। अस्यां क्रियायां शारीरिकक्षमता-पेशीतन्त्रीयशक्तिः-गतिक्रिया च उल्लेखनीयाः। गोलकप्रक्षेपणस्य प्रतिविधौ विशेषतः विसर्पणनामककलायां गोलकस्य प्राथमिकस्थितिनाशः, डिस्कोपुटनामककलायां चक्राकारगत्याधारेण शरीरे कोणीय-आघूर्णः गोलके कोणीयसंवेगः च उत्पन्नाः—अयं यान्त्रिकसिद्धान्तस्य मूलप्रयोगः। एतदतिरिक्तम् अस्यां प्रक्रियायां प्रयुक्तं 'पदकार्यम्' पेशीतन्त्रसाहाय्येन 'लीवरविधेः' निर्माणं करोति। लैटिसिमसडोरसाईनामक-अङ्गस्य संकुचन-परिवर्धनेन शक्त्या एकीकरणं क्रियते। टैपिजियस-बाईसेप-ट्राइसेप-फोरआर्म-नामकानाम् अङ्गानां पेशीतन्त्राण्यपि संयुक्तरूपेण लीवरविधेः निर्माणं कुर्वन्ति। अस्यां प्रक्रियायां मणिबन्धेन कुण्डलितस्य उत्तोलकस्य अपि पूर्णसहयोगः अस्ति।

**प्रक्षेपणे गुरुत्वाकर्षणस्य महत्त्वम्—**

गोलकप्रक्षेपणे भारोत्तोलनप्रक्रियाऽपि समन्विताऽस्ति। प्रक्षेपणकलायां काश्चन साधारणप्रक्रियाः सन्ति यथा गोलकधारणम्, अङ्गुलिमध्ये गोलकधारणम्, शरीरस्य सन्तुलनावस्था, तास्ता गतीरनुसृत्यगोलकस्य स्थिरत्वं स्थावरत्वं वा विनश्य-संवेगोत्पादः, शरीरं सुष्ठु प्रकारेण सन्तुलितं कृत्वा गोलकस्य दविष्ठे प्रक्षेपः। प्रक्षेपणप्रक्रियायाः समाप्तौ दण्डनिवारणाय (दण्ड= फाउल) शरीरसन्तुलनम् अत्यावश्यकम्। प्रक्षेपणस्य प्रत्येकं सोपाने सन्तुलनभारसाम्यञ्च अवश्यम् अपेक्षितम्। शरीरस्य उचितसन्तुलनाय गुरुत्वाकर्षणकेन्द्रं व्यवस्थितं कर्त्तव्यम्।

**गतिविज्ञानस्य आधारः—**

विशिष्टकोणयुक्तप्रक्षेपणं पर्याप्तं फलं सूते इति गतिविज्ञानराद्धान्तः। अतः धरातलीयकोणस्य मानं, प्रक्षेपस्थानिककोणस्य मानं च ध्यातव्ये। साधारणतः अयं कोणः ४१°-४५° पर्यन्तं वर्तते।

**केचन सावधाननियमाः—**

गोलकप्रक्षेपणं कांश्चिद् मौलिकनियमान् अनुसरति, येन कथमपि दण्डः (फाउल) न भवति।

गोलकप्रक्षेपणे निम्नलिखिताः यान्त्रिकसिद्धान्ताः मुख्यरुपेण ध्यातव्याः—

न्यूटनमहोदयकृताः गतिसम्बन्धिनियमाः गुरुत्वाकर्षणं, गुरुत्वाकर्षणस्य सुनियोजनं, कोणीयसंवेगः, पेशीतन्त्रीयक्रियाशीलता इत्यादि।

गोलकक्षेपणे उपर्युक्तसिद्धान्तानां प्रयोगाः स्वयमेव भवन्ति। परं तु यदि कन्दुकप्रक्षेपणकर्त्ता उपर्युक्तसिद्धान्तैः सुपरिचितः तदा सः प्रक्षेपणकलायां सिद्धहस्तो भवति।

प्रक्षेपणकाले छात्राणां शारीरिकसुरक्षार्थं गोलकप्रक्षेपणस्य प्रशिक्षकोऽपि (गुरुः) अभ्याससमये तटस्थेन सावधानमनसा च तिष्ठति—शारीरिकाघातः यथा पेशीतन्त्रीयक्षतिः, लौहगोलकाघातः, रक्तस्रावः, प्रक्षेपणे चिकीर्षिते अनवधाने पाते सति पीडा आदि।

गोलकप्रक्षेपणनियमानाम् उल्लंघनं न कर्त्तव्यम्। विभिन्न यान्त्रिकसिद्धान्तान् सुष्ठु प्रकारेण अनुसृत्य परिणामः फलग्राही भवति।

**केचन पारिभाषिकाः शब्दाः—**

| | | |
|---|---|---|
| गोलकप्रक्षेपणम् | — | Shot-Put |
| वैज्ञानिकविषयः | — | Technical Subject |
| शारीरिकक्षमता | — | Physical Capacity |
| पदावरोधपट्टिका | — | Toe-board |
| गोलकधारणम् | — | Grip or Hold |
| गोलकस्य मूलस्थितिः | — | Location of Shot |
| प्रक्षेपणक्रियारम्भः | — | Initial-Stance |
| विसर्पणविधिः | — | Gliding-method |
| प्रक्षेपणप्रक्रिया | — | Throwing-movement |
| गोलकत्यागप्रक्रिया | — | Delivery |
| जडत्व | — | Stability |
| पृष्ठाघातः | — | Follow-through |
| पदपरिवर्तनम् | — | Reverse |
| सन्तुलनप्राप्तिः | — | Recovery |
| यान्त्रिकसिद्धान्तः | — | Mechanical-Principal |
| ओब्राइनविधिः | — | Obraien-system |
| विलनीडरविधिः | — | Vilnieder-system |
| पेशीतन्त्रम् | — | Muscular-system |
| बलम् | — | Force |
| बाह्यबलम् | — | External-force |
| त्वरणबलम् | — | Accelerative-force |
| कोणीयआघूर्णः | — | Angular-rotation |
| कोणीय संवेगः | — | Angular-momentum |
| पदकार्यम् | — | Foot-Work |
| भारोत्तोलनम् | — | Weight-lifting |
| गुरूत्वाकर्षणकेन्द्रम् | — | Centre of Gravity |
| धरातलीयकोणः | — | Angle at the surface |
| प्रक्षेपस्थानिककोणः | — | Angle at the throw place |
| रक्तस्रावः | — | Bleeding |
| गोलकाघातः | — | Strike or hit by the ball |

**निष्कर्षः—**

कन्दुकप्रक्षेपणं विश्वक्रीडाजगति ओलम्पिक-मान्यताप्राप्ता ख्यातिप्राप्ता च प्रतिस्पर्धा, यस्यां स्त्रीपुरूषाणां पृथक्-पृथक् प्रतिस्पर्धायोजनं भवति। गोलकप्रक्षेपणे शारीरिक-शक्तिसामर्थ्ययोः सम्मेलनं भवति। अतः विभिन्नाः यान्त्रिकाः सिद्धान्ताः अतीव उपयोगिनः। अस्याः खेलायाः लक्ष्यम्—"न्यूनतमबल-प्रयोगेन भूयिष्ठं परिणामप्राप्तिः।"

ब्रह्माण्डभाण्डमखिलं ननु शैलशालि-<br>
सिन्धूद्धतं स्वशिरसीह सदा सहेलम्।<br>
योधारयन् दशककुप्प्रसृतातिरश्मि—<br>
भास्वन्महामणिमहो विफलीकरोति॥

# चित्रपरिशिष्टम्



१



२



३



४



५



६



७

# रघुवंशमहाकाव्यम्

## (गताङ्कादनुवर्तते)

—रेवाप्रसादद्विवेदी

[गताङ्के—राजा दीलीपः स्व-सन्तत्यभावरूपं दुःखं गुरुवे निवेदयति। गुरुः योगदृष्ट्या सन्ततेरवष्टम्भकारणं कामधेनोः अवमाननं पश्यति। तस्या इदानीं पाताले वर्तमानत्वात् तत्पुत्रीं नदिनीम् आफलप्राप्तेः सेवितुम् आदिशति गुरुः। एवम् आदिष्टो राजा सपद्येव वनान्तरादागतां नन्दिनीं साक्षात्करोति। इतः परम्.......]

....तां पुण्यदर्शनां नन्दिनीमुपस्थितां दृष्ट्वा शकुनज्ञो महर्षिः निश्चिकाय 'आशंसिताय कार्याय दिलीपस्य प्रार्थना नूनमवन्ध्येति। स एनमेवमवोचत् 'राजन्! आत्मनः सिद्धिम् अदूरवर्त्तिनीं विगणय, इयं कल्याणी गौः नाम्नि कीर्त्तित एवोपस्थिते'-ति। इमां प्रसादय। भव तदर्थं वन्यवृत्तिः। स्यादस्याः शाश्वतिकमनुगमनं तव धर्मः। प्रतिष्ठेथा यदा नन्दिनी प्रतिष्ठते, तिष्ठ यदा तिष्ठति, निषीद यदा निषीदति, पिब च जलं यदा भवतितरां पीतजला। तव भार्या सुदक्षिणापि प्रातः प्रपूज्य वनं प्रस्थितामनुगमनेन, उपावृत्तां च प्रत्युद्गमनेन संभावयेदातपोवनान्तम्। प्रवर्त्तेतास्याः परिचर्येयम् आप्रसादात्। अस्ति चात्र ममाशीः अविघ्नमस्त्वति स्थेयाः पितेव पुत्रिणां धुरीति च।

गुरुवचनेनानेन सदारो दिलीपः पिप्रिये। देशकालयोरभिज्ञानवानसौ शासितुर्गुरोर्वचनमिदं विनतेन मौलिना तथेति प्रतिजगृहे। अथैनं वसिष्ठः संवेशाय विससर्ज उपस्थिता प्रदोषवेलेति। विसर्जनावसरे भूयोऽप्युदीरयामास सूनृतां वाचं 'स्वस्ती'-ति, कल्पयामास च पर्णशालायामेकस्यां वन्यामेव संविधामस्मै। वेत्ति स्म कल्पविदेष यदनयैव संपादयितुं शक्यते स्म प्रयोजनं दिलीपस्येति। प्रयतया पत्न्या सह दिलीपोऽपि कुशशयने संविश्य बटुजनस्य वेदाध्ययनध्वनिना निवेदितावसानां निशां निनाय। (प्रथमः सर्गः) ॥१॥

अथ प्रभाते सम्राड् दिलीपः पीतदुग्धं वत्सं बन्धयित्वा नन्दिनीं वनाय मोक्तुमियेष। तामिमां सुदक्षिणां गन्धमाल्यैः पूजयामास। सापि तस्याः प्रतिजग्राह पूजामिमाम्। यदा नन्दिनी वनाय प्रातिष्ठत सुदक्षिणा तामन्वगच्छत् स्मृतिरिव श्रुतिम्। क्व राजत्वम्, क्व च वन्यया वृत्त्या गोपालनम्। विषमतममिदं नितान्तमेव। न तु व्यचिकित्सेतां राजदम्पती तत्र। स्वाभाविकमिदं यशोधनानाम्। प्रजानां समन्तात् परिपालनं हि राजन्यानां स्वधर्मः। नात्र प्रगल्भेते हानिलाभौ प्रभावाय। किमन्यदतो यशस्करायेत राज्ञाम्। दिलीपो राजापि भूत्वा न विचिकित्सते गोश्चारणात्। सन्ततिद्वारा प्रजानां भविष्यत्कालिकं पालनं हि तत्र मूलम्। अहो स्वधर्मनिरतत्वं दिलीपस्येति दिशामन्तरालेषु मुमूर्च्छ स्वरः सार्वजनीनः।

यशोभिरेभिः सुरभिः सम्राडेष दयालुतया दयितां निवर्त्त्य पयोधरीभूतचतुःसमुद्रां गोरूपधारामुर्वीमिव नन्दिनीं प्रायतिष्ट गोपायितुम्। स्ववीर्यगुप्ताया मनुप्रसूतेः शरीरमन्यतोऽनुपपन्नररक्षमिति दिलीपेनानुयायिनो न्यसेधिषत। एकाकी दिलीप एकाकिनीं नन्दिनीं सेवया प्रसादयति। उपहरति स आस्वादवन्ति तृणानां कवलानि, कण्डूयति यत्र तत्र, निवारयति च दंशान् सावधानः। अस्ति नन्दिनी स्वैरगतिः, अस्ति च दिलीपोऽपि अव्याहतः। ततश्च यत्रैषा गच्छति

गर्त्ते वा उत्स्थले वा तामिमां सोऽप्यनुसरति च्छायेव। नासौ विरमति पादचारात् यदवधि नन्दिनी न तिष्ठति, न भजतेऽसौ पादक्षेपं यावन्ननन्दिनी न प्रयाति, नाभिलषति स उपवेष्टुं यावन्ननन्दिनी न निषीदति, न च भक्त्यसौ जलाभिलाषी यावन्नन्दिनी जलानि नादत्ते।

न्यस्तच्छत्रचामरादिराजचिह्नामपि लक्ष्मीं दधात्येव दिलीपस्तेजोविशेषैरनुमीयमानानुभावाम्, भासते स्म ततोऽनुद्भिन्नमदनिष्यन्द इव भद्रजातीयः स्तम्बेरमः। प्रतानोद्ग्रथितकेशोऽधिज्यचापश्च स दिलीपो दावं विचरन् विनिनीषति स्म दुष्टान् वन्यसत्त्वान् मुनिहोमधेनो रक्षाया अपदेशात्। जयति महाराज इति जयशब्दमितोन्मदानि वांसि तेषु तेषु पार्श्वद्रुमेषु तदानीमेनं प्रति समुदीरयामासुः। अग्निप्रतिमस्य तस्योपरि मरुत्प्रयुक्ता बाललताः प्रवर्षन्ति स्म प्रसूनानि लाजानिव नगरकन्यकाः। पश्यन्ति स्म तं प्रकामविस्तीर्णनयना हरिणप्रियाः निश्शङ्कम्। हिंसाप्रतीकाद् धनुषोऽपि नासीत् तासु भीः दयालुरेष इति प्रतीतभावतया। वनदेवताभिर्गीयमानान्यश्रूयन्त तत्र तस्य यशांसि मारुतपूर्णरन्ध्रेषु कीचकेषु संपादितसुषिरवाद्यकृत्येस्विव। सेवते स्म तं कम्पितवृक्षसौरभगन्धी, गिरिनिर्भराम्भःसंपृक्तश्च वायुरातपक्लान्तम्। यत् किल गाहते स्म दिलीपो वनं शाम्यति स्म तत्र दावाग्निर्वृष्टिं विनापि, भवति स्म विशेषयुक्ता फलपुष्पवृद्धि; न च बाधते स्म सत्त्वेस्वधिक रूनम्। एवं किल व्यतीयाय दिवसः। दिनावसानवेलायां पल्लवरागताम्रा पतङ्गप्रथा मुनिधेनुश्च निलयाय गन्तुं प्रक्रमते। देवतानां, पितृणाम् अतिथीनां च क्रियायै संकल्पितपयसं तामिमां नन्दिनीं मध्यमलोकपालो दिलीप एषोऽनुयाति। तेन तथैवेयमेतेन शोभते यथा विधिना श्रद्धा। पल्वलेभ्य उत्तीर्णानि वराहयूथानि, आवासवृक्षोन्मुखानि मयूरकुलानि, मृगाध्यासितानि शाद्वलजातानि च पश्यन् दिलीपो वनानां श्यामलिमानं पपौ प्रीतिकण्टकितेन चेतसा। अग्रे विपुलापीना गौः पृष्ठतश्च मांसलविग्रहो दिलीपः। ताभ्यामाभ्यामञ्चितानां पादचाराणामनुभावैर्विकीर्यते स्म शोभातिशयस्तपोवनावृत्तिपथे। उपेयिवान् अथ तपोवनोपान्तं दिलीपः। तमिमं प्रत्युदव्रजत् सुदक्षिणा। उपोषिताभ्यामिव लोचनाभ्यां दिलीपं पिबन्ती सुदक्षिणा, दिलीपः तदन्तरालवर्तिनी गौरेकत्र, अपरत्र च क्षपा, दिवसः, तदन्तरालगता सन्ध्या चेति त्रिकयुग्मं तदा परस्परमुपमातुमशक्यत समानधर्मशालित्वेन। तदुक्तं सुकविनैव—

पुरस्कृता वर्त्मनि पार्थिवेन प्रत्युद्गता पार्थिवधर्मपत्न्या।
तदन्तरे सा विरराज धेनुर्दिनक्षपामध्यगतेव सन्ध्या॥

सुदक्षिणा करपल्लवेन साक्षतं पात्रमादाय प्रत्युद्ययौ, विहितप्रणिपाता च तस्याः शृङ्गान्तरं समपूजयत् अर्थसिद्धेद्वारमिव। नन्दिन्यपि वत्सोत्सुका सत्यपि तस्यास्तामिमां पूजां प्रत्यग्रहीदेव ननन्दतुस्तौ दम्पती ततः। भक्त्या युक्तेष्वेवंविधान्येव भवन्ति भविष्यतः प्रसादस्य चिह्नानि। आश्रममुपेत्य दिलीपः सदारस्य गुरोः पादौ निपीडयामास, समापयामास च सान्ध्यं विधिम्। भुजोच्छिन्नरिपुः स दोग्ध्रीं नन्दिनीं दुदोह, चकार च भूयोऽपि तस्याः सेवाम्। अन्तिकन्यस्तपूजाप्रदीपां तां दिलिपोऽन्वासाञ्चक्रे, तामिमां सुप्तां विज्ञाय सुप्तो दिलीपः प्रबुद्धया तयैव सह प्रबोधं च भेजे। इत्थं दिलीप एकविंशतिं दिनानि नन्दिनीसेवासु व्यतीयाय। द्वाविंशे तु दिवसे......

(क्रमशः)

# प्राचीन-भारतीय-भौतिकविज्ञानम्*

डॉ० रूपनारायणपाण्डेयः
संस्कृतप्रवक्ता, प्र० ना० रा० इ० का० रामनगरम्,
वाराणसी, २२१००८, उ० प्र०

वेदप्रसूतायां भारतीयायां संस्कृतौ धर्मस्य अध्यात्मवादस्य वा प्राधान्यं विद्यते—इति जनाः मन्यन्ते, किन्तु अत्र भौतिकवादस्य अपि उपेक्षा न अभवत्—इति अपि अन्यत् सत्यम् अस्ति। भौतिकवादप्रधाने काले अस्मिन् सत्यम् एतद् उद्घाटयता विद्वद्वरेण श्री श्रीरामवेलणकरमहाभागेन मराठीभाषायाम् एकं ग्रन्थरत्नं रचितम्। तस्य एव ग्रन्थरत्नस्य संस्कृतानुवादः 'विश्वभाषायाः' प्रधानसम्पादकेन पं० गुलामदस्तगीरबिराजदारमहाभागेन व्यधायि।

ग्रन्थे अस्मिन्—वास्तुविद्या, चित्रशास्त्रम्, शिल्पशास्त्रम्, नाट्यशास्त्रम्, संगीतशास्त्रम्, नृत्यम्, योगशास्त्रम्, कामशास्त्रम्, रसायनशास्त्रम्, गणितशास्त्रम्, अङ्कलेखनम्, अङ्कगणितम्, बीजगणितम्, रेखागणितम्, खगोलगणितम्, फलज्योतिषम्, आयुर्वेदः, शस्त्रक्रिया, कृषिशास्त्रम्, अर्थशास्त्रम्, रत्नपरीक्षा, शब्दकोशरचनाशास्त्रं च—इति शास्त्राणि ग्रन्थनामोल्लेखपूर्वकं संक्षेपेण वर्णितानि। एतेषां शास्त्राणां सर्वे सिद्धान्ताः, सर्वाणि प्रतिपाद्यानि वस्तूनि, एतेषां सर्वेषां ग्रन्थानां परिचयः, एषां समग्रा ऐतिहासिकी परम्परा वा खलु अत्र नैव प्राकाश्यं नीता। यथा विषयप्रवेशे ग्रन्थकृत् स्वयं वदति "एतस्मिन् ग्रन्थे न तु सर्वाणि एव भौतिकशास्त्राणि अन्तर्भूतानि सन्ति। आहारशास्त्रं, पाकशास्त्रं, वनस्पतिशास्त्रं, मृगयाशास्त्रम् इत्यादीनि कतिपयानि शास्त्राणि उपलब्धानि, संस्कृतवाङ्मये च तत्सम्बन्धिवाङ्मयम् अस्ति। परं पूर्वसूरिभिः यद् विज्ञानम् अधिगतं तस्य दिग्दर्शनम्, तत्सम्बन्धिनी ग्रन्थसम्पदा कापि एतस्य ग्रन्थस्य विद्यते—इत्येतस्य दिङ्मात्रदर्शनं करणीयम् इत्येतानेव उद्देशः ग्रन्थे एतस्मिन् गृहीतः" (पृ० ६) अत्र वर्णितानां शास्त्राणां कश्चित् परिचयः ऐतिहासिकविवरणेन साकं विषयवस्तुविवरणेन सार्धं वा यत्र तत्र सविस्तरं वर्तते। लघुकायग्रन्थे अस्मिन् एतेषां शास्त्राणां यद् विवरणम् अत्र विराजते, तत् खलु ग्रन्थकारस्य पाण्डित्यं विविधभौतिकशास्त्रस्वाध्यायक्षमतां च अतितरां प्रकटीकरोति। प्राचीने भारते न केवलं धार्मिकाः सज्जनाः, वैयाकरणाः, कवयः, लेखकाः, नैयायिकाः, मीमांसकाः वा आसन्, अपितु वास्तुविद्याविदः, चित्रकलाकुशलाः चित्रकाराः, शिल्पिनः, नृत्यशास्त्रज्ञाः, रसायनशास्त्रपारङ्गताः पण्डिताः, गणितज्ञाः, आयुर्वेदज्ञाः, शस्त्रकर्मप्रवीणाः वैद्याः च अपि विद्यमानाः आसन्—इति अस्य ग्रन्थस्य अवलोकेन ज्ञायते।

सरलसंस्कृतेन प्रायशः सन्धिरहितेन मराठी-

* प्राचीनभारतीयभौतिकविज्ञानम् (श्री श्रीरामवेलणकररचितस्य मराठीमूलग्रन्थस्य संस्कृतानुवादः) अनु०—पं० गुलामदस्तगीरबिराजदारः। प्रका०—वीणा गोडबोले, देववाणीमन्दिरम्, मुम्बई-४००००४। पृ० सं०-४+१४४। मूल्य ४०/-

ग्रन्थस्यास्य अनुवादकस्य पण्डितगुलामदस्तगीरमहाभागस्य भूरिपरिश्रमः, प्राचीनभारतस्य वैज्ञानिकविषयेषु अभिरुचिः सुरभारतीसाहित्यसंवर्धनानुरागः च अपि नितरां प्रशंसनीयाः। केषाञ्चित् पदानामवबोधाय स्पष्टीकरणाय वा आङ्लभाषायाः शब्दाः अपि अत्र यथास्थानं गृहीताः सन्तिः। तद्यथा—'अस्य काचस्य पृथक्करणान्ते रासायनिकदृष्ट्या तत्र अग्रिमघटकाः प्राप्ताः। सिलिकेट, अलुमिना, फेरिक आॅक्साइड, टिटॅनिआ, कॅल्शम आॅक्साइड (सुधा), मैगनीज आॅक्साइड, अल्कली (सोडियम आॅक्साइड) इत्यादयः। अनेन रासायनिकं विज्ञानम् एतस्य च प्रक्रियाः अधिकाः एव प्रगताः आसन् इति दृश्यते।' (पृ० ७१) यावद् वैज्ञानिककोशानां रचना संस्कृते न भवति, तावद् नीतिः एषा युज्यते एव।

पुरा यन्त्रशास्त्रस्य अपि चमत्कारिणी प्रगतिः अभूत्। तस्य सन्दर्भे यन्त्रसर्वस्वादयः ग्रन्थाः अभूवन्। यन्त्रसर्वस्वस्य वैमानिकं प्रकरणम् आश्रित्य पारिजातपत्रस्य सम्पादकवर्येण डाॅ० प्रकाशमित्र-अवस्थिमहोदयेन शोधकार्यम् अपि विहितम्—इति मया मम गुरुवर्यात् डाॅ० ब्रह्ममित्र-अवस्थिमहाभागात् श्रुतम् आसीत्। ग्रन्थस्य अस्य आगामिनि संस्करणे यन्त्रशास्त्रादीनां परिचयः ग्रन्थोद्धृतसमस्तशास्त्रग्रन्थानां विवरणं च प्रकाशनस्थानोल्लेखपूर्वकम् अपेक्ष्यते। प्राचीनभारतीयभौतिकविज्ञानस्य ये ग्रन्थाः प्रकाशिताः सन्ति, ये च हस्तलिखिताः हस्तलिखितग्रन्थागारेषु विलसन्ति, तेषां समग्रा सूची अस्मिन् अनर्घे ग्रन्थे अपेक्ष्यते, येन तत्तच्छास्त्रग्रन्थेषु अनुरक्तमानसाः विद्वांसः सारल्येन तान् ग्रन्थान् लभेरन्, स्वविज्ञानपिपासां च प्रशमयेयुः। न केवलं विज्ञाने निरतानां संस्कृतविदुषां कृते, अपितु आधुनिकवैज्ञानिकविषयेषु अध्ययनरतानां छात्राणां पाश्चात्यपण्डितानां च कृते अपि अस्य ग्रन्थस्य अध्ययनं संग्रहणं च नितराम् अपेक्षितं भवति।

स्तम्भेऽस्मिन् नवीनानां तथैव प्राचीनानां ग्रन्थानां योग्याः समीक्षाः प्रकाश्यन्ते। अत्र समीक्षार्थं मूलग्रन्थस्य प्रतिद्वयं प्रेषणीयं भवति। यदि कोऽपि स्वयमेव समीक्षां विलिख्य प्रकाशयितुमीहते तर्हि तेन समीक्षया सह मूलग्रन्थस्य एका प्रतिः कार्यालये प्रेषणीया—सं०

---

(२२ पृष्ठस्य शेषांशः)

संस्कृतभाषाया उद्धाराय संस्कृतभाषायां वृत्तपत्राणि, कथापुस्तकानि, रुचिराणि नाट्योपन्यासादीनि विरचितव्यानि। संस्कृतविद्वद्भिश्च परस्परं संस्कृतभाषायैव भाषणं कर्त्तव्यं, संस्कृतेनैव च पत्रव्यवहारो विधेयः।

संस्कृतेऽन्वेषणकार्यस्य महत्यावश्यकताऽस्ति। अन्वेषणेनैव वाङ्मयस्य महत्त्वमुत्कर्षश्चावगम्यते। संस्कृतस्य प्रचारार्थं प्रसारार्थम् इदम् आवश्यकं यत् सर्वेषामपि प्रमुखानामुपयोगिनां संस्कृतग्रन्थानां न केवलं भारतीयासु भाषास्वेव प्रामाणिकोऽनुवादः स्यादपि तु विश्वस्य सर्वास्वेव प्रधानासु भाषासु तेषामनुवादः भवेत्। आर्य-भाषया सहैव संस्कृतमपि सर्वेषु विद्यालयेषु अनिवार्यं स्यात्। एतद् कार्यं सर्वकारप्रयत्नेन तत्सहयोगेन च सम्भवति।

# प्रतिष्ठानवार्ता:

**बिहारशाखा—**

## सत्प्रयासः

विश्व-संस्कृत-प्रतिष्ठानस्य बिहारशाखायाः कार्यकर्तृभिः अन्याभिः संस्थाभिः सहापि सम्पर्कं विधाय प्रजानां कृते आह्वानं कृतं वर्तते यत् आगामिजनगणनाक्रमे एकभाषारूपेण संस्कृतमपि लेखनीयम्। एतस्य कृते बहुविधः प्रयासः क्रियते। राज्यस्य अन्येषु क्षेत्रेषु अपि प्रचारः क्रियते।

## वाल्मीकिजयन्ती-समारोहः

विश्व-संस्कृत-प्रतिष्ठानस्य बिहारशाखायाः पाटलिपुत्र-नगर-समित्या अक्टूबरमासस्य ४ दिनाङ्के वाल्मीकि-जयन्ती-समारोहः आर्यसमाजभवने आयोजितः। अस्य समारोहस्य अध्यक्षता आर्यसमाजस्य उपदेशकैः पं० गङ्गाधरशास्त्रिमहोदयैः कृता तथा च समारोहस्य व्यवस्था समाजस्य मन्त्रिणा श्री रवीन्द्रशर्मणा सम्पादिता। अतिथिरूपेण समुपस्थितैः पाटलिपुत्र-नगर-समित्याः अध्यक्षैः श्रीनिर्मलेशवंशलमहाभागैः भणितं यत् सम्प्रति विकटपरिस्थितौ भारते आदिकवेः वाल्मीकेः रामायणस्य अध्ययनमध्यापनञ्च विशेषरूपेण अपेक्ष्यते। रामस्य चरित्रगतं वैशिष्ट्यं सदैवानुपालनीयम्।

समारोहेऽस्मिन् प्रतिष्ठानस्य प्रचारकैः सर्वश्री पवनकुमारपाण्डेय-शैलन्द्रकुमारसिन्हा, सुनीलकुमारमधुरश्मि-वीणा-अनिलकुमारसिंह-अशोककुमारठाकुरमिथिलेशझा-प्रभृतिभिरपि आदिकवेः रामायणं प्रति श्रद्धा समर्पिता तथा च निर्णीतं यत् प्रतिवर्षं वाल्मीकिजयन्ती आयोजयिष्यते।

## संस्कृत-नाटिका 'आम्रपाली' मञ्चिता

शिवराज-विजयोपन्यासस्य रचयितृभिः पं० अम्बिकादत्तव्यासैः स्थापितस्य बिहार-संस्कृत-सञ्जीवन-समाजस्य १०३ तमो वार्षिकोत्सवः पाटलिपुत्रस्थे 'आइ० एम० ए० हाल' इत्यत्र संस्कृतमये वातावरणे सम्पादितः। समारोहस्य अध्यक्षता बिहारप्रदेशस्य पूर्वमन्त्रिणा श्री बुद्धदेवसिंहेन कृता तथा च मुख्यातिथिरूपेण लब्धख्यातिमनीषिणः डॉ० देवेन्द्रनाथशर्ममहोदयाः सभां समलङ्कृतवन्तः।

अवसरेऽस्मिन् विश्व-संस्कृत-प्रतिष्ठानस्य कार्यकर्तृभिः 'आम्रपाली' इति संस्कृत-नाटिका मञ्चिता। नाटिकायाः मञ्चनं प्रतिष्ठानस्य बिहारशाखायाः प्रचारकैः स्थापितया 'नाट्य-संस्थानम्' इत्यनया संस्थया विहितम्। मञ्चनस्य सर्वाः व्यवस्थाः संस्कृत-संजीवन-समाजेन कृताः। नाटिकायाः लेखिका डॉ० मिथिलेश-कुमारी-मिश्राः सन्ति। नाटिकैषा निर्माणकला-मञ्चस्य निर्देशकैः श्रीधनञ्जयनारायणसिन्हामहोदयैः निर्दिष्टा।

नाटकेऽस्मिन् ये भागं गृहीतवन्तः तेषां नामानि सन्ति—वन्दना-टण्डन, उदयसिंहः, करुणाकरः, विनीताटण्डन, प्रीतमः, सुनीलकुमारचौबे, मोतीपाठकः, कुसुमाकरदुबे, कुमारी सुधा, शशिकलाशुक्ला, अर्चनाशुक्ला, त्रिवेदीकृष्णन्, शैलेन्द्र-कुमार-सिन्हा, पवन-कुमार-पाण्डेयः, अभयशाण्डिल्यः, उपेन्द्रमिश्रः, सञ्जयतिवारी, मिथिलेशझा च।

**पंजाबशाखा—**

## गीताजयन्तीसमारोहः

दिनाङ्कः—२ दिस० १९९० ई०। होशियारपुरे विश्वसंस्कृतप्रतिष्ठानस्य श्रीब्राह्मणसभायाश्च संयुक्तप्रयासेन गीताजयन्ती आयोजिता। विश्वेश्वरानन्द-विश्वबन्धु-संस्कृत-भारतभारती-शोधसंस्थानस्य निदेशकेन डॉ० प्रो० व्रजबिहारीचौबे-महाभागेनाध्यक्षता कृता। कार्यक्रमे स्व० श्री अमृतानन्दभृगुशास्त्रि-स्मारकगीताश्लोकोच्चारणप्रतियोगिता द्वयोः संस्कृतविदुषोरभिनन्दनं चाक्रियत। विभिन्नविद्यालयानां शतशः छात्राः प्रत्याशित्वेन सहभागमगृह्णन्।

प्रतियोगितायां पञ्चमीतः सप्तमीकक्षाणां प्रथमो वर्गः अष्टमीतः दशमीकक्षाणां द्वितीयो वर्गः कृतः। प्रथमवर्गस्य चलविजयोपहारं स० ब० अ० च० उच्च-विद्यालयस्य कु० स्मिता कु० ऋतुश्च विजितवत्यौ। द्वितीयवर्गस्य चलविजयोपहारं विद्यामन्दिरस्य कु० दिव्याझा कु० ऋतुसेठी च विजितवत्यौ।

व्यक्तिगतपुरस्काराणां विवरणं निम्नलिखितरूपेण विद्यते—

| | प्रथमः | द्वितीयः | तृतीयः |
|---|---|---|---|
| प्रथमवर्गः | श्री ब्रजेशशर्मा, | कु० दिव्या वाशिष्ठा, | कु० स्मिता |
| द्वितीयवर्गः | कु० दिव्याझा, | कु० श्रुतिशर्मा, | कु० ऋतुसेठी |

अस्मिन्नवसरे पं० नारायणदासपाराशरस्य (नया-नङ्गलम्) पं० शिवप्रसादशास्त्रिणः (होशियारपुरम्) चाभिनन्दनपत्रोर्णोत्तरीयमानधनैश्च अभिनन्दनम-क्रियत।

अध्यक्षीयभाषणे डॉ० चौबेमहाभागेन संस्कृतस्य सांस्कृतिकगरिम्णो वर्णनेन सहैतत्प्रति शासनस्योपेक्षा-नीतेर्निन्दा चाक्रियत। तेन भारतीयताप्रेमिणः स्वबले-नैव संस्कृतज्ञानार्जनाय तत्प्रचारप्रसाराभ्यां च प्रोत्साहिताः। अन्ते विश्वसंस्कृतप्रतिष्ठानस्य मन्त्रिणा डॉ० दामोदरझा-समाख्येन धन्यवादज्ञापनानन्तरं कार्य-क्रमः समापितः। एतत्कार्यक्रमविषये नगरे व्यापक-रूपेणप्रशंसा जाता।

## मध्यप्रदेशे संसदीयसंस्कृतपरिषदः गठनम्

म० प्र० प्रतिष्ठानशाखायाः सहयोगेन भोपाले मध्यप्रदेशसंसदीयसंस्कृतपरिषदः गठनं राज्यस्तरेण संजातम्। तन्निमित्तं विधायकानामेका अनौपचारिकी गोष्ठी प्रदेश-मुख्यमन्त्रिणः निवासे सम्पन्ना यत्र डॉ० रामजी मस्तकारः अध्यक्षः तथा विधायकः श्री बद्रीलालसोनी सचिवः मनोनीतौ कृतौ। अन्ये पदाधिकारिणः निम्नांकिताः—उपाध्यक्षाः श्री भाऊ साहब पोतनीसः, श्री सोमप्रकाशगिरिः, श्री ललितजैनः श्रीशिवराजसिंह चौहानश्च। सहसचिवः-श्रीचन्द्रकान्त-गुप्तः (संसदीय सचिवः) कोषाध्यक्षः—श्रीरामकृष्ण कुसुमरिया सदस्याः-श्री किशोरलाल वर्मा (राज्यमन्त्री), सुश्री रंजना बघेल (संसदीय सचिव), श्री रावदेश-राजसिंहः, श्री दत्तात्रेय राव जगतापः, श्री कैलाश विजयवर्गीयः च।

## प्रज्ञाभारती डॉ० श्री० भा० वर्णेकरमहोदयं प्रति "महाराष्ट्रगौरव-पुरस्कारः"

महाराष्ट्रशासनेन साहित्य-संगीत-कला-क्रीडादि-क्षेत्रेषु लब्धप्रतिष्ठेभ्यः प्रतिवर्षं दीयमानः "महाराष्ट्र-गौरव-पुरस्कारः" संस्कृतसाहित्यसेवानिमित्तं डॉ० श्रीधर-भास्कर-वर्णेकर-महोदयाय दिसंबर १ दिनाङ्के राजभवने समर्पितः। डॉ० वर्णेकर-विरचितं **शिव-राज्योदयम्** नाम ६८ सर्गात्मकं महाकाव्यम् उद्दिश्यं अयं पुरस्कारः प्रदत्तः॥

**डॉ० श्री भा० वर्णेकरमहोदयेभ्यः 'वाङ्मयचूडा-मणिः' इत्युपाधिः**—१२-१०-९० दिनाङ्के विश्वसंस्कृत-प्रतिष्ठानपक्षतः प्रतिष्ठानाध्यक्षैः डॉ० विभूतिनारायण-सिंहशर्मदेवैः डॉ० श्री भा० वर्णेकरमहोदयेभ्यः तेषां सुदीर्घकालिकसंस्कृतसेवार्थं 'वाङ्मयचूडामणिः' इत्यु-पाधिः प्रदत्तः। अवसरेऽस्मिन् प्रतिष्ठानपक्षतः तेभ्यः अभिनन्दनपत्रमपि प्रादीयत।



# ॥ अभिनन्दनप्रसूनाञ्जलिः ॥

अथ प्रथितप्रशस्तयशःस्तम्भायमानसमेधमानमानमहीयमानमहिमोत्कर्षभासुरभूसुराणाम्, श्रीमदूर्जितशाश्वतशैववैष्णवोभयधामध्यानाभिरामस्फुरितशुभ्रशेमुषीसमुन्मिषिताविरामकमनीय - काव्योपासनानिविष्टमानसानाम्, आबाल्यादुन्मीलितनिसर्गसिद्धसमृद्धरम्यकवित्वानुविद्धप्रकृष्टप्रातिभप्रकाशोद्भासितानाम्, अभिनवकालिदासीयशैलीसरणिसमाश्रयणप्रवणरमणीयवर्णनोत्कृष्टरचनानैपुणीप्रणीतनैकविधकाव्यनाट्यगीताद्यनवद्यगद्यपद्यविद्योतमानविद्याव्रतानाम्, यमनियमोन्नीयमानपवित्रतमजीवनानाम्, राष्ट्रपतिपुरस्कृत्युपस्कृतानाम्, राष्ट्रमहाराष्ट्रगौरवास्पदानाम्, कर्तृत्वानुरूपवक्तृत्वप्रशस्तिसम्भृतानाम्, सुहृत्सहृदयसमाजसमादृतानाम्, नागपुरस्थविद्यापीठस्य संस्कृतविभागाध्यक्षचराणाम्, श्रीमतां तत्रभवतां महाकविश्रीधरभास्करवर्णेकरमहाशयानां शयकुशेशययोः सादरभरं समुपायनीक्रियमाणोऽयमभिनन्दनपद्यप्रसूनाञ्जलिः—

सम्भूतिभूषितविभूतिविभाविताङ्गाऽ-
नङ्गारिभूमिरियमुल्लसितान्तरङ्गा ।
गङ्गाम्भसोद्भवदसम्भवशम्भुसङ्गा,
मङ्गल्यमङ्ग ! तव तुङ्गतरं तनोतु ॥ १ ॥

गीर्वाणवागुदयभूधरभास्करान्त-
र्भूश्रीधरो रविरिवैष कविर्मनीषी ।
भावार्थपूर्णमधुरोत्तमकाव्यवर्णे,
वर्णेकरो जयति कर्णसुधाम्बुवर्षी ॥ २ ॥

प्राज्योन्नतस्य शिवकेसरिणो विजिष्णो
राज्योदयं सुरगिरा विरचय्य चारु ।
काव्यं महत्तरमकारि कवे ! त्वया यत्,
त्वद्विश्वविश्रुतयशोनिकषोपलं तत् ॥ ३ ॥

नाट्येऽप्यकाव्यकमनीयकवित्वकाष्ठां,
गीतानुगीतगुरुतां पटुवाग्मितां च ।
बिभ्रद्, विकस्वरमधुस्वरकाव्यकुञ्जे,
त्वं कम्रकोकिलतुलामतुलां बिभर्षि ॥ ४ ॥

सम्मान्यराष्ट्रपतिलब्धपुरस्कृतित्वं,
स्वीयं कृतित्वमनुविन्दसि नेति सत्यम् ।
तथ्यं तु राष्ट्रियसभाजनमेव तेन
सत्कर्मणाऽजनि जनिस्तव धन्यधन्या ॥ ५ ॥

सारस्वतं प्रियपतिं परिणेतुकामा,
कामानुरक्तकविताविनताऽभिरामा ।
त्वां श्रीधरं नरतनुं भुवि भास्कराभं
वर्णेकरं कविवरं वरयाञ्चकार ॥ ६ ॥

श्रीकालिदाससरणिश्रयणादुपेता,
वैदर्भरीतिरचिता रचनोचिता ते ।
सञ्चारिणी सुचिरदीपशिखासखीव,
त्वां नूतनं कविकुलस्य गुरुं वृणीते ॥ ७ ॥

विष्वग्विभालसितसंस्कृत'विश्वभाषा'
भासाविभासितसभागतसभ्यवर्गः ।
अद्याभिनन्द्यमतिथिं बहुमानपूर्वं
त्वादृक्षमिच्छति सभाजयितुं कवीशम् ॥ ८ ॥

काशीमहापरिसरे गिरिशप्रकाशी-
भूतप्रभूतगरिमप्रसरे पुरेऽस्मिन् ।
स्वस्त्यस्तु ते सुरगिरः सुकवेः शतायुः-
श्रीः, श्रीधरे त्वयि च धीश्चिरमाविरस्तु ॥ ९ ॥

विश्वप्रतिष्ठानसभापतिः श्रीविभूतिनारायणसिंहसूरिः ।
समर्चति त्वामिह वाङ्मयस्य चूडामणिः-प्रोच्चपद-
प्रदानात् ॥ १० ॥

श्रीश्रीधरं भास्करसौम्यसूनुं, वर्णेकरं वर्ण्यकलाप्रवीणम् ।
गीर्वाणवाणीवरदात्मजं त्वां सत्कुर्महे पद्यसुमोपहारैः
॥ ११ ॥

सानन्दमभिनन्दामः सुमनोमानसाश्रयम् ।
सितहंसश्रियं वर्णे वर्णेकरकवीश्वरम् ॥ १२ ॥

वयं स्मः
काशीस्थविश्वसंस्कृतप्रतिष्ठानसदस्याः

विक्रमसंवत् २०४७
कार्तिक-कृष्ण-नवमी
दिनाङ्कः—१२ अक्तूबर १९९०
स्थानम्—मालवीयभवनम्, काशीहिन्दूविश्वविद्यालयः, वाराणसी

# प्रतिष्ठानस्य महाराष्ट्रशाखापक्षतः समर्पितः

## प्रज्ञाभारती—डॉ० श्रीधर-भास्कर-वर्णेकरमहोदयाय

### श्रीसम्मानपत्रोपहारः

चित्रं यस्य यशोऽन्तरायहरणे यो भक्तकल्पद्रुमो
रंगे भक्तमनोमये लसति सन्मूर्तिर्यदीया शुभा।
जीवानां सकलाद्यतापशमने तुल्यो न येन क्वचित्
वन्द्यः सर्वजनैर्महागणपतिः कुर्याज्जगन्मगलम् ॥

अयि मान्यवर !

अत्र भवता संस्कृतक्षेत्रे आजीवनं व्रतबुद्ध्या कृत-निर्वाहिण संस्कृतसेवाकार्यंजातेन नितान्तं मुदितान्तरङ्गा वयं संस्कृतजगतः प्रतिनिधित्वेन भगवता श्रीविश्वनाथेन समाधिष्ठितायां, पुण्यसलिलया भागीरथ्या सेवितायां, भारतदेशस्य सांस्कृतिक-राजधान्यां, संस्कृतविद्या-कल्पलतायाः चिराय आलवालभूतायां, ज्ञाननगर्यां वाराणस्यां श्रीमन्तं भवन्तं सम्मानपत्रोपहारेण साभिनन्दनं सभाजयामः।

मूलतः साताराजनपदस्थ-'वर्णे' ग्रामवासिनि कुलकूटस्थ-साधुपुरुष-श्रीरामबाबानुगृहीते परस्तात्तु विदर्भेषु कृतनिवासे वर्णेकर-कुले सौ० अन्नपूर्णा-भास्कराभिध-पितृभ्यां लब्धजन्मा अत्रभवान् स्वकर्म-भूमित्वेन नागपुरगौरवमवर्धयत्।

अत्रभवता बाल्यादेव समुपासिता संस्कृतसरस्वती गुरुवराणां हनुमन्तशास्त्रिकेवले—म० म० वासुदेव-विष्णु-मिराशी-पं० सरस्वतीप्रसादचतुर्वेदि-प्रमुखानां भवदाय-विद्या-विनय-सेवनेन प्रसन्नानाम् आशीर्वचोभिः अत्रभवति कृतानुग्रहा एम० ए०-काव्यतीर्थ-डी० लिट्० इत्युपाधिभिः अत्रभवन्तं सुमण्डितं व्यधात्। तदनु अत्रभवता श्रीवाग्देवता नवरचित-विविध-साहित्य-कुसुमोपहारेण निरन्तरं सेव्यते। श्रीवाग्देवताया अनितरसाधारणेन प्रसादेन अत्रभवति प्रकटम् अपूर्व-प्रतिभा-निर्माणकौशलं तु नैकेषां काव्यानां प्रणयनेन सफलम्। तेषु पुण्यश्लोक-राष्ट्रपुरुष-छत्रपति-श्री शिवराजस्य वीरचरितं वर्णयद् गुणोज्ज्वलम्, अष्ट-षष्टिसर्गमितं महाकाव्यं, 'शिवराज्योदयम्' विदग्ध-रसिकानां हृदयङ्गममिति 'साहित्य-अकादमी' द्वारा सकलजनस्पृहणीयेन राष्ट्रियपारितोषिकेण मण्डितं भवदीय-महाकवित्वस्य जयपताकायमानं वरीवर्ति।

नाटकान्तं कवित्वमित्युक्तिं सफलयद् भवत्प्रणीतं रमणीयं महानाटकं 'विवेकानन्दविजयम्' रङ्गभूमौ सफलतया अभिनीतं नवरचितनाटकेषु किमपि गणनीयं पदं बिभर्ति।

सम्प्रति तु भगवत्याः शारदाम्बायाः साहित्य-संगीत-स्तन्येन परिपुष्टस्य भवतो वैखरी-साहित्य-संगीतमयीं ललित-संस्कृत-रचनां तीर्थभारत-श्रीराम-संगीतिका-श्रीकृष्णसंगीतिकादिरूपेण निरन्तरायं प्रकाशयति।

एतासु सर्वासु संस्कृतरचनासु आबाल्यात् राष्ट्रिय-स्वयंसेवक-संघस्य प्रभावेण भवन्मनसि लब्धपदायाः समुत्कटायाः स्वदेशप्रीतेः, गुणाधिकेषु भारतभानुः सुपुत्रेषु च परमभक्तेः सततं स्फुरन्ती विमला अन्तर्धारा जनमनःप्रेरणाशीला पठतां मनांसि आवर्जयति।

इतरभाषासु प्रणीतासु विपुलासु साहित्यकृतिषु 'अर्वाचीन-संस्कृत-साहित्य' 'संस्कृत-वाङ्मयकोष' इति विद्वज्जनमान्यं ग्रन्थद्वयं भवत्कीर्तिस्तम्भायमानं तिष्ठति।

पूर्वं सुप्रतिष्ठितः संस्कृतविद्वानिति महाराष्ट्रे राज्यशासनेन सम्मानितः श्रीमान् ऐषमो भारतशासनेन राष्ट्रपतिद्वाराऽपि समर्चितः।

राजसम्मानवत् जनतन्त्रयुगे साक्षाज्जनप्रतिनिधिभूताभिः महासंस्थाभिः 'श्रीकालिदासपुरस्कारेण', प्रज्ञाभारतीमहोपाधिना, डॉ० केशव बलिराम हेडगेवार-प्रज्ञापुरस्कार इति पारितोषिकेण च कृतो लोकसम्मानः शासनजनपदोभयमान्यं भवद्गुणगौरवं संकेतयति।

विद्याव्यसनितया चिराय समुपासिता विद्या नागपुरविश्वविद्यालये संस्कृतविभागाध्यक्षपदं मण्डयता गुरुवरेण श्रीमता शिष्यचित्तापहारिणा अध्यापन-कौशलेन छात्रेभ्यो मुक्तहस्तं वितीर्णा।

अभिनवकाव्यनिर्माणे निपुणा भवदीया लेखनी एकदा संस्कृतपत्रिकारितायामपि लब्धप्रसरा नागपुरस्थ-विश्रुतयशयः 'संस्कृतभवितव्यम्' इति नाम्नः संस्कृत-साप्ताहिकपत्रस्य प्रारम्भे यशस्वि सम्पादनमकरोत्।

पुरा विश्वसंस्कृतपरिषदः प्रतिनिधित्वेन भारते कृतसंचारेण भवता सुबोधसंस्कृतेन मण्डितां रमणीयां वाक्शैलीं समुपास्य संस्कृतवाग्मितायाः स्पृहणीयं निदर्शनं समये समये कार्यवशेन स्वदेशे विदेशेषु च समुपस्थापितम्। विनयमधुरेण अनिर्बाधं प्रसरता वाङ्निष्यन्देन सर्वत्रापि देशे श्रीमता अपूर्वो लोकसंग्रहो विहितः। भवता सम्पादितः सन्मित्रपरिवारो गणनीय-गुणो देशव्यापी विराजते। एवं सर्वोऽपि गुणगणः अत्र-भवता दीर्घकाल-नैरन्तर्य-सत्कारासेवितः कर्तव्यबुद्ध्या स्वराष्ट्रस्य स्वसमाजस्य च सेवां विधातुं भगवत्याः संस्कृतसरस्वत्याः श्रीचरणकमलयोः सादरं समर्पित इति सहधर्मिणी सौ० कमलासनाथम् अत्रभवन्तं भवत्कुलदैवतं भगवान् कालभैरवः स्वलक्ष्यं साधयितुं निरामयेन पुरुषायुषेण, शुक्लेन्दुकलास्पर्धिना यशसा अनवगामिन्या च श्रिया मण्डयतु इति तच्चरणकमलयोः साञ्जलिबन्धं प्रार्थयामहे—

इति वयं स्मः

**प्रतिष्ठानस्य महाराष्ट्रशाखासदस्याः**

---

केयूराणि न भूषयन्ति पुरुषं हारा न चन्द्रोज्ज्वलाः,
न स्नानं न विलेपनं न कुसुमं नालङ्कृता मूर्धजाः।
वाण्येका समलङ्करोति पुरुषं या संस्कृताधार्यते,
क्षीयन्ते खलुभूषणानि सततं वाग्भूषणं भूषणम्॥

## सम्मेलनवृत्तान्तः

श्रीमतां श्रीधर-भास्कर-वर्णेकरमहाभागानां सभाजनं निमित्तीकृत्य १९९० खीष्टाब्दे अक्टूबरमासस्य १२-१३ दिनाङ्कयोः वाराणस्यां विश्वसंस्कृतप्रतिष्ठानस्य अधिकारिणां प्रचारकाणां कार्यकर्तॄणां च चतुस्सत्रात्मकं सम्मेलनम् एकम् आयोगितम् आसीत्। सम्मेलनस्य प्रथमं सत्रं अस्सीक्षेत्रस्थे मुमुक्षुभवने माननीयमोरोपन्त-पिङ्गलेमहोदयस्य आध्यक्ष्ये समारब्धम्। प्रो० रङ्गाचार्यलुमहोदयः मङ्गलगानं कृतवान्। तदनु तत्रोपस्थितानां परिचयज्ञापनानन्तरं महामन्त्रिणा श्रीदेवदत्तमहोदयेन प्रास्ताविकम् अभिभाषणं कृतम्। तस्मिन् अभिभाषणे नागपुरे समायोजितायाः गोष्ठ्याः विवरणं प्रकाशितम्। तत्पश्चात् अखिले भारतवर्षे संस्कृत-प्रचारप्रसारदृष्ट्या सम्पूर्णदेशस्य पूर्वपश्चिमोत्तरदक्षिण-मध्येतिरूपेण पञ्चक्षेत्रशः विभागः निर्धारितः। तद्यथा :—

**पूर्वक्षेत्रम्**—वङ्गप्रदेशः, आसामः, ओरिसा, मेघालयः, मणिपुरम्, नेपालसहितः बिहारः त्रिपुराप्रदेशश्चेति समाविष्टाः। क्षेत्रस्यास्य प्रमुखं स्थानं कलकत्ता इति निर्धारितम्।

**पश्चिमक्षेत्रम्**—महाराष्ट्रम्, गोवा, गुजरात इति प्रदेशाः समाविष्टाः सन्ति। क्षेत्रस्यास्य प्रमुखं स्थानं मुम्बई इति भविष्यति।

**उत्तरक्षेत्रम्**—राजस्थानम्, उत्तरप्रदेशः, हरियाणा, पञ्जाबः, जम्बूकश्मीरश्चेति समाविष्टाः सन्ति। क्षेत्रस्यास्य प्रमुखंस्थानं दिल्लीति निर्धारितम्।

**दक्षिणक्षेत्रम्**—कर्णाटकः, नासिकः, पाण्डीचेरी, आन्ध्रः, तमिलनाडुः, केरलश्चेति समाविष्टाः सन्ति। क्षेत्रस्यास्य प्रमुखं स्थानं सम्प्रति अनिर्धारितम्।

**मध्यक्षेत्रम्**—उत्तरप्रदेशः मध्यप्रदेशश्च परिगणितौ। उत्तरप्रदेशस्य अस्य क्षेत्रप्रमुखः डॉ० नरेन्द्र-प्रतापसिंहः, मुख्यं स्थानं ग्वालियरः, उज्जयिनी, भोपालः वा भविष्यति। क्षेत्रनिर्धारणानन्तरं प्रथमं सत्रं समाप्तं जातम्।

## सम्मानसमारोहः

१२ अक्टूबर १९९० इति दिनाङ्के सायंकाले द्वितीय-सत्रे ४ वादन समये काशी हिन्दूविश्वविद्यालयस्थे मालवीयभवने विश्वसंस्कृतप्रतिष्ठानद्वारा आयोजितः डॉ० श्री० भास्करवर्णेकरमहोदयानां सभाजनोत्सवः प्रतिष्ठा-नाध्यस्य महामहिम-काशीराज डॉ० श्री विभूति-नारायणसिंहदेवस्य आध्यक्ष्ये प्रारब्धः। सर्वप्रथमं अध्यक्षमहोदयस्य प्रस्तावानुसारं दिवङ्गतं श्री पण्डित-कमलापतिमहोदयं प्रति श्रद्धाञ्जलिः समर्पितः।

तदनन्तरं मानपत्रादिप्रदानद्वारा सपत्नीकस्य श्रीधर-भास्करवर्णेकरमहोदयस्य सभाजनं कृतम्। प्रसङ्गतः डॉ० राजेन्द्रप्रसादशर्मा, श्रीवासुदेवद्विवेदी, श्री रेवा-प्रसादः द्विवेदी, गाण्डीवपत्रसम्पादकः श्री राधेश्याम-धरद्विवेदी च डॉ० वर्णेकरमहोदयस्य संस्कृतसेवायाः अनेकविधं महत्त्वम् अवर्णयन्। काशिराजस्य श्री विभूतिनारायणसिंहजूदेवस्य अध्यक्षीयेण भाषणेन सभा-जनोत्सवस्य समारोपो जातः।

**तृतीयसत्रम्** १२-१०-९० इति दिनाङ्के रात्रौ ८ तः ९.३० वादनपर्यन्तं तृतीयं सत्रं प्राचलत्। एतस्मिन् सत्रे प्रमुखतया प्रदेशसमित्या क्रियमाणस्य कार्यस्य विषये विचारः कृतः। तत्र निर्धारितं यत् प्रदेशसमित्या स्वक्षेत्रे

अधस्तनानि कार्याणि अनिवार्यतया करणीयानि। यथा—

१—विविधसंस्कृतसंस्थानां नामधेयानि, संस्कृतकार्यं सङ्केतादीनि च सङ्कलनीयानि।

२—व्यक्तिगतरीत्या संस्कृतकार्यं कुर्वाणानां जनानां नामधेयसङ्केतादीनां सङ्कलनम्।

३—संस्कृतस्य नियतकालिकानां पत्रिकादीनां प्रकाशनकालस्वरूपादिना सह नामधेयसङ्केत-शुल्कादिविषये सङ्कलनम्।

४—संस्कृतपण्डितानां नामधेयसङ्केतादि-परिचय-सङ्कलनम्।

५—एताभिः संस्थाभिः कृतानां कार्याणां वृत्तान्त-सङ्कलनं तथेदं सर्वमपि सङ्कलनं केन्द्रियं कार्यालयं प्रति प्रेषणीयम्।

६—दिल्लीप्रदेशे दिल्लीस्थानां संस्कृतसंस्थानां यथा सङ्कलनंवर्तते तथैव अन्यप्रदेशेष्वपि करणीयम्।

७—वार्तापत्रम् :—

८—(१) साइक्लोस्टाइलयन्त्र द्वारा अथवा मुद्रण द्वारा यथासौन्दर्यं प्रतिमासं केन्द्रं वार्तापत्रं प्रकाशयेत् तथा च तत्पत्रं प्रदेशकार्यालयान् प्रति अन्यसंस्थाः प्रति च प्रेषयेत्।

(२) प्रत्येकप्रदेशेन वार्तापत्रार्थं संस्कृतकार्यवार्ताः प्रत्येकमासस्य अमावास्यापर्यन्तं केन्द्रिय-कार्यालयं प्रति प्रेषणीयाः। अस्मिन् विषये कालमर्यादापरिपालनम् आवश्यकम्। ततः केन्द्रेण प्रत्येकपूर्णिमापर्यन्तं वार्त्तापत्रस्य प्रकाशनं कृत्वा प्रदेशकार्यालयादीन् प्रति प्रकाशितं पत्रं प्रेषणीयम्।

९—दिल्ली इत्यत्र दिल्लीप्रदेशेन संस्कृतसम्भाषण-प्रशिक्षणाय शिक्षकाणां दशदिवसीयः वर्गः शिविरो वा यथासम्भवं आगामिवर्षस्य कस्मिंश्चित् मासे प्रचालनीयः। प्रशिक्षकाणां प्रवासादिव्ययविषये केन्द्रस्य संयुक्तसहयोगेन निर्णयः करणीयः।

१०—सर्वभारतीयकाशिराजन्यासस्य प्रकाशनस्य विक्रयः करणीयः। तस्य ३५ प्रतिशतलाभांशः (कमीशन) ग्राह्यः।

**चतुर्थसत्रम्**–१३-१०-९० इति दिनाङ्के प्रातः ८ तः १० वादनपर्यन्तं सम्मेलनस्य चतुर्थं सत्रं प्राचलत्। तत्र निम्नाङ्किताः निर्णयाः कृताः।

१—केरलप्रदेशेसंस्कृतसम्भाषणवर्गार्थं आचार्यः रामदयालुः प्रशिक्षकत्वेन गमिष्यति।

२—पूर्वक्षेत्रविषये किशोरकुणालेन सह चर्चां कृत्वा संस्कृतसम्भाषणवर्गप्रचालनाय निर्णयः करणीयः। तत्र यथासम्भवं फरवरीमासे वर्गाः भवन्तु।

३—प्रान्तीयसमितिं प्रति संविधानस्य रेखाङ्कनं केन्द्रेण प्रेषणीयं यतः तत्रस्व तन्त्रपञ्जीकरणं सुकरं स्यात्।

४—जनगणनालेखनपत्रस्य परिपूर्त्यर्थं यथाथ ज्ञानं कृत्वा दिल्लीप्रदेशस्य महामन्त्रिणा मन्त्रिणा च अधिकृतपत्रस्य प्रतिलिप्या सह सम्पूर्णः वृत्तान्तः केन्द्रियकार्यालयं प्रति प्रेषणीय इति।

### विश्वसंस्कृतकार्यविषये

१—अखिले विश्वे संस्कृतविषये किं किं जातं, किं किं वा भवति, भविष्यति च इति विषये विस्तृत-सूचना सङ्कलनीया।

अखिलविश्वकार्यसम्पादनाय प्रमुखपदे डॉ० श्री० भा० वर्णेकरमहोदयः कार्यं करिष्यतीति। तेषां सङ्केतः—डॉ० श्री० भा० वर्णेकरः ८१ अभ्यङ्करनगरम्, नागपुरम् ४४००१०१।

अखिलविश्वकार्यविषये महाराजेन सह चर्चाकरणानन्तरं निर्णयो भविष्यति ।

२—प्रदेशसमित्या एवं करणीयं यत् स्वस्वप्रदेशतः ये विदेशं गच्छन्ति तेषां साहाय्येन विदेशस्य संस्कृतकार्यविषये ज्ञानं संग्रहणीयम् । तत् सर्वं च डाँ० वर्णेकरमहोदयं प्रति प्रेषणीयम् । इतः गत्वा प्रतिनिधिभिः लिखितरूपेण एव एतद्विषयिणी वार्त्ता प्रेषणीया । इतः गमनानन्तरं अत्र कृता निर्णयाः विस्मृताः न भवेयुः इति विषये प्रतिनिधयः जागरूकाः भवेयुः ।

३—तिब्बतदेशे संस्कृतसम्बन्धि ज्ञानं सङ्कलनीयम् । स्वस्वप्रदेशे यः तिब्बतदेशीयः वसति तस्य विषये ज्ञानं सङ्ग्रहणीयम् । उत्सवविशेषावसरे विदेशीयाः निमन्त्रितव्याः अथवा केनचिद् अन्यनिमित्तेन तैः सह सम्पर्कः साधनीयः ।

४—पूर्वेशियाखण्डे रामायणपरिषद् भवति । तत्र सहभागितायै प्रयत्नः करणीयः ।

५—भूटानसमस्याविषये वार्त्ताः प्राप्ताः । अस्मत्पक्षतः तद्विषये किमपि न कृतम् इति तु न वस्तुस्थितिः । विश्वहिन्दुपरिषत्सदस्याः केचिद् भूटानं गत्वा विचारविनिमयं कृत्वा प्रत्यागताः सन्ति । भूटानीयाः अपि निमन्त्रिताः सन्ति । तैः च सह सम्पर्कं कृत्वा यथार्थज्ञानाय प्रयन्नः क्रियमाणः वर्तते ।

**विदेशविशये—**

६—सर्वप्रथमं भारते अशोकेन एव धर्मः राजसत्ता च इति एतयोः सम्बन्धः समारब्धः । परन्तु धर्मस्य राजसत्तया सह सम्बन्धः न स्थापनीयः इत्यपि ज्ञानमत्र भारते अस्ति ।

७—विदेशैः सह अथवा विदेशस्थैः जनैः सह संपर्कः प्रदेशीयैः कार्यकर्तृभिः साधनीयः । तथा च प्राप्ता वार्ता अपि नागपुरं प्रेषणीया ।

८—रूमानिया इत्यत्र डाँ० प्रभाकरकवठेकरः संस्कृतपाठनार्थं गतः आसीत् ।

९—विदेशीयैः सह यः पत्रव्यवहारः सः प्रतिलिपिरूपेण नागपुरं प्रति प्रेषणीयः ।

१०—सर्वाधिकतया योगाभ्यासः आस्ट्रेलिया इत्यत्र चलति । ईरानस्थाः छात्राः अभियान्त्रिकस्य अभ्यासार्थम् भारते वसन्ति । इतः अभ्यासं कृत्वा स्वदेशं गच्छन्ति । तैः सह सम्पर्कः करणीयः । नागपुर-कार्यालयार्थं धनव्ययः दीयताम् इति सूचना महाराजाय दातव्या । पं० श्रीपादकवीश्वरेण विवरणं मण्डितम् ।

### भाषानीतिविषये

१—१९६८ वर्षस्य एव भाषानीतिः नूतनशिक्षानीतौ वर्तते । अस्यां भाषानीतौ संस्कृतविषये महत्त्वपूणम् उद्देश्यम् अस्ति—राष्ट्रिय-एकात्मतार्थं संस्कृतम् ।

२—भारतीयभाषाविकासनार्थं संस्कृतम् । प्राथमिकशालातः महाविद्यालयस्तरपर्यन्तं संस्कृतम् । परन्तु कार्यनिर्वहणविषये—केवलं महाविद्यायीयस्तरे एव संस्कृतम् इति मण्डितम् । केन्द्रीयशिक्षामण्डलेन अपि तद् विपरीतमेव कृतम् । एतदर्थं पत्रसंपर्कार्थं प्रारुपं पं० कवीश्वरेण संसाधनीयम् ।

३—महाराष्ट्रप्रदेशे अष्टमवर्गतः ऐच्छिकं संस्कृतमस्ति । संस्कृतं हिन्दी अथवा संस्कृतम् अथवा हिन्दी । एतदर्थं तत्प्रदेशीया अधिकारिणः धन्यवादार्हा एव सन्ति ।

## विश्वसम्पर्कार्थम्

(१) अक्टूबरमासस्य १२-१३ दिनाङ्कयोः सम्पन्ने विश्वसंस्कृतप्रतिष्ठानस्य अधिकारिणां प्रचारकाणाञ्च सम्मेलने विशेषप्रस्तावाः कृताः तदनुसारं सर्वे अधिकारिणः प्रचारकाश्च निवेदिताः यत् ते सर्वे स्वक्षेत्रेषु प्रान्ते वा यदि विदेशस्थानां संस्कृतानुरागिणां संस्कृतसंस्थानां वा विषये काचित् सूचना उपलभ्येत तर्हि तादृशी सूचना केन्द्रियकार्यालयं प्रति प्रेषणीया ।

## प्रदेशीयसमितिसाधनम्

(२) प्रान्ते वि०सं० प्रतिष्ठानस्य प्रभावशालिनी समितिः निर्मातव्या यत्र आयासां संस्कृतसंस्थानां समावेशः भवेत् ।

(३) विश्वभाषायाः कृते समाचारसेवार्थं प्रत्येकमासस्य अमावास्यां यावत् प्रान्तस्य संस्कृतवार्तानां सङ्ग्रहं कृत्वा केन्द्रियं कार्यालयं प्रति प्रेषणीयाः ।

(४) प्रतिष्ठानस्य केन्द्रियसंस्थानां वृद्धिम् अभिलक्ष्य प्रयत्नः कर्त्तव्यः ।

## संस्कृतवर्गाः

(५) प्रान्तेषु संस्कृतवर्गाणां सञ्चालनार्थं प्रचारकाणां व्यवस्था करणीया । सम्प्रति प्रचारकेभ्यः दीयमानमानधनविषये वर्तमानस्थितिः सर्वेषां विदितैव । आयोज्यमानेषु वर्गेष्वपि अक्षयकोषार्थं निधिसंग्रहः करणीयः ।

(६) स्वकीयप्रान्तस्य शिक्षाक्रमे संस्कृतस्य कीदृशं स्थानं वर्तते इत्यस्मिन् विषये अनुसन्धानं कृत्वा प्रत्यक्षपद्धत्या संस्कृतशिक्षायाः व्यवस्थाकृते तत्तत्प्रदेशीयराज्याधिकारिणः प्रेरणीयाः ।

(७) आगमिन्यां जनगणनायां संस्कृतानुरागिणः मातृभाषारूपेण संस्कृतं लेखेयेयुः इति योजना करणीया ।

(८) सर्वप्रदेशेषु अक्षयनिधिवर्धनाय प्रयत्नः कर्त्तव्यः, यतः पूर्वक्षेत्रे प्रचारकाणां कृते एक कोटिरूप्यकपरिमितः अक्षयनिधिः सञ्चेय इति निश्चयः कृतः । अद्ययावत् केवलं चतुर्लक्षरूप्यात्यकः अक्षयनिधिः सञ्चितः । अस्तु, निधि-वर्धनार्थं प्रयत्नः करणीय इति ।

# पत्रिकास्वीकृतिः

| | नाम | अवधिः | सङ्केतः |
|---|---|---|---|
| १. | गाण्डीवम् | साप्ताहिकम् | सम्पूर्णानन्दसंस्कृतविश्वविद्यालयः वाराणसी |
| २. | परिजातम् | मासिकम् | १०५/१९४ प्रेमनगरम्, कर्णपुरम् |
| ३. | भारती | ,, | भारतीभवनम्, बी० १५, न्यू कालोनी जयपुरम्, राजस्थान |
| ४. | सन्यानन्दम् | ,, | देवायतनम्, इब्राहिम रोड, यादवपुरं कलिकाता |
| ५. | सुधर्मा | दैनिक | ५६१ रामचन्द्रअग्रहार, मैसूर |
| ६. | संस्कृतश्रीः | पाक्षिकम् | संस्कृतविद्यालयसमितिः, २८२ टी० टी० के० सलाई, मद्रपुरी |
| ७. | लोकसंस्कृतम् | त्रैमासिकम् | अरविन्दाश्रमः, पाण्डीचेरी |
| ८. | गुञ्जारावः | ,, | श्रीकालेश्वरमन्दिरम्, घुमेरे गल्ली, अहमदनगरम् |
| ९. | अर्वाचीनसंस्कृतम् | ,, | देववाणीपरिषद्, आर ६, वाणीविहारः नवदिल्ली |
| १०. | भारतमुद्रा | द्वैमासिकम् | पुरनाट्टुकरा, पी० ओ० तृचूर, केरलम् |

(क्रमशः)

# पुस्तकस्वीकृतिः

| | नाम | लेखकः | मूल्यम् | प्राप्तिस्थानम् |
|---|---|---|---|---|
| १. | श्रीरामकृष्णसङ्गीतिका | डॉ० श्री० भा० वर्णेकरः | १५ | श्री वैद्यनाथ आयुर्वेदभवनम् लि० नागपुरम्, महाराष्ट्रम् |
| २. | वैशेषिकसिद्धान्तानां गणतोयपद्धत्या विमर्शः | डॉ० गो० ना० डोंगरे | २८ | सम्पूर्णानन्दसंस्कृतविश्व-विद्यालयः वाराणसी |

(क्रमशः)

# पाठकपत्रम्

श्रद्धेयाः सम्पादकमहोदयाः,

विश्वभाषाऽङ्कः सम्प्राप्तः। धन्यवादाः। नैकविषयलेखमण्डितेयं विश्वभाषा नानारसमण्डित-भोजनमिव लालास्राविणी जातेति मोदकरं नः। कु० मिताली देवस्य क्रीडाजगत् शीर्षके कबड्डीनिरूपणं पठितम्। सर्वाङ्गसुन्दरं हि तत्। आशास्यते विश्वभाषा एवमेव निरन्तरं वृद्धिं गमिष्यतीति।

भवदीयः

**सत्यादेवो वर्मा**

सम्पादकः—हितसाधिका,

मा० टाउन, यमुनानगरम् हरियाणा



रामनगरदुर्गः,
वाराणसी, शिवरात्रिः

अयि सुरभारतीस्नेहिनः !

विलसन्तुतरां नः प्रणतयः।

नाविदिता हीयमाना दशा गीर्वाणवाण्याः कस्यापि सहृदयस्य। ईदृशीयं दैन्यावस्था कस्य सुरभारतीपुत्रस्य मनसि क्लेशं न जनयति ? नैष प्रश्नः केवलं भाषायाः अपितु समग्रस्य वैदिकस्य, आध्यात्मिकस्य वाङ्मयस्य भौतिकस्य विज्ञानस्य च रक्षायाः। संस्कृतस्य ह्रासः विश्वस्य दैवसम्पद्ह्रासः। वयं मन्यामहे यत् संस्कृतस्योत्थानं विश्वस्य सर्वाङ्गीणम् उत्थानमेवेति। किन्तु इदानीं विद्यालयेषु शालासु च कापि उत्साहदायिनी स्थितिर्न दृश्यते। सर्वत्र नैराश्यमेव लभामहे।

परन्तु अस्मिन् अन्धतमसे नवोदयसूचिता प्रकाशरेखाऽपि वर्तते। विगतकतिपयवर्षेभ्यः संस्कृतस्नेहपूरितान्तःकरणैः संस्कृतानुरागिभिः स्वकीयैरखण्डप्रयासैः "विश्वसंस्कृतप्रतिष्ठानस्य" माध्यमेन संस्कृतसंवर्धनाय कार्यं सञ्चाल्यते यत्फलस्वरूपेण सर्वत्र भूमण्डले संस्कृतहितसाधकानाम् ऐक्यं पश्यामः।

देवभाषाप्रसारस्य कार्यं यत् पुरतोऽस्ति नः।
न केवलं तदस्माकं कर्तव्यं धर्म एव वा ॥
यत्सत्यं तत्तु पूर्वेषामृषीणामृणशोधनम्।
महाफलं महत्पुण्यमिति मे निश्चितं मतम् ॥

तथापि इत्थं प्रतिभाति यत् कार्यमिदं नाल्पेन कालेन पूर्णतामेष्यति अपितु दीर्घकालिकीं योजनामपेक्षत इति। वयं संस्कृतवाणीं व्यावहारिकीं कर्तुं यत्नशीलाः। एतदर्थं प्रतिष्ठानम् कोटिमुद्रामितम् अक्षयनिधिं निर्मातुकामम्। अनेन कोषेण प्रतिष्ठानं पूर्णकालिककार्यकर्तॄणां सुदृढां सङ्घटनां रचयिष्यति तेभ्यः कार्यकर्तृभ्यश्च संस्कृतसेवार्थे मानधनं देयं भविष्यति, न तु वेतनम्।

पुनश्च अस्य धनस्य उपयोगः पौरोहित्यवर्गसञ्चालनार्थं सरलसंस्कृतशिक्षणवर्गसञ्चालनार्थं च करणीय आस्ते।

उपर्युक्तोद्देश्यं सफलं कर्तुं नेपाल-महाराजाधिराज-पञ्चश्री-वीरेन्द्रवीरविक्रमशाहदेवैः लक्षमिता मुद्राः प्रतिष्ठानाय प्रदत्ताः। एवमेव सर्वैः संस्कृतसेवकैः अस्य अक्षयकोषस्य संवर्धने सहयोगः कर्तव्यः।

एतत् कार्यं सफलयितुं भगवान् श्रीविश्वेश्वरः अस्माकं शक्ति प्रयच्छतु इति तच्चरणारविन्दयोः प्रार्थये। इति।

विभूति नारायण सिंहः

विभूतिनारायणसिंहः शर्मदेवः
काशीनरेशः

---

धनप्रेषणस्थलम् :—

विश्वसंस्कृतप्रतिष्ठानम् व बनारस स्टेट बैंक लि० वाराणसी

दानं S. 80G. आयकर-विधानद्वारा करमुक्ति लभते।

Vol. 4 No. 4 26-1-91 VISHVABHASHA Registration No. R. N. I. 46191/87



Editor : Pandit Gulam Dastagir Abbas Ali Virajadar, Jengali Pir Dargah, Worli, Bombay-400 018, Publisher-Devadutt, Published at Vishva Sanskrit Pratishthanam, Fort Ramnagar, Varanasi-221 008, and printed at the Tara Printing Works, Varanasi 221010.